[1]सन्ना कुञ्चिततारा च कुञ्चिता दृष्टिरिष्यते ॥ ७१
मन्दायमानतारा या[2] पुटैः प्रचलितैस्तथा ।
[3]सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥ ७२
लम्बिता कुञ्चितपुटा शनैस्तिर्यङ्निरीक्षणैः[4] ।
[5]निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७३
मधुरा कुञ्चितान्ता च सभ्रूक्षेपा च सस्मिता[6] ।
समन्मथविकारा[7] च दृष्टिः सा ललिता स्मृता ॥ ७४
वितर्कोद्वर्तितपुटा[8] तथैवोत्फुल्लतारका ।
[9]अधोमुखविकारा च दृष्टिरेषा[10] वितर्किता ॥ ७५
अर्धव्याकोशपक्ष्मा[11] च ह्लादार्धमुकुलैः पुटैः ।
[12]स्मृतार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका[13] ॥ ७६
[14]अनवस्थिततारा च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लनेत्रा[15] च विभ्रान्ता दृष्टिरिष्यते[16] ॥
पुटौ प्रस्फुरितौ यस्य निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ७८
आकुञ्चितपुटापाङ्गा[17] सङ्गतार्धनिमेषिणी ।

---

1 च - सन्निकुञ्चित प - सन्नापतित 2 म मानातारा 3 न - सञ्चारोप 4 च - निरीक्षणा 5 ध - गूढा चकिततारा च 6 च - क्षेपाथ सस्मिता छ - सस्मिता च विकासिनी 7 च - विकासा 8 छ - तथैवोद्वृत्त 9 प - अधोगत न - अधोभागविचारा ङ - अधोगतविचारा 10 प - दृष्टिरिष्टा 11 प - तारा च 12 छ - स्मितार्धं 13 ध - ललिततारका 14 ङ - विभ्रान्ततारका या तु विभ्रान्तपुट दर्शना छ - अनवस्थितनेत्रा या तथा विभ्रान्ततारका 15 छ - नयना प - मध्या च 16 ङ - उच्यते 15 प - पुटापाङ्ग ।

मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा[1] स्मृता ॥ ७९

[2]विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी[3] ।
अनवस्थिततारा च विकोशा दृष्टिरिष्यते[4] ॥ ८०

त्रासोद्वृत्तपुटा या तु[5] तथोत्कम्पिततारका ।
[6]संत्रासोत्फुल्लमध्या च [7]त्रस्ता दृष्टिरुदाहृता ॥ ८१

[8]आघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥ ८२

किञ्चिदाकुञ्चितपुटा [9]किञ्चिल्लुलिततारका ।
[10]अनवस्थितसञ्चारा दृष्टिर्मध्यमदे[11] भवेत् ॥ ८३

[12]सनिमेषाऽनिमेषा च किञ्चिद्दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता[13] ॥ ८४

इत्येवं लक्षिता ह्येषाः[14]षट्त्रिंशद्दृष्टयो मया ।
[15]सहजा भावजाश्चासां विनियोगं निबोधत ॥ ८५

[16]रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
[17]शृणुत व्यभिचारिण्यः सञ्चारिषु यथास्थिताः[18] ॥ ८६

---

1 न - दृष्टिर्वै केकरा 2 छ - विकासितोभय च - विकोशितभय 3 प - च निमेषिणी 4 ड - विशोका दृष्टिरुच्यते 5 प - त्रासोत्कम्पित 6 प - त्रासादुत्फुल्ल 7 ड - स्रस्ता न - सुप्ता 8 ड - व्याघूर्णमान 9 ड - न - ह्यनवस्थिततारका 10 ड - तथा चलितपक्ष्मा च न - तथा लुलितपक्ष्मा च 11 छ - मध्ये मदे 12 ड - सनिमेषोन्निमेषा ध - सन्निमेषोन्निमेषा 13 न - अधमे तु प्रकीर्तिता 14 ड - ह्येताः 15 म - सहजा 16 ड - रसजा स्वरसेष्वेव प - रसास्पदा 17 ड शृणुध्वं 18 ड - हि ताः ।

शून्या दृष्टिस्तु चिन्तायामभितप्तापि कीर्तिता[1] ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८७
श्रान्ता श्रमार्ते स्वेदे च लज्जायां ललिता[2] तथा ।
अपस्मारे तथा [3]व्याधौ ग्लान्यां ग्लाना[4] विधीयते ॥
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु[5] मुकुला दृष्टिरिष्यते ॥ ८९
[6]कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः[7] ॥ ९०
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
[8]धृतौ हर्षे सललिता स्मृतौ तर्के वितर्किता[9] ॥ ९१
[10]आह्लादिष्वर्धमुकुला[11] गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे संभ्रमे विभ्रमे तथा ॥ ९२
[12]विप्लुता चपलोन्माददुःखार्तिमरणादिषु ।
आकेकरा दुरालोके[13] विच्छेदप्रेक्षितेषु च[14] ॥ ९३
[15]विबोधगर्वामर्षौग्र्यमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा च मदेष्विति[16] ॥ ९४

---

1 च - च कीर्तिता प - स्तम्भे चापि प्रकीर्तिता 2 प - लज्जिता 3 छ - बाधो 4 प - ग्लाना ग्लाने 5 ड - सुखार्तेषु 6 - न कुञ्चितं सूति था दृष्टा प - कुञ्चितासूचितानिष्टनिष्प्रेक्षा 7 ड - ह्यभियातातितापयोः 8 प - ललितालिलितार्थेषु स्मृता तर्के च 9 ष - स्मृता तर्के च तर्किका 10 ड - आह्लादेष्वर्ध 11 ध - गण्ड 12 छ - विधुरा चपलोन्माद ड - विप्लुता चापलोन्माद प - विप्लुता च चलोन्माद 13 ड - विच्छेदे 14 प्रोषितेषु च 15 प - विबाधामर्ष गर्वौग्र्य ङ निबोधामर्षगर्वौग्र्य ध - निबोधामर्षगर्वौग्र्य 16 छ - मदेष्वपि.

षट्त्रिंशद्दृष्टयो ह्येता यथावत्समुदाहृताः[1]।
रसजानां तु दृष्टीनां भावजानां तथैव च॥ ९५
तारापुटभ्रुवां कर्म गदतो मे निबोधत।
भ्रमणं वलनं[2] पातश्चलनं संप्रवेशनम्॥ ९६
विवर्तनं समुद्वृत्त निष्क्रामः प्राकृतं तथा।
[एतानि नवकर्माणि ताराकर्म द्विजोत्तमाः॥ ९७
शृणुध्वं लक्षणं तावत्सांप्रतं प्रीतितः स्फुटम्]
[3]पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम्॥ ९८
वलनं गमनं त्र्यश्रं पातनं स्रस्तता तथा।
चलनं कम्पनं [4]ज्ञेयः प्रवेशोऽन्तः प्रवेशनम्॥ ९९
विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः।
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम्[5]॥
[6]अथैषां रसभावेषु[7] विनियोगं निबोधत[8]॥ १०१
भ्रमणं वलनोद्वृत्ते निष्क्रामो [9]वीररौद्रयोः।
निष्क्रामणं सचलनं[10] कर्तव्यं हि [11]भयानके॥ १०२
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते।
पातनं करुणे कार्यं निष्क्रामणमथाद्भुते॥ १०३
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम्[12]।

---

1 ड - प्रतिपादिताः 2 न - पातं 3 प - पर्यस्तमण्डला वृत्ति ड - पर्यस्तं 4 प - ज्ञेयात्प्रवेशान्तः 5 ध - प्राकृतस्तु स्वभावजः 6 प - तथैषां 7 ड - रसभावानां 8 प - शृङ्गारे च विवर्धनम्। 9 ड - वलनोद्वृत्तं कर्तव्यं 10 ड - सचलनं ध - स्ववलनं च - संवलनं 11 प - तु 12 ध - विवर्तनम्।

स्वभावसिद्धमेवैतत्कर्म लोकक्रियाश्रयम्[1] ॥ १०४
एवं रसेषु भावेषु [2]ताराकर्माणि योजयेत्।
[3]अथात्रैव प्रवक्ष्यामि प्रकारान् [4]दर्शनस्य तु॥ १०५
समं साच्यनुवृत्ते [5]च ह्यालोकितविलोकिते।
प्रलोकितोल्लोकिते चाप्यवलोकितमेव च॥ १०६
समतारञ्च सौम्यञ्च यद् दृष्टं तत्समं स्मृतम्।
[6]पक्ष्मान्तर्गततारं य[7]त्त्र्यश्रं [8]साचीकृतं तु तत्॥
रूपनिर्वर्णनायुक्तमनुवृत्तमिति स्मृतम्[9]।
सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते॥ १०८
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम्।
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यध॥ १०९
[10]इत्येष दर्शनविधिः सर्वभावरसाश्रयः।
[11]तारागतोऽस्यानुगतं पुटकर्म निबोधत॥ ११०
उन्मेषश्च निमेषश्च प्रसृतं[12] कुञ्चितं समम्।
विवर्तितं स स्फुरितं[13] पिहितं सविताडितम्[14] ॥ १११
विश्लेषः पुटयोर्यस्तु [15]स उन्मेषः प्रकीर्तितः।
[16]समागमो निमेषः स्यादायामः प्रसृतं भवेत्[17] ॥

1 प - नाट्यक्रियाश्रितम् 2 च-ताराकर्म नियोजयेत् ध - तारकर्माणि 3 ङ - तथा तत्रैव वक्ष्यामः 4 न - प्रकारं 5 ङ - तु आलोकित 6 छ - पक्ष्मानुगतारं 7 प - च 8 म - साचिकृतं 9 ङ - स्फुटम् 10 प - इत्यष्टौ 11 प - तारागतस्यानु 12 न - प्रकृतं 13 ङ - प्रस्फुरितं 14 प - सविताल्किम् ङ - सवितालितम् च - सविलासितम् 15 प - समुन्मेषः ङ - स तून्मेषः 16 ङ - समागतो 17 ङ - आयामस्तु प्रसारितम्।

आकुञ्चितं कुञ्चितं स्यात्समं स्वाभाविकं स्मृतम्।
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा॥ ११३
स्थगितं पिहितं प्रोक्तमाहतं तु वितालितम्[1]।
अथैषां रसभावेषु विनियोगं निबोधत॥ ११४
क्रोधे [2]विवर्तितं कार्यं निमेषोन्मेषणैः सह[3]।
[4]विस्मयार्थे च हर्षे च वीरे च प्रसृतं स्मृतम्॥ ११५
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम्।
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा[5]॥ ११६
सुप्तमूर्छितवातोष्णधूमवर्षाञ्जनार्तिषु[6]।
नेत्ररोगे च पिहितमभिघाते[7] वितालितम्॥ ११७
[8]इत्येषु रसभावेषु तारकापुटयोर्विधिः।
कार्यानुगतमस्यैव भ्रुवोः कर्म निबोधत॥ ११८
[9]उत्क्षेपः [10]पातनं चैव भ्रुकुटी चतुरं तथा[11]।
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा॥ ११९
[12]भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा।
[13]अनेनैव क्रमेणैव पातनं स्यादधोमुखम्॥ १२०

---

1 च - विलासितम् 2 म - विवर्तकं 3 प - निमेषोन्मेषणं तथा 3 ड - विस्मयार्थेषु हर्षेषु वीरे चैव प्रसारितम् 5 ड - भवेत् 6 ड - वर्षाशनार्थिषु न - वर्षाञ्जनादिषु छ - धूम्ररूक्षाञ्जनार्तिषु 7 ड – अभियाते च - विलासितं 8 ड - इत्येवं 9 ड - उत्क्षेपं 10 प - पातितं 11 ड - भ्रुवोः च - भ्रुवो-रुद्गतिः 12 प - एकस्य पार्श्वयोश्चापि पातनं स्यादधोगतं, ड - एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम् ब - तथैव पातनमधो भ्रुवोर्यत्स्यात्तु पातनम् न - तथैव पातनमधो भ्रुवोरस्यातु पातनम्(?)

[1]भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटी परिकीर्तिता[2]।
चतुरं किञ्चिदुच्छ्वासान्मधुरायतता भ्रुवोः[3] ॥ १२१

[4]एकस्या हि द्वयोर्वापि मृदुभङ्गस्तु कुञ्चितम्[5]।
एकस्या एव [6]ललितादुत्क्षेपाद्रेचितं भ्रुवः ॥ १२२

सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम्।
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ॥ १२३

[7]कोपे वितर्के हेलायां लीलादौ[8] सहजे तथा।
दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥ १२४

उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि।
असूयिते जुगुप्सायां हासे[10]घ्राणे च पातनम्॥ १२५

क्रोधस्थानेषु दीप्तेषु योजयेद्भ्रुकुटीं बुधः।
शृङ्गारे ललिते सौम्ये सुखस्पर्शे प्रबोधने[11] ॥ १२६

एवं विधेषु भावेषु चतुरं तु प्रयोजयेत्।
[स्त्रीपुरुषयोश्च सल्लापे नानावस्थान्तरात्मके]॥ १२७

मोट्टायिते कुट्टमिते तथा च[12] किलिकिञ्चिते।
[13]निकुञ्चितं च कर्तव्यं [14]नृत्ते योज्यं तु रेचितम् ॥

---

1 न - द्वयोः 2 न - परिवर्तिता 3 ड - मधुरायतयोर्भ्रुवोः 4 म - एकस्या वा द्वयोर्वापि प - एकस्यास्तूभयोर्वापि 5 प - भागेन कुञ्चितम् ड - भङ्गेन कुञ्चितम् च - भङ्गो निकुञ्चितम् 6 प - वलनात् ब - एकस्या ललितोत्क्षेपाद्भ्रमणं रेचितं स्मृतम्। 7 म - लोपे वितर्के लीलायां लीलासौ 8 न - लीलायां हेलादौ 9 ड - श्रवणे दर्शने 10 ड - हास्ये 11 ड - स्पर्शे च चतुरं भवेत् 12 न - विलासे त - विलापे. 13 ड - विकुञ्चितं 14 ड - नृत्तयोज्यं.

अनाविद्धेषु भावेषु कुर्यात्स्वाभाविकं तथा[1] ।
[2]इत्येवं तु भ्रुवोः प्रोक्तं नासाकर्म निबोधत ॥ १२९
नता मन्दा विकृष्टा[3] च सोच्छ्वासाथ विकूणिता[4] ।
[5]स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता[6] ॥
नता मुहुःश्लिष्टपुटा मन्दा तु निभृता स्मृता ।
[7]विकृष्टा फुल्लितपुटा सोच्छ्वासाकृष्टमारुता ॥ १३१
विकूणिता संकुचिता समा स्वाभाविकी स्मृता ।
नासिकालक्षणं ह्येतद्विनियोगं निबोधत ॥ १३२
[8]मदोत्कम्पसमायुक्ते नारीणामनुरोधने ।
निःश्वासे च नता कार्या नासिका नाट्ययोक्तृभिः ॥
निर्वेदौत्सुक्यचिन्तासु मन्दा शोके च योजयेत्[9] ।
[10]तीव्रगन्धे विकृष्टां तां रौद्रे वीरे तथैव च ॥ १३४
[11]इष्टघ्राणे तथोच्छ्वासे दीर्घोच्छ्वासां प्रयोजयेत् ।
[12]विकूणिता च कर्तव्या जुगुप्सासूयितादिषु ॥ १३५
[13]कार्या शेषेषु भावेषु तज्ज्ञैः स्वाभाविका तथा ।

---

1 त - विद्यात्स्वाभाविकं बुधः 2 छ - सप्त भ्रुकुट्यः प्रोक्ताः ध - इत्येवं ढ - भ्रुवोः कर्म 3 न - मन्दावकृष्टा 4 न - सोच्छ्वासा सविकूणिता प - विघूर्णिता. च - सोच्छ्वासा तु विकूणिता 5 च - स्वाभाविकी. 6 च - मता. 7 ड - विकृष्टोत्फुल्लित 8 ड - विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता 9 ड - मन्दा शोके तु कीर्तिता न - मन्दा शोके च कीर्तिता. 10 प - विप्रकृष्टा तीव्रगन्धे श्वासरोषभयादिषु. ड - विकृष्टा तीव्रगन्धे च श्वासरोषभयार्तिषु. च - विकृष्टा तीव्रगन्धाध्वश्वासरोषभयादिषु 11 प - सोच्छ्वासे मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च. 12 प - विघूर्णितोक्ता हास्येषु जुगुप्सायामसूयिते 13 प - स्वाभाविकं शेषभावेष्वित्येवं नासिका स्मृता.

क्षामं फुल्लं च [1]घूर्णं च कम्पितं कुञ्चितं समम्[2] ॥
षड्विधं गण्डमुद्दिष्टमस्य[3]लक्षणमुच्यते ।
[4]क्षामं चावनतं ज्ञेयं फुल्लं विकसितं भवेत् ॥ १३७
विततं [5]घूर्णमात्रोक्तं काम्पितं स्फुरितं भवेत् ।
स्यात्कुञ्चितं संकुचितं समं प्राकृतमुच्यते ॥ १३८
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ।
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेव च[6] ॥ १३९
[7]घूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम् ।
कुञ्चितं च सरोमाञ्चं[8] स्पर्शे शीते भये ज्वरे ॥ १४०
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति[9] ।
विवर्तनं [10]कम्पनं च विसर्गो विनिगूहनम् ॥ १४१
[11]संदष्टकं समुद्गं च षट्कर्माण्यधरस्य तु ।

---

1 ड - पूर्णं 2 ब - तथैव च विकाम्पितम् 3 प तस्य
4 म - क्षामं फुल्लं च घूर्णं च तथैव च विकम्पितम् ।
सरोमाञ्चं कुञ्चितं च गण्डं स्यात्प्राकृतं तथा ॥
कृशं क्षामं च विज्ञेयं फुल्लं विकासितं तथा ।
घूर्णं सोच्छ्वासमिच्छन्ति वेपितं स्याद्विकाम्पितम् ॥
सरोमाञ्चं पुलकितं सङ्कुचितं निकुञ्चितम् ।
प्राकृतं च स्वभावस्थमथ भावेषु योजयेत् ॥
क्षामं दुःखेषु कर्तव्यं फुल्लं हर्षेषु योजयेत् ।
घूर्णमुत्साहगर्वेषु रोमहर्षे विकाम्पितम् ।
कुञ्चितं वेदनायां तु हर्षेचैव विकम्पितम् ।
स्पर्शस्य ग्रहणे कार्यं गण्डं रोमाञ्चसंयुतम् ।
स्वाभाविकं स्वभावे तु नासाकर्मोच्यतेऽधुना ॥
5 प - पूर्णमात्रोक्तं न - घूर्णमत्रोक्तं 6 प - प्रहर्षोत्फुल्लमिष्यते ड - प्रहर्षे फुल्लमिष्यते 7 ध - पूर्णं 8 म - सरोमाञ्च ड - सरोमाञ्चे 9 न भवेदिह
10 न - कम्पितं 11 न - संदष्टकं

विकूणनं विवर्तस्तु वेपनं [1]कम्पनं स्मृतम् ॥ १४२
विनिष्कामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
[2]संदष्टकं द्विजैर्दष्टं समुद्गः सहजोन्नतिः[3] ॥ १४३
[4]इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत ।
असूयावेदनावज्ञाहास्यादिषु[5] विवर्तनम् ॥ १४४
कम्पनं वेदनाशीतभयरोषजवादिषु[6] ।
स्त्रीणां विलासे बिब्बोके[7] विसर्गो रञ्जने तथा[8] ॥
विनिगूहनमायासे सन्दष्टं क्रोधकर्मसु ।
समुद्गस्त्वनुकम्पायां चुम्बने[9] चाभिनन्दने ॥ १४६
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं [10]खण्डनं छिन्नं चुक्कितं लेहितं समम्[11] ॥ १४७
दष्टञ्च दन्तक्रियया चिबुकं न्त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्षः संस्फोटः खण्डनं[12] मुहुः ॥ १४८
छिन्नं तु गाढसंश्लेषश्चुक्कितं दूरविच्युतिः[13] ।
लेहनं जिह्वया लेहः[14] किञ्चिच्छ्लेषः समं भवेत्॥ १४९
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ।

---

1 म - संक्रान्तवक्रीकरणं विवर्तनमिति स्मृतम् ।
वेपनं चापि विज्ञेयमधरस्य तु कम्पनम् ॥

2 ड - संदष्टको 3 च - समुद्वृत्तं समुद्गकः ड - समुद्गः सहिता गतिः ध - समुद्गः सहितोद्गतिः 4 प - इत्येषु 5 ड - लज्जाहास्यादिषु च - अवज्ञालस्यादिषु छ - अवज्ञालज्जादिषु 6 च - कोपशीतार्तिभयरोगजपादिषु प - वेपनं शीतभयरोग ड - वेपनं शीतज्वररोषजवादिषु 7 म - विम्बोके 8 च - विसर्गः सुरते स्मृतः 9 च - समुद्गस्त्वतिकम्पाङ्गधूननेचाभिनन्दने छ - समुद्गःस्तनकम्पायां चुम्बने 10 प - खञ्जनं प – त्वक्षितं ड - चुक्षितं लेहनं-नं - चुकितं लेहनं 11 प - तथा 12 प - खञ्जनं ब - संभेदः खण्डनं 13 च - चिाकितं दूरमुद्यतं ड - चुक्षितं दूरविच्युतिः प - त्वक्षितं दूरविप्लुतं 14 च - किञ्चिश्चेष्टः ।

भयशीतज्वरक्रोध[1]ग्रस्तानां कुट्टनं भवेत् ॥ १५०
[2]जपाध्ययनसल्लापभक्ष्ययोगे च[3] खण्डनम् ।
[4]छिन्नं व्याधौ भये शीते व्यायामे रुदिते मृते[5] ॥ १५१
जृम्भणे चुक्कितं कार्यं तथा लौल्ये च[6] लेहनम् ।
समं स्वभावभावेषु सन्दष्टं क्रोधकर्मसु ॥ १५२
इति दन्तोष्ठजिह्वानां करणे चिबुकाक्रिया[7] ।
[8]विनिवृत्तंच विधुतं निर्भुग्नं[9] भुग्नमेव च ॥ १५३
[10]विवृतञ्च तथोद्वाहि कर्माण्यत्रास्यजानि तु ।
[11]व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥ १५४
[12]अवाङ्मुखत्वं निर्भुग्नं व्याभुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च[13] विवृतमुद्वाह्याक्षिप्तमेव च[14] ॥ १५५
विनिवृत्तमसूयायामीर्ष्याकोपकृतेषु च[15] ।
अवज्ञाविहतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ॥ १५६
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥ १५७
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावतः[16] ।
निर्वेदौत्सुक्यचिन्तासु तथा विनयमन्त्रणे[17] ॥ १५८

---

1 ड - जराव्याधि न - ज्वरव्याधि 2 ड - जप्याध्ययन 3 च - योगेषु 4 प - चिन्ता 5 ड - हषितेक्षिते न-हषिते मृते प - रुषिते द्रुमे च - कूजिते मृते ध-रुषिते द्रुते 6 प - लेह्ये तु 7 प - करणाच्चिबुकाक्रिया 8 च - छ - ब - आद्शेष्वष्टौ श्लोका न सन्ति 9 ड - प - निभुग्नं 10 ड - निवृत्तं 11 प – स्याद्वृत्तं 12 ड - अवाङ्मुखश्च 13 म - विहृत 14 ड - उद्वाह्युत्क्षिप्तमेव तु 15 ड-ईर्ष्याक्रोधकृतेन च 16 ड - स्वभावजम् 17 प - च विनिमन्त्रणे.

[1]विवृतं वापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे ॥ १५९
एवं नामेति कार्यश्च कोपवाक्ये विचक्षणैः ।
समसाचीकृताद्युक्तं [2]यच्च दृष्टिविकल्पनम्[3] ॥ १६०
[4]तज्ज्ञैस्तदनुसारेण कार्यं तदनुगं मुखम् ।
अथातो मुखरागस्तु[5] चतुर्धा संप्रकीर्तितः[6] ॥ १६१
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः[7] ।
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ॥ १६२
मध्यस्थादिषु भावेषु[8] मुखरागः प्रकीर्तितः[9] ।
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ॥ १६३
वीररौद्रमदाद्येषु[10] रक्तः स्यात्करुणे तथा ।
भयानके सबीभत्से श्यामं संजायते मुखम् ॥ १६४
एवं भावरसार्थेषु[11] मुखरागं प्रयोजयेत् ।
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः ॥ १६५
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ।
[12]शारीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ॥ १६६
[13]द्विगुणां लभते शोभां रात्राविव निशाकरः ।
[14]नयनाभिनयोऽपि स्यान्नानाभावरसस्फुटः ॥ १६७

---

1 ड - विवृत्तं चापि 2 ड - कृताद्युक्ता 3 न - विकल्पने ड - विकल्पितम्
4 ड - तज्ज्ञैस्तेनानुसारेण 5 प-मुखरागश्च 6 ड - परिकीर्तितः च - स च कीर्तितः
7 प- अर्कसंश्रयः 8 प - रागेषु 9 न - प्रयोक्तृभिः 10 ड - भयाद्येषु 11 प - रसास्तेषु 12 न - शरीराभिनयो 13 ड - द्विगुणं 14 न - नयनाभिनयोऽल्पोऽपि नानाभावरसान्वितः.

मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ।
[1]यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥ १६८
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ।
[2]इत्येष मुखरागस्तु प्रोक्तो भावरसाश्रयः[3] ॥ १६९
अतः परं प्रवक्ष्यामि ग्रीवाकर्माणि वै द्विजाः[4] ।
समा नतोन्नता त्र्यश्रा रेचिता कुञ्चिताञ्चिता ॥ १७०
वलिता च[5] विवृत्ता च ग्रीवा नवविधार्थतः[6] ।
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु[7] ॥ १७१
नता[8] नतास्योऽलङ्कारे बद्धे कण्ठावलम्बने ।
[9]उन्नताभ्युन्नतमुखी ग्रीवा चोर्ध्वादिदर्शने[10] ॥ १७२
त्र्यश्रा पार्श्वगता ज्ञेया[11] स्कन्धभारे च[12] दुःखिते ।
[13]रेचिता[14] विधुता भ्रान्ता भावे मथननृत्तयोः[15] ॥ १७३
कुञ्चिताऽकुञ्चिता मूर्ध्नि[16] भारिते[17] गलरक्षणे ।
अञ्चिताऽपसृतोद्बद्धकेशाकर्षोर्ध्वदर्शने[18] ॥ १७४
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे[19] च वीक्षिते ।
[20]विवृत्ताभिमुखीभूता[21] स्वस्थानाभिमुखादिषु ॥ १७५

---

1 ध - यस्मान्नेत्रं प्रसर्पेत्तु 2 ड - इत्येवं 3 प - मुखरागास्तु प्रोक्ता भावरसाश्रयाः 4 ध - द्विजकर्म द्विजोत्तमाः 5 ड - निवृत्ता 6 प - नवविधा स्मृता- 7 प - सभारञ्जनकर्मसु 8 न - नतास्येऽलङ्कारे च - नतास्यालङ्कारबन्धे 9 न - उन्नता ह्युन्नत 10 प-ग्रैवेयेऽध्वादिदर्शने. न-चोर्ध्वानिदर्शने ड-चोर्ध्वानिवेशने 11 च- चैव 12 प-तु ड - अथ 13 प - विचिता 14 च - विधुत ड - विबुधा 15 न - भावोन्मथननृत्तयोः प-कथननृत्तयोः 16 च - मूर्ध्नो ड - कुञ्चिते मूर्ध्नि 17 प - धारिते 18 ड - कर्षोर्ध्वदर्शने छ - कर्षे च दर्शने 19 प - तु 20 ड - निवृत्ता 21 ध - सुस्थानाभि.

इत्यादिलोकभावार्था [1]ग्रीवा भेदैरनेकधा।
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि[2] ॥
शिरसः कर्मणा कर्म ग्रीवायाः संप्रवर्तते।
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ॥ १७७
अङ्गकर्माणि शेषाणि गदतो मे निबोधत।

इति भारतीये नाट्यशास्त्रे उत्तमाङ्गा-
भिनयो[3] नामाष्टमोऽध्यायः।

---

1 ड - भङ्गैः प - भावैः 2 ङ - च 3 प-उपाङ्गविधानं ड - उपाङ्गाभिनये

श्रीः

# नाट्यशास्त्रम्

## नवमोऽध्यायः ।

[1]एवमेतच्छिरोनेत्रभ्रूनासोष्ठकपोलजम्[2] ।
[3]कर्म लक्षणसंयुक्तमुपाङ्गानां[4] मयोदितम् ॥ १
हस्तादीनां प्रवक्ष्यामि कर्म नाट्यप्रयोजकम्[6] ।
यथा येनाभिनेयं च गदतो मे निबोधत[7] ॥ २
हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः[8] ।
लक्षणं सम्प्रवक्ष्यामि [9]विनियोगं च तत्त्वतः ॥ ३

---

अलङ्क्रियन्ते गात्राणि यत्स्पर्शविवशस्थितेः ।
स्पर्शतन्मात्रवपुषं संस्तुमः परमेश्वरम् ॥

शिष्याणामनुसन्धानवृद्धये प्राक्तनार्थोपसंहारपूर्वकं वक्ष्यन्तरमासूत्रयन्नाह एवमेतदित्यादि[1] । क्रियत इति कर्म अभिनेयमित्यर्थः । हस्तादीनामिति पादान्तानामनेनाध्यायेन लक्षणं वक्ष्यामि । [2]विनियुज्यतेऽनेनेति (विनियोगः) तद्यथा—'पयोद्रीन्द्रवर्षधारानिरूपण[3](९-२०)' मित्यादि, तत्र चेतिकर्तव्यता—तद्यथा—'प्रविरलचलिताङ्गुलि' (९-२१) रित्यादि । तत्त्वत[4] इति । अभिनयस्य द्विविधा [5]इतिकर्तव्यता लोकधर्मी नाट्यधर्मी च । आद्या द्विविधा—[6]चित्तवृ-

---

1 म - इत्येतच्छिरसो नेत्र 2 क - कपोलकम् 3 ड - कर्मरक्षण 4 च - अपाङ्गनाम् 5 म - हस्तानां तु द - हस्तानां च ब भ - योनौस्ति । 6 न - प्रयोगजम् 7 ड - तन्मे निगदतः शृणु । 8 झ - पादतः । ज - पादकः 9 ब - कर्मनाट्य-प्रयोगजम् । यथा येनाभिनेयं च तन्मे निगदतः शृणु.

1 एवमेनमित्यादि । 2 विनियुज्यतेऽस्मिन्निति च 3 निरूपमिति 4 तत इति । 5 चेति 6 चित्तवृत्त्यात्मकेनाशुभावस्य

पताकस्त्रिपताकश्च [1]तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च [2]शुकतुण्डस्तथैव च ॥ ४
[3]मुष्टिश्च शिखराख्यश्च कपित्थः [4]खटकामुखः ।
सूच्यास्यः पद्मकोशः सर्पशिरा मृगशीर्षकः[5] ॥ ५
[6]काङ्गूलकोऽलपद्मश्च चतुरो भ्रमरस्तथा ।
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा ॥ ६

---

त्यर्पकत्वेनानुभावस्य, यथा —'गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोच्छ्रित'(९-१०) इति । केवलबाह्यावयवरूपा वा, यथा—पद्मकोशस्य कमपि निरूपणे । नाट्यधर्म्यपि द्विधा—नाट्योपयोगमूलभूतकौशिकीसम्पादनोचितालौकिकशोभाहेतुः यथा—आवेष्टितादिचतुर्विधकरणरूपा । काचित्त्वंशेन लोकमुपजीवति[1],यथा—वर्णातुरेण हस्तेन तत्र व्यवहितेन लोक उपजीव्यते । लोको ह्यनिर्देश्यताशेषं वस्तु निर्दिदिक्षुरीदृशं तादृशमित्थम्भूतमित्यवसरे प्रयुक्तमेव चतुरैः । एवं जनान्तिकादौ वाच्यम् । नटसमयमात्ररूपा नाट्यधर्मी, समयस्याकिञ्चित्करस्य कल्पने प्रयोजनाभावात् ।

हस्तानुपदिशति पताक इत्यादिना । तथा चशब्देन त्रिपताकः प्रकारस्तस्यैव कर्तरीमुख इति दर्शनात्तन्निष्पत्तये संहिताकार्यदृष्टाद्ध्ययनपरशब्दगतध्यानं शब्दवद्धस्तान्तरत्वेऽपि दृश्यमानेन तद्बुद्धिं विधेयेन दर्शयति । एवमन्येऽपि त्रिपताका(दयो) व्याख्येयाः । कचित्तु हस्तसदृशहस्तान्तरस्वीकाराय हंसपक्षश्च सन्दंश इति सन्दंशशब्दान्तरं चकारेण अङ्गुष्ठमध्यमाग्रनिष्पीडिताग्र[2]मर्मतर्जनीलक्षणोऽपि शून्यभास्वरविद्युदाद्यभिनयविषये नृत्ताचार्यप्रवाहसिद्धः कोहललिखितोऽपि हस्तः सङ्गतो भवतीति हस्तान्तराण्युत्प्रेक्ष्याणि । ते त्वसंयुता अपि भवन्ति । संयुतकरणं कार्य इति वक्ष्यते, यतः

---

1 ज - तत्र वै 2 च - शुकमुद्रः (?) 3 ड - मुष्टिकश्च 4 ड - कटकामुखः 5 ड तथा वै सर्पशीर्षकः । मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः च - सर्पशिरो हि मृगशीर्षकः ज - सर्पगोमृगशीर्षकः न - सर्पशिरा मृगशीर्षः 6 प - लाङ्गूल ड - लाङ्गूलोत्पलपद्मश्च, ट - लाङ्गलो ह्यल.

1 जीवन्ती 2 निपीडिताग्र.

[1]ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिताः[2]।
असंयुताः संयुतांश्च[3] गदतो मे निबोधत॥ ७
अञ्जलिश्च कपोतश्च कर्कटः[4] स्वस्तिकस्तथा।
[5]खटकावर्धमानश्च[6] ह्युत्सङ्गो[7] निषधस्तथा॥ ८
दोलः[8] पुष्पपुटश्चैव तथा मकर एव च।
गजदन्तोऽवहित्थश्च[9] [10]वर्धमानस्तथैव च॥ ९
[11]एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश।
नृत्तहस्तानतश्चोर्ध्वं[12] गदतो मे निबोधत॥ १०

---

यत्राप्येतन्नास्ति तत्रापि प्रयोगयुक्त्या हस्तद्वयप्रयोगो भवत्येव, यथा परेण द्वारे नीयमाने भयात्पताकाद्वयस्यांसादिक्षेत्रे पराङ्मुखस्य प्रयोगः। एवं प्रतापनादावपि। एवमन्यत्रोत्प्रेक्षणीयम्। किञ्च पताकादीनामपि द्विशो युगपत्प्रयोगे युतत्वमभिनेयविशेषे। तद्यथा कपित्थस्याधस्तादधस्तलः पताकः छेदाभिनये "कुणिच्छ अह, अस्तमच्छरजहिसीसहिच्छजत्तंति"(?)। चित्राभिनये चैतत्। एते तु संयुता एव। नत्वेत एव, पताकादीनामपि प्रयोगे क्वचित्संयुतत्वात्। एते च त्रयोदश संयुतताव्यतिरेकेण न स्वार्थस्य गमकाः। एतेषां त्वभिनयहस्तानां छिद्रच्छादनेनैकवर्तनानुप्रवेशादलातचक्रप्रतिमतां दर्शयितुं, मसृणोद्धतवर्तनात्मकतया चैकवाक्यार्थविश्रान्ततां प्रथयितुं, नृत्तस्य च वस्तुभूतत्वेनोक्तस्य स्वरूपमभिधातुं, नृत्यन्त्यौ चेट्याविति नृत्तादिविषये च सूचाङ्कुरादावुपयोगमपि तु दर्शयितुं नृत्तशब्देन विशेष्यं निर्दिशति नृत्तहस्ता नित्यादिना। संयुतासंयुतरूपोपजीविन एत इत्येकाकिनोऽपि प्रयुज्यन्ते [नाशंसन्त इति अन्येऽपि न न शंसन्ति···दर्शयन्ति] नन्विदं

---

1 ऊर्ध्वनाल 2 च - चतुर्विंशति कीर्तिताः न - चतुर्विंशदिमे कराः। 3 च - संयुतास्तु 4 ड - स्वस्तिकं तथा 5 ड - कटका 6 ब - वर्तकश्चैव 7 ड - उत्सङ्गो 8 म - दोला 9 ट - अवहित्थं च 10 म - वर्तमानश्च 11 म - एते संयुतहस्ताश्च 12 म - अतस्तूर्ध्वं न - ड - हस्तान् ततश्चोर्ध्वं

[1]चतुरश्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ [2]चाप्यरालखटकामुखौ ॥ ११
[3]आविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ ।
उत्तानवञ्चितौ चैव[4] पल्लवौ च तथा करौ ॥ १२
[5]नितम्बावपि विज्ञेयौ केशबन्धौ तथैव च ।
[6]लताख्यौ च तथा प्रोक्तौ करिहस्तौ तथैव च ॥ १३
[7]पक्षवञ्चितकौ चैव [8]पक्षप्रद्योतकौ तथा ।
[9]ज्ञेयौ गरुडपक्षौ च दण्डपक्षावतः परम्[10] ॥ १४
ऊर्ध्वमण्डलिनौ चैव[11] पार्श्वमण्डलिनौ तथा ।
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ ॥ १५
[12]मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ ।
[13]अलपल्लवोल्बणौ च ललितौ वलितौ तथा ॥ १६
चतुष्षष्टिकरा ह्येते नामतोऽभिहिता मया ।
[14]यथालक्षणमेतेषां कर्माणि च निबोधत ॥ १७

यथा लक्षणं यथा च कर्मण्यभिधेयतेति तथा निबोधतेति सम्बन्धः । अथ यथोद्देशं पताकादीनां लक्षणमाह प्रसारिताः समा इति । समा इति प्रकृतिस्था इत्यर्थः । प्रसारिताग्रा वा इति पाठः । प्रसारिताः प्रधाना इत्यर्थः । सहिता अविरलाः । कुञ्चितत्वं पादस्य वक्ष्यते तल्लक्षणोपजीवने- नाङ्गुष्ठसन्निवेशः कार्य इत्यर्थः । पताकाकारत्वात्पताकः । अत एव पताका-

1 च - चतुरस्रौ 2 न - वाप्यरालकटका 3 प - आविद्धपक्ष्मौ 4 म-वापि 5 प नितम्बौ चापि 6 न चैव संप्रोक्तौ ड - सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च 7 म कक्षवञ्चितकौ 8 म कक्षप्रद्योतकौ तथा 9 न - तथा गरुड- पक्षौ 10 न - हंसपक्षौ तथैव च । ड दण्डपक्षौ तथैव च । 11 द - ह्युरः 12 छ - मुष्टिका 13 ड - अलपद्मोल्बणौ चापि म - अलपल्लवकौ हस्तावुल्बणौ ललितौ तथा 14 ड - अथ लक्षण.

[1]प्रसारिताः समाः सर्वाः [2]यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ १८
एष प्रहारपाते [3]प्रतापने [4]नोदने प्रहर्षे च ।
[5]गवऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः[6] कार्यः ॥ १९
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥ २०
स्वस्तिकविच्युति[7]करणा[8]त्पल्वलपुष्पोपहारशष्पाणि[9]।

ष्यनेनैवाभिनेया । एवमन्येष्वपि हस्तेषु नामनिर्वचनानुसारेण विनियोगः प्रदर्शनीयः । प्रविरलचालिताङ्गुलित्वादियोगेऽपि एकदेशविकारे तत्त्वप्रत्यभिज्ञानात्पूर्वापरकोट्योश्च मूलसन्निवेशाश्रयणात्पताकात्वमेव । एवमन्यत्रापि । प्रहारस्य पातने कर्तव्ये, परेण च क्रियमाणे । [1]प्रतापने शीतशमनायाग्नि[2]स्पर्शग्रहणे, राज्ञां च प्रतापे । शत्रुहृदयम्लान[3]निमित्तभूतप्रसिद्धिविशेषात्मनि तथा प्रकृष्टे चोद्धतादपि[4] तथोपहरणाय " हस्तच्छत्रनिरुद्धचन्द्रमहस " (विद्धसा-) इत्यादौ । तथा अन्यस्य प्रेरणे अन्येन वा प्रेरणे तद्वारणाय । एषु च यथालोकप्रसिद्धिः यथा नाट्याचार्यप्रवाहश्च ऊर्ध्वपार्श्वगाधोमुखसम्मुखपराङ्मुखोत्तानत्र्यश्रचञ्चलाचञ्चलत्वादिविभाग उत्प्रेक्षणीयः । प्रहारे हृदयलग्नतल ईषत्कम्पमानः, प्रहर्षे च रोमाञ्चसम्मुख उद्गतः । अपिशब्दार्थसहितो (अहं) यथा अस्मदर्थो भवति अहमपि ममापि मयापि मय्यपीत्यादौ गर्वगर्भे प्रयोगे पार्श्वान्तरात्स्वपार्श्वमागच्छँल्ललाटाभिमुख ऊर्ध्वः कर्तव्यः । एष इति एतस्मिन्नर्थेऽभिनेता स्या(दिति चे)द्विभक्तिरतन्त्रा, एतदर्थनिरूपण इत्यर्थः । अग्नेः धाराजालाः पुष्पवृष्टिग्रहणमप्रसिद्धपांसुरक्तादिवृष्ट्यन्तरोपलक्षणम् । संयुतकरण इति हस्तद्वयमीदृशं कर्तव्यमित्यर्थः । संयुतासंयुतसम्बन्धा लोकोचिता

1 म - प्रसारिताग्रास्सहिता 2 म - यस्याङ्गुल्यौ 3 ङ - प्रकोपने 4 छ - नादने छ - अथ यापने प्रहर्षे च 5 ब - गर्वेऽप्यह 6 ङ - देशस्थितः 7 म - पल्लवपुष्पोपहारशय्यादि 8 प - करणात्पल्वल 9 च - शिष्याणि.

1 पताकश्चेत्सीव 2 शमनायादि 3 म्लान 4 चोद्धतापि.

[1]विरचितमुर्वीसंस्थं यद्द्रव्यं तच्च निर्देश्यम् ॥ २१
स्वस्तिकविच्युतिकरणात्पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पाल्यं[2] छन्नं निबिडं च गोप्यं च ॥ २२
अस्यैव चा लीभिस्त्वधोमुख[3]प्रस्थितोत्थितचलाभिः ।
वायूर्मिवेगवेलाक्षोभश्चौघश्च कर्तव्यः[4] ॥ २३

चलनलक्षणा क्रिया यस्य तेनाग्निज्वालासूर्ध्वगमनं, जलधारासु अधोगमनमङ्गुलीनामूर्ध्वमुखहस्तस्य पुष्पवृष्टौ शिरोदेशे अधोमुखस्य स्थितस्य क्रमाच्चलाङ्गुलेरधोगमनमिति सङ्गृहीतम् । तेनैकाकिनोऽपि यत्प्रयोगदर्शनं तदवरुद्धम् । अ(प्र?)विरलास्सत्यश्चलिताः अ(प्र?)विरलं कृत्वा चलिता अङ्गुल्यो यत्रेति समासः संयुतहस्तलक्षणात् स्वस्तिकमुपजीव्यं नृत्तहस्तलक्षणाद्वा । तेन[1] सम्मुखौ पताकौ मणिबन्धभुवि न्यस्तौ कृत्वा बाहुपरिभ्रमणयुक्त्या स्वपार्श्वसमं[2] विच्युतिः[3], तत्क्रियायाः पल्वलं स्वल्पोदकं सरः पुष्पप्रकरं हृद्यं च [4]तृणं, यच्च भूमौ पिच्छिलं[5] बलितण्डुलवैचित्र्यन्यायेन[6] स्थापितं तदाभिनयेदिति लोकांशोपजीविनी नाट्यधर्मा । पुनरेवेति वचनात् स्वस्तिकस्तद्विच्युतिः विच्युतिपूर्वकः स्वस्तिक इति क्रमः । तत्रा(धो)मुखेन स्वस्तिकेन तद्विच्युत्या च संवृतविवृतमर्धं संवृतमर्धं च विवृतम् । यथा—"घट्योद्घाट[7]कवाटघट्टितजवेन"[8] इति । पाल्यं पतमानाद्रक्षणीयं विच्युतिपूर्वकं शीघ्रं स्वस्तिककरणात्, छन्नं निबिडं[9] स्पष्टं, तथैव गोप्यं, अन्यो मा द्राक्षीदिति, तज्जातं करणं स्वस्तिककरणात् । चकारेण अपाल्ये, अप्रच्छन्ने, अनतिनिबिडे अगोप्ये चाभिनयः । स च स्वस्तिकविच्युतिरूप इति दर्शयति । रेचयति स्वसन्निवेशाद्यापयति स्वक्षेत्राद्वा या क्रिया तद्रेचककरणम् । तथा यथायोगं तत्र परस्योत्साहनं प्रेरणं[10] उत्साहजननं सत्पुरुषाभिनयनं च विरलाङ्गुलिक्षेपेणालपल्लवाकारवत् प्रधानं

1 च - विरचितमहीतलस्थं म - विरचितमहातलगतं 2 ब - काल्यं 3 म - अधोगत 4 द - क्षोभाश्चौघश्च कर्तव्या.

1 केन 2 सुपार्श्वे 3 विच्छति 4 तृणयश्च भूमौ 5 भूमौ पिच्छिला वैचित्र्यभावेन 7 घटयेद्घाट 8 घट्टित इव 9 छन्नं निबद्धं 10 उत्साहसंप्रेरणम्.

उत्साहनं [1]बहु तथा महाजनप्रांशुपुष्करप्रहतम्[2] ।
पक्षोत्क्षेपाभिनयं रेचककरणेन कुर्वीत[3] ॥ २४
[4]परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च[5] ।
पुनरेव शैलधारणमुद्धाटनमेव[6] चाभिनयेत् ॥ २५
[दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यामाभिनेयः प्रयोक्तृभिः॥] २६
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।

---

वस्तु अक्रमकरणेन निजपार्श्वगमनेन पार्श्वान्तरात् । प्रांशून्नतमूर्ध्वगतात्, पुष्करप्रहणने अधः पातनं[1], पक्षं पतत्रिणां, मुहुरूर्ध्वं कटिक्षेत्र उत्साहनवत् उत्क्षेपं कृतमथोर्ध्वगमनेन । अभिनयशब्दवत्पाल्यं च । (अभिनयशब्दस्य वैचि)त्र्यं पश्यन्तः उपाध्याया व्याचक्षते—अभिशब्देनाभिमुख्यं, नशब्देन निषेधो, यशब्देन यदर्थो लक्ष्यते, तेन स्वपार्श्वोन्मुखदेशागमनेनाभिमुख्यमभिमुखत्वं पार्श्वक्षेत्रे तु रेचनपूर्वमधोमुखोत्तानपारिवर्तनेन च यच्छब्दार्थमभिनयेदिति । परिशब्दः शैघ्र्यात्पार्श्वतोऽर्थे उभयतो वाऽतो समन्तादर्थे च, तेन परिघृष्टं यत्तलं तत् द्वितीयपताकहस्तेन पताकाकारेण क्षालनं मर्दनं मार्जनं पेषणं तद्विशिष्टमपि द्रव्यमभिनयेत् । यथाक्रमं च परिशब्दार्थे योज्यः पुनश्शब्दः । पर्वतोद्धारणशैलाशिलादेश्चोद्घा(त्पा?)टनम् । चकाराद्वरदानमभयदानमित्येवमाद्यभिनयेत् । [2]परिघृष्टेतीतिकर्तव्यतां प्रसक्तां वारयितुमेवकारः,"[3]एनतु पुणा-परिआश्चिइतिं कोणें जिजिआळिह"(?) इत्यादौ, यथा पुनरेवशब्दार्थे[4] द्योतकस्तथाङ्गिकेऽपि पताकादिस्तथा व्यवहारदर्शनात् । न चैतावानेवास्य विषय इति दर्शयितुमाह एवमनेन प्रकारेण स्वबुद्ध्या तां तामितिकर्तव्यतामुत्प्रेक्ष्य प्रयोक्तव्यः । स्त्रीपुंसयोरुभयोरपि अभिनेत्रोरभिनेययोर्वा । अन्ये तु नपुंसक-

---

1 म - बहु महन्महाजनं प - बहुमतं 2 च - प्रहतिम् 3 म - करणैः प्रयुञ्जीत 4 ड - परिमृष्ट 5 म - पिष्टं च ब - तलस्थेन चूर्णितघातपिष्टघृष्टमृदितानि । म स्त्रीणां पुंसां यथा तथा 6 न - उत्पाटनमेव ।

---

1 पतनं 2 सृष्टेति 3 एतु पुणायिरि अच्चतकाणेजि आळिह 4 समर्थे.

अतःपरं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥ २७
पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत्[1] ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥ २८
आवाहनमवतरणं विसर्जनं वारणं[2] प्रवेशश्च[3] ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥ २९
[4]मङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च ।
उष्णीष[5]मकुटधारणनासास्यश्रोत्रसंवरणम् ॥ ३०

---

लिङ्गस्य स्त्रीपुंसाभ्यामेव स्वीकारात् समस्ते शब्दार्थेऽभिनेतव्ये विशिष्टेतिकर्तव्यतायुक्तस्यार्थस्य प्रयोग इत्याहुः ।

अथ त्रिपताकमाह पताकेत्वित्यादि । अनामिका वक्रा कनीयसी (तर्जनीमध्यमानां) तिसृणां पताकवदवयवस्थानात् त्रिपताकः त्रित्वस्याभिनेयाद्वा । कर्मेत्यभिनेयम् । (आवाहनं)पराङ्मुखीनतर्जनीमध्यमाकुञ्चनात्, "आर्ये इतस्ताव"दित्यादौ । अवतरणमुत्तरेण पार्श्वान्तरं गच्छता "अवतरत्वायुष्मा"नित्यादौ रथादेः । विसर्जनमनादरकृतमधस्तलकृतेन बहिरङ्गुलिद्वयक्षेपात् । वारणं "मा कार्षी"रिति प्राङ्मुखेनाङ्गुलिद्वयचलनात् । प्रवेशनं पार्श्वतलेनाग्रगमनात् "यावत्प्रविशा"मीति । यथोन्नामनं चिबुकादौ लालनेनोत्तानेनाङ्गुलिद्वयेन । प्रणमनं शिरोगतेन पार्श्वगतेन प्रणयनं समर्पणम् । प्र(नि?)दर्शनमुपमानोपमेयभावमीषद्विरलेनाङ्गुलिद्वयेन । विविधं विचित्रमिदं वा स्यादिदं वेत्यादि अङ्गुलियुगनामोन्नामात् । वचनं भाषणं मुखक्षेत्रे उत्तानस्याग्रगमनात् । मङ्गल्यद्रव्याणां पूर्णकुम्भादीनामधोमुखेनाङ्गुलिद्वयेन । स्पर्शः द्रव्यादीनां, शिरसः स्पर्शः निवेशनं निवेशः सम्बन्धोऽनामिकया शिरसो वा सन्निवेशनं तत्क्षेत्रे सम्मुखमण्डलगतेनोष्णीषधारणं शिरस्यधोमुखेन भ्रमता मकुटधारणं तूर्ध्वक्षेत्रे । (संवरणं) अनिष्टे गन्धे वचने च शब्देऽपि नासादौ अङ्गुली-

---

1 ट - अङ्गुलीभवेत् 2 न - रणं 3 न - प्रवेशं च 4 प - माङ्गल्य 5 न - मुकुटमस्य.

अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम्।
[1]लघुखगपतनस्रोतोभुजगभ्रमरादिकान्कुर्यात्[2] ॥ ३१
अश्रुप्रमार्जनं तिलकविरचनं [3]रोचनालभनकं च[4]।
त्रिपताकानामिकयोः[5] स्पर्शनमलकस्य कर्तव्यम्[6]॥
[[7]स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने[8]।
परस्पराग्रसंश्लिष्टौ कार्यावुद्वाहदर्शने ॥ ३३
विच्युतौ चलितावस्थौ कर्तव्यौ नृपदर्शने।
तिर्यक्स्वस्तिकसंबद्धौ स्यातां तौ ग्रहदर्शने ॥ ३४

द्वयेनाच्छादनम्। अस्यैव चेति। अतश्च मुकुटादिदर्शनेन तद्धेतोः राजादेरप्यभिनयः, तेन येन हस्तेनाभिनेयं यत्राव्यभिचारित्वेन बहुशो निर्दिष्टं[1] तदनिर्दिष्टमपि तेनैवाभिनेयम्। यथा मुकुटधारणाभिनयेन राजांशः रेचित पताकयोगेन गर्वितः। अङ्गुल्यौ ये नित्यश्लिष्टे इत्येवकारः, तेन च त्रिपताकन्यस्त इत्यस्य ग्रहणात्। चकारेणान्वाचयकृतमङ्गुल्यन्तरस्य अधोमुखादि[2]रूपत्वमनुजानाति। अधोमुखे च द्वे प्रस्थानोत्थानयोः चले चेति समासः। लघून्पक्षिणश्चटकादीन्, कटीक्षेत्र लघुचालं। [3]लघु च स्रोतः क्रमेणोर्ध्वमधस्तिर्यग्गत्या[4] लघुसर्पानग्रगत्याभिनयेत्। भ्रमरमक्षिकादीनां पुनरुपपादनं पक्षित्वेनाप्रसिद्धेः, तेन कटीक्षेत्रत्यागेन यथेष्टमेषां क्षेत्रमित्युक्तं भवति। अश्रुणस्तत्प्रमार्जनस्य चानामिकया स्वक्षेत्रगतयाधो गच्छन्त्याभिनयः। तिलकस्याभिनयो रोचनाचन्दनादिना तद्विरचनस्य च। एतेन क्रियाफलयोस्तुल्याभिनयोऽन्यत्रापीति सूचयति। तेन पतनवत्पतितोऽपि कर्तरीमुख इत्याद्यूह्यम्। रोचनाचन्दनस्य मङ्गल्यतिलकादिना स्वीकारादिकं व्याचक्षते। रोचनया अरुणरुचिर्लक्ष्यते, तत्रानामिकाद्वयसङ्घट्टेनाभिनयः। यथा—

1 प - लघुमुखपवन ब - लघुवटपवन 2 न - प्रमार्जन 3 म - विरोचना 4 ड - लोचनालभौकश्च छ - लभनकरणम् 5 म - अनामिकथा 6 न - दर्शनमलिकस्य कार्यं च 7 इमयोरादर्शयोः 32 - 36½ श्लोकाः न सन्ति 8 न - पादवन्दनम्।

1 दृष्टं 2 रूपतामनु 2 लघूचापः 4 तिर्यग्जन्या।

तपस्विदर्शने कार्यावूर्ध्वौ[1] चापि पराङ्मुखौ ।
परस्पराभिमुखौ च कर्तव्यौ द्वारदर्शने ॥ ३५
[2]उत्तानाधोमुखौ कार्यावग्रे वक्त्रस्य संस्थितौ ।
बडवानलसङ्ग्रामे मकराणां च[3] दर्शने ॥ ३६
अभिनेयास्त्वनेनैव वानरप्लवनोर्मयः ।
[4]पवनश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ॥ ३७
[5]संमुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने ।
पराङ्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः ॥] ३८
त्रिपताके यदा हस्ते[6] भवेत्पृष्ठावलोकिनी ।
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ॥ ३९
[7]पथि चरणरचनरञ्जनरङ्गण[8] करणान्यधोमुखेनैव[9] ।

कोउद्दळणाहं तथा तथा च केन समाणिवश्शक्रः ।
सुकरं भर्जसुखं च दुःखं च ॥ (?)

आलम्भनं शरीरस्पर्शनं द्रोहिकाचमनम्, तस्मात् संज्ञायामपि कन् । संज्ञैवेयमिति लभेरत्नासंभवात् नञ्समासः, स्वल्पत्वं च, अत्रातिगौरवातिस्नेहादिना तथानामिकयैव स्पर्शनात् "गामी अवा उच्चं अमीहउतोरउ" (?) इति । स्पर्शनमलकस्य रचनार्थं स्थानान्तरनयनं,यथा रत्नावल्यामुदयनेन सुसङ्गतायाः । अलिकस्य ललाटस्य दर्शनमलकभञ्जनेनोत्तालालकभञ्जनानीत्यादावित्यन्ये ।

कर्तरीमुखं लक्षयति त्रिपताक इति चकारेण परो नीयते। अवलोकिनीति असंश्लिष्ट इति यावत् । कर्तर्या ईदृशमेव रूपं साध्यते तथाभिनीयते । पथीति पृथक्पदं इतइत इत्यादौ मार्गप्रदर्शने, तेनात्राधोमुखेनेति संबध्यते । चरणस्य रचनं कस्तूरिकादिना पत्रभङ्गादिक्रिया, रञ्जनमलक्तकेन । रज्यत्यस्मिन् हृदयमिति रङ्गः कुङ्कुमादिकृतश्चतुष्कोष्ठे भङ्गस्तिलकादिः तं करोति रङ्गयति ।

1 प - ऊर्ध्वावुत्तानसम्मुखौ 2 प - उत्तानाधोमुखावग्रे अधो वक्त्रस्य संश्रयौ 3 न - नक्राणामपि 4 प - पततश्च 5 न - सुमुख 6 ड - हस्तो 7 न - पथिकचर प - पथितचरण 8 प - रिङ्गण ब - गमन 9 न - मुखेनैतत् ।

ऊर्ध्वमुखेन तु कुर्याद्दष्टं शृङ्गं च लेखं च[1] ॥ ४०
[2]पतनमरणव्यतिक्रमपरिवृत्तवितर्कितं[3] तथा न्यस्तम्।
भिन्नवलितेन कुर्यात्कर्तर्यास्याङ्गुलिमुखेन[4] ॥ ४१
[[5]संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः।
[6]रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु[7] ॥] ४२
[8]यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत्[9]।
सोऽर्धचन्द्र इति ख्यातः[10] करः कर्मास्य वक्ष्यते ॥ ४३

एवकारेण [1]तर्जनीमुखलक्षणमुखस्याधोगमनानन्तरमेव पृष्ठावलोकित्वं पुनरधोगमनं पुनः पृष्ठावलोकनमिति चलनमाह। दष्टमिति दंशनं तत्तुल्यं च [2]कर्तनादि नासिकाक्षेत्रात् कर्णान्तं गच्छता, शृङ्गं खङ्गक्षेत्रे हस्तद्वयेन, लेखं पत्रकाविष्टस्य वाचनम्। व्यतिक्रमोऽपराधः[3]। परिवृत्तं पराङ्मुखीभूतं विपर्यस्तं च। वितर्कितमूहनम्। न्यस्तं निक्षेपणम्। [4]भेदनं वैपरीत्यं मध्ययोस्तर्जनीपृष्ठगत्वं चलनं पुनः स्वरूपाप्तिस्तयोः समाहारे द्वन्द्वः। एतेन यथा योगं सङ्घातविगृहीतविपर्यस्तप्रयोगो द्वित्रिश्रेत्याद्यूह्यम्। कर्तर्यास्यस्य कर्तरीमुखस्य यदङ्गुलीरूपं मुखं प्रधानं तेन भेदनवलनसहितेनेति सङ्गतिः।

अर्धचन्द्रमाह सहाङ्गुष्ठेनेति। अङ्गुष्ठोऽपि विनतः चापवादिति श्लिष्टाह्स्वत्वं निषेधति। ख्यात इति नाम्नैव लब्धरूपः। बालतरवश्चोर्ध्वे गच्छता, उपर्युक्ता-

1 न - लेख्यं च 2 छ - पवन 3 ड - परिवृत्तविवर्तितं प - परिवर्ति वितर्कितं ब - परिवर्तविवर्तितान्यनित्यं च ड - वलिते च 4 न - आस्याङ्गुलीययुगलेन म - पुटेन 5 च - आदर्शे नास्ति 6 म - रुरुचमरमहिषनगगिरिवृष प - रुरुचमरमहिषसुरगिरिवृष म - संयुतकरणं चैव स्यात् 7 म - आदर्शे "रुरु चमर" इति पूर्वार्धः, "संयुतकरण" इत्युत्तरार्धः

8 म - यस्याङ्गुल्यो धनुर्वक्राः सहाङ्गुष्ठेन कुञ्चिताः
अर्धचन्द्रं तु तं विद्यात्कर्म चास्य निबोधत ॥
द - यस्याङ्गुल्यो धनुर्वक्राः सहाङ्गुष्ठेन संहताः।
अर्धचन्द्रः स विज्ञेयः कर्म चास्य प्रचक्ष्यते ॥
9 ड - चापरम् 10 ड - चन्द्रो हि विज्ञेयः।

1 तर्जनीलक्षण 2 कर्तृकर्त्रादिनामिका 3 अपरोधः 4 भेदन।

एतेन बालतरवः शशिलेखा कम्बुकलशवलयानि ।
[1]निर्घाटनमायस्तं मध्यौपम्यं च पीनं च[2] ॥ ४४
[3]रशनाजघनकटीना[4]माननतलपत्रकुण्डलादीनाम् ।
कर्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण[5] ॥ ४५
आद्या धनुर्नता कार्या कुञ्चितोऽङ्गुष्ठकस्तथा[6] ।
शेषा भिन्नोर्ध्ववलिता ह्यरालेऽङ्गुलयः करे[7] ॥ ४६
एतेन सत्त्वशौण्डीर्य[8]वीर्यकान्ति[9]धृतिदिव्य[10]गाम्भीर्यम् ।

---

नेन अर्धेन्दुरित्यन्वर्थबलाल्लभ्यम् । तेन शशिलेखेत्यनेन लेखामात्रमभिनेयं [1]विश्लिष्टतर्जनीकेनेत्युक्तं भवति । कम्बुरिति शङ्ख एवानेनाभिनेयः, तद्ग्रहणं तु कर्कटे वक्ष्यते । प्रकोष्ठान्तरसंमुखेन वलयः । निर्घाटनं बलान्निष्कासनमिति । तस्यायस्त्वमटवीघोषणमित्यसत्, आयस्तं खेदं पराङ्मुखेन गण्डभ्रू[2]विभ्रमात्तमभिनयेत् । मध्ये[3] उदरादौ, उपमीयत इत्युपमा ततः ष्यञ्, तेनायमर्थो मध्यस्य तदुपादीयमानत्वं कार्श्यं तदभिनयेत् । पीनं च पीवरं, अर्धान्मध्यमेव । चकारादर्धचन्द्रद्वयेनाभिनयेत् । अन्ये तु पानं चषकादि व्याचक्षते पानमिति पठन्तः । जघनो नितम्बस्याग्रभागः, पार्श्वभागश्च कटी । आननतले च पत्राणि भङ्गाः । तलपत्रमाभरणविशेषः । पत्रं दन्तपत्रं नलिनीदलं वा । आदिशब्दान्मृणालादि । एतच्च तत्तत्क्षेत्रगेन यथायोगं पार्श्वद्वययोगं पार्श्वद्वयान्तावधोवर्तितलेनैकैकेनान्यसहितेन वाभिनयेत् ।

अरालमाह आद्या धनुर्नतेति । आद्यस्तर्जनी मध्यमादयः कनिष्ठान्ताः पूर्वस्याः पृष्ठेष्वदूरे तिष्ठन्तीति । अयं हस्तस्त्वरालः कुटिलत्वात् । अरालपक्ष्मण इत्यादौ वक्रार्थेऽरालशब्दः । सत्त्वं स्थैर्यम्, शौण्डीर्यं गर्वः, वीर्यमुत्साहः, कान्तिश्शोभा, दिव्यं गगनस्थं, गाभीर्यं—

---

1 म - निर्धमनं चायस्तं ष - निघटन न - निर्धाटन द - निर्वाटन 2 प - चापि पीनं च ड - चापि पानं च 3 द - रसना 4 म - आननदल प - आननतल 5 म - चन्द्रस्य 6 प - कुञ्चिताङ्गुष्ठकं तथा 7 ड - स्मृताः न - ह्यरालेऽङ्गितथा स्मृताः 8 न - शौठीर्यं 9 ड - वीर्यधृतिकान्ति 10 प - दिव्य ।

1 विशिष्टतर्जनी 2 विभ्रमतामभि 3 सव्ये ।

आशीर्वादाश्च तथा[1] भावा हितसंज्ञकाः कार्याः[2] ॥४७
एतेन पुनः स्त्रीणां केशानां सङ्ग्रहस्तथोत्कर्षः[3] ।
सर्वाङ्गिकं[4] तथैव च निर्वर्णनमात्मनः कार्यम्[5] ॥ ४८
कौतुकविवाहयोगः[6] प्रदक्षिणेनैव सम्प्रयोगं च[7] ।
[8]अङ्गुल्यग्रस्वस्तिकयोगात्परिमण्डलेनैव ॥ ४९
प्रादक्षिण्यं परिमण्डलं च कुर्यान्महाजनं चैव[9] ।
[10]यच्च महीलतरचितं द्रव्यं तच्चाभिनेयं स्यात् ॥ ५०

---

यस्य प्रभावादाकाराः क्रोधहर्षभयादिषु ।
भावेषु नोपलक्ष्यन्ते गाम्भीर्यमिति तत्स्मृतम् (२२-३६)

आशीर्वादाः स्वस्ति भद्रं पुण्याहमित्यादयः । हितसंज्ञकाः सुखभावाः । तत्र हृदि पार्श्वेऽग्रतः स्थैर्येण चलत्वेन भ्रमणागमनं यथायोगं प्रयोगः । एतावत्यंशेऽप्यभिनेयमरालेन । सङ्ग्रहो बन्धनं केशानाम् । उत्कर्षो विकीर्णतापादनं । पुनर्ग्रहणाद्द्वित्रिरन्तरालस्य गमनभ्रमणादि लभ्यते । तथैव चेति यथा सर्वाङ्गनिर्वर्णनं भवति तथा कार्यमिति । तेन द्वितीयपार्श्वात्स्वपार्श्वगमनं लभ्यते । कौतुकं [1]विवाहात्पूर्वभावी वधूवरयोराचारः अन्तर्विवाहः प्रसिद्धः । विवाहोऽग्नौ साक्षिणि । अङ्गुल्यग्राणां हस्तद्वयगतानां स्वस्तिकाकारेण यद्योजनं तेनोपलक्षितेन परिमण्डलं प्रदक्षिणदिक्कमेव भ्राम्यता कौतुकविवाहयोगोऽभिनेयः । च शब्दस्तुशब्दस्यार्थे । एवकारो भिन्नक्रमः । सम्प्रयोगः संश्लेषमात्रस्तु अङ्गुल्यग्रस्वस्तिकयोगादेव केवलात् । देवताविषयं प्रदक्षिण-

---

1 ड - भावाभिनय च - भावाभिहित म - भावानिह 2 म - संज्ञयाकुर्वीत् द - तथाह्यावाहनमेव कार्यं च 3 प - संग्रहोत्कर्षौ म - संग्रहं तथोत्कर्षम् द - संग्रहोत्कर्षणानि न - संग्रहोत्कर्षः 4 म - च - कुर्यान्निर्वहणमात्मनश्चैव 5 द - निर्वर्तनमात्मनः कार्यम् ड - निर्वहणमात्रात्मनः कार्यम् ब - निर्वाहणमात्मनः कुर्यात् 6 द - प्रादक्षिण्येन संप्रयोगं च 7 न - संप्रयोगश्च 8 द - अग्रस्वस्तिकयोगात्कुर्यत्परिमण्डलेनैव 9 द - जनश्चैव म - मण्डलं कुर्यान्महाजनं चापि 10 न - यत्र महीतलनिहितं ।

---

1 विभागात्पूर्वं ।

[1]आह्वानं च निवारणनिर्माणे चाप्यनेकवचः ।
स्वेदस्य चापनयने[2] गन्धाघ्राणे शुभः शुभे चैष[3]॥ ५१
त्रिपताकहस्तजानि तु[4] पूर्वं यान्यभिहितानि कर्माणि।
[5]तानि त्वरालयोगात्स्त्रीभिः सम्यक्प्रयोज्यानि ॥ ५२
अरालस्य यदा वक्रानामिका त्वङ्गुलिर्भवेत्[6] ।
शुकतुण्डस्तु स करः कर्म चास्य निबोधत ॥ ५३

क्रमं, परिमण्डलं वर्तुलं, महाजनं जनसमूहं । विरचितं पुष्पप्रकरादि । एतेनैव परिमण्डलेन पार्श्वान्तरात्स्वपार्श्वे गच्छताभिनयेत् । आह्वाने पतदङ्गुलि निवारणे बहिःक्षिप्ताङ्गुलि। निर्माणं अपूर्व उदयः उदितो[1]"भअवं मिअलंछक[2]"इत्यादौ, निश्शेषेण वा मानं परिच्छेदो वर्तनं वा, यथा "जळणिहिअळंवेमा[3]"(?) इति । निर्दानं तृणाद्युत्पाटनमित्यन्ये। अभूता सृष्टिर्वीप्सा निर्दानमित्यन्ये[4] । अनेकं पृथग्भूतं संवन्धाभावरूपं [5]यत्रोच्यते तत्र बहिः पुनः क्षिप्ताङ्गुलेः प्रयोगः। यथा"कहिं इ कहिं इ" इत्यादौ । गन्धस्य सुरभित्वादाघ्राणं । शुभः शुभे चैष इति पाठः । एष हस्त इत्यर्थः । चैवेत्यन्ये पठन्ति अध्याहारं कल्पयन्तः, एवकारेण तत्क्षेत्रगत्वं हस्तस्येत्याहुः । त्रिपताकस्य यान्यावाहनमवतरणमित्यादीन्यभिनेयानि तान्यरालस्य [6]यत्प्रयोगाङ्गयुक्त्या सम्पत्तिर्भवति तत्तेनापि प्रयोज्यानि स्त्रीभिः[7]। न तु तासां त्रिपताको निषिध्यते, पुंसस्त्रिपताकस्थानेऽरालो निषिध्यते ।

शुकतुण्डमाहारालस्येति । तुः पूर्वस्माद्विशेषमाह । द्वितीयोऽपिशब्दार्थे, तर्जन्या अपि वक्रिमाणमनुजानाति तदाकारत्वात् । शुकतुण्ड इति शब्देन

1 द -आवाहने निवारणनिदर्शने चाप्यनेकवचने च प-आवाहननिर्वाहन... वचः न - आवहने निवापे निन्दाक्षेपाद्यनेकवचने च म - आवाहने निवारणे सेवाद्यनेक वर्णे च द - आवाहनेनिवापे निन्दास्ये व्याध्यनेकवचने च ज - आवाहने च तरणे 2 ड - चाभिनयने 3 ड - शुभाचैव म - शुभः शुभेचैव 4 ड - हि 5 म - तान्यप्यरालयोगे प - तानि त्वराल 6 न - वक्रा तर्जनीत्वङ्गुलिर्भवेत् म - वक्रा सहाङ्गुष्ठेन तर्जनी ड - वक्रात्वनामिकाङ्गुलिर्भवेत्।

1 उदयव 2 भयवीं ळचिरेण 3 ळंचेमा 4 वित्यादावित्यन्ये 5 यत्राचते 6 त्रिप्रयोगाङ्ग 7 त्रिभिः ।

एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति[1] चार्थे।
आवाहने विसर्गे धिगिति वचने च सावज्ञम्[2] ॥ ५४

अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिताः[3] ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः[4] ॥ ५५

एष प्रहारे व्यायामे निर्गमे पीडने तथा[5] ।
संवाहनेऽसियष्टीनां दण्डकुन्तग्रहे तथा[6] ॥ ५६

---

प्रत्येकमेक एव ह्ययं वाक्यार्थः। नाहं न त्वं न कृत्यमिति न च सर्वथा निषेधे अयमभिनयः; अपि तु अर्थे अर्थनायां सत्यामीर्ष्याप्रणयकलहादाविति यावत्, अर्थनमर्थः, एरच् (पा ३-३-५६)। सावज्ञं यदाह्वानं विसर्गश्च पञ्चभिरङ्गुलिक्षेपात्स्पृश्य इतिकर्तव्यता, सकृत् द्विस्त्रिर्वा प्रयोगयुक्त्या। धिगित्यनेन निन्दार्थेनानुपादेयं लक्ष्यते, "किन्तेन वालवधपातकदूषितेन" इत्यादावयमभिनय इत्यर्थः।

मुष्टिमाह अङ्गुल्यो यस्येति। तलमध्य इति अङ्गुष्ठमूलाशङ्कां शमयति। अग्रे सम्यक्स्थिता इति अग्रगोपनविरलत्वं च परिहरति। उपरीति मध्यमाङ्गुलिदेशं सम्पीडयन्नित्यर्थः। संज्ञितः लोके ह्यतेव मुष्टिशब्दः प्रसिद्ध इत्यर्थः। व्यायाम इति युद्धे प्रतिमल्लप्रकोष्ठग्रहणे खड्गयुद्धे च। [1]सकल (असि?) ग्रहणात् छुरिकायुद्धदण्डधारण इत्यादि योज्यम्। निर्गमस्यार्द्रकसुरसादेः। पीडने स्तनपीडने महिष्यादिदोहने। संवाहने मृत्पीडने। असियष्टीनाम्, तथेति संवाहने वारणे मार्जने।

---

1 न - नेयं स्यान्नाहं न त्वं नकृत्यमिति 2 प - धिगिति च वचने सावज्ञम्। 3 न - मध्याग्रसंस्थिताः 4 म - स तु मुष्टिरिति स्मृतः 5 न - निगमे हस्तपीडने म - निर्गमे स्तनपीडने 6 द - यष्ट्यादिकुन्तदण्डग्रहेषु च न - असियष्ट्यादि कुन्तगण्डग्रहे तथा।

---

1 सकलग्रहणे

अस्यैव च यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते[1] ।
हस्तः स शिखरो नाम [2]तदा ज्ञेयः प्रयोक्तृभिः॥ ५७
[3]रश्मिकुशाङ्कुशधनुषां[4] तोमरशक्तिप्रमोक्षणे[5] चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणे चैव[6] ॥ ५८
अस्यैव शिखराख्यस्य [7]द्व्यङ्गुष्ठकनिपीडिता ।
[8]यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥ ५९
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रवर्गाणि[9] ।
शस्त्राण्यभिनेयानि तु कार्यं पथ्यं च सत्यं च[10]॥ ६०
उत्क्षिप्तवक्रा[11] तु यदानामिका सकनीयसी ।

---

शिखरमाह अस्यैव चेति । पुनर्मुष्टिग्रहणं मुष्टिकर्तृणामधिकारे[1] शिखरेणाभिनेये द्वये तत्कर्मणां च दृढपीडनादौ मुष्टिमाह, अत एवोक्तं प्रयोक्तृभिरिति । रश्मिः प्रग्रहः किरणो वा तेषां संवाहनं ग्रहणमिति संबन्धः अत्र च द्वयोरेकस्य वा प्रयोगः उत्तानाधोमुखपार्श्वगोर्ध्वादिभिश्च । प्रयोगानुसारेणालकस्योत्क्षेपणं गण्डतलादेरुत्पीडनं वा कुटिलीकरणार्थम् ।

कपित्थमाह अस्यैवेति नामोच्चारणं पूर्ववत् प्रयोजनं, कपित्थाकारेऽस्मिन् अङ्गुष्ठतर्जन्यावङ्गुली । शस्त्राणीति शराकर्षणानीत्यर्थः । कार्यं मुक्तम्, अत्र छोटिकाप्रयोगः ।

अथ खटकामुखमाह उत्क्षिप्तवक्रेति । उत्क्षिप्ता सती वक्रा अनामिका कनीयसी । पुनर्नामोच्चारणात् शराकर्षणकार्यसत्यपथ्यादावस्य प्रयोगः ।

---

1 म - मुष्ट्योरूर्ध्वाङ्गुष्ठः प्रयुज्यते  2 प - तदा  3 म - रश्मिकशाङ्कुश  4 द - धनुषा  5 प - मोक्षणं  6 म - अलक्तकोत्पीडने चैव  प - अधरस्योत्क्षेपणे चैव  7 न - अङ्गुष्ठक  प - मुखेङ्गुष्ठ  8 म - प्रदेशिनी च वक्रास्यादिति हस्तः कपित्थकः  ९ द - वज्रवर्जानि  न - वज्र वर्ज्यानि  ड - वज्रबाणानि  10 म - यत्कार्यं स्यात्तथैव सत्यं च  न - पथ्यं च तथ्यं च  ड - सत्यं च पथ्यं च  11 प - वक्रा ।

---

1 मुष्टिकर्मणामनधिकारे ।

अस्यैव तु कपित्थस्य तदासौ [1]खटकामुखः ॥ ६०

[2]होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं व्यजनकं च[3] ।

आदर्शधारणं खण्डनं तथा पेषणं चैव[4] ॥ ६१

[5]आयतदण्डग्रहणं मुक्ताप्रालम्बसङ्ग्रहं चैव[6] ।

[7]स्रग्दामपुष्पमालावस्त्रान्तालम्बनं चैव ॥ ६२

[8]मन्थनशरावकर्षणपुष्पापचयप्रतोदकार्याणि[9] ।

अङ्कुशरज्ज्वाकर्षस्त्रीदर्शनमेव कार्यं च[10] ॥ ६३

खटकाख्ये यदा हस्ते तर्जनी संप्रसारिता[11] ।

हस्तस्सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ६४

---

तुरेकः पूर्वस्माद्विशेषे, तुर्द्वितीयोऽवधारणे । विरलत्वं मनाक् अनामिका कानिष्ठिकयोर्भवति सहशब्दात् विश्लेषाशङ्का न स्यात्।खट काङ्क्षायामित्यस्य क्षुत्तृट्पिपासार्तयोरिति वुन्। खटको विटभोग्रधूः(?)तस्य आमुखे यतोऽयं वक्ष्यतेऽतः खटकामुखः। होत्रं स्रुगादि उत्तानेन। हव्यमाज्याद्यामुखेन। प्रग्रहस्य वल्गादेः परिकर्षणं गतिरोधनाय, व्यजनं तालवृन्तादिकं चलता। आदर्शधारणं संमुखेन, आदर्शो ज्ञातो येनैव गौरीवाहाकारिकामनेनाभिनयन्ति(?)। खण्डनं तालवृन्तादेर्व्यजनव्यापारो वा। पेषणं कुङ्कमस्य मृगमदचन्द्रादेः हस्तद्वयेन भागद्वये दीर्घवृत्तचक्रक्रमणाक्षैः, "परिवृत्तपाद" इत्यादौ। आयतदण्डकाष्ठादीनां ग्रहणं, मुक्ताप्रालम्बानामादौ बाहुद्वयमुभयान्तग्रहणसूचकम् । वस्त्रान्तालम्बनं

---

1 प - कटकामुखः 2 म - होत्रच्छत्रग्रहणं ड - होतृन् हव्यं छत्र 3 द - प्रग्रहाकर्षणं व्यजनकं च प - प्रग्रहपरिकर्षणं व्यञ्जनं च म - तथा व्यजनम् न - प्रग्रहमाकर्षणं व्यजनकं च 4 द - धारणं तथा कण्डनं पेषणं चैव म - धारणं वा कण्डूयनं तथान्वेषणं चैव प - तथान्वेषणं चैव ड - धारणं चावनतं तथा वेषं चैव न – धारणं कण्डनं तथा पोषणं चैव 5 द - आदर्शो श्लोकोऽर्धः "अङ्कुश' इत्यनन्तरमस्ति प - अङ्कुश 6 न - कुशकेशकलापसंग्रहं चैव म - कुशाङ्कुशकलापसंग्रहं चैव 7 ढ - स्रग्दामधारणं खलु 8 म - मन्थानशराकर्षण 9 प - कान्यानि ढ - काद्यानि 10 ड - एव कान्तं च न - एककार्यं च 11 म - स्यात्प्रसारिता ।

[1]अस्य विविधान्प्रयोगान्वक्ष्यामि समासतः प्रदेशिन्याः।
[2]ऊर्ध्वनतलोल[3]कम्पितविजृम्भितोद्वाहितचलायाः[4] ॥
[5]चक्रं तटित्पताकामञ्जर्यः कर्णचूलिकाश्चैव[6] ।
कुटिलगतयश्च सर्वे निर्देश्यास्साधुवादाश्च ॥ ६६
बालोरग[7]वल्यवधूमदीपवल्लीलताशिखण्डाश्च[8] ।
परिपतनवक्रमण्डलमभिनेयान्यूर्ध्वलोलितया[9] ॥ ६७
भूयश्चोर्ध्वविरचिता तारा [10]घोणैकदण्डयष्टिषु च ।

विवाहे च वधूनां प्रणयकोपादौ च पथानुसरणे । आकर्षणस्य केलिवशेन केशादेरयमभिनयः । उत्तरीयालम्बनं स्वभावायोगात् स्त्रीप्रदर्शनेऽयमभिनयः, स्वक्षेत्रे चातुरश्र्यार्थं तत्कूर्परावधि द्वितीयस्य निवेशं कुर्वन्ति ।

सूचीमुखमाह खटकाख्य इति । सूच्याकारमेवास्य मुखम् । नताधोमुखा, लोला पार्श्वान्तरं यान्ती, कम्पिता तत्रैव स्पन्दमाना, विजृम्भिता कुञ्चिता प्रसारिता, ऊद्वाहिता ऊर्ध्वं गच्छन्ती, चला अभिनयत्वेन व्रजन्ती । (चक्रं) आयुधे कर्मोपकरणे रथाङ्गे च राष्ट्रजने च । चक्रे ऊर्ध्वमुखं पार्श्वगतं पार्श्वान्तरं भ्रमन्ती कार्या, विद्युत्सुर्ध्वमुखा गतागता । एवमन्यत्रोत्प्रेक्ष्यम् । मञ्जर्यो लताः; कर्णचूलिका कर्णपूरः, कुटिलगतयो मीनाद्याः, साधुवादाः भद्रं शोभनमित्याद्याः, बालसर्पाणां पृथगुपादानं गतिवैलक्षण्यान्मीनेभ्यः । वल्लीलतामञ्जरीणामवान्तरभेद उत्प्रेक्ष्यः, तद्यथा—अलाबूप्रभृतयो वल्ल्यः द्राक्षाप्रभृतयो लताः, चूतादीनां मञ्जर्यः । शिखण्डः कुमारकाणां काकपक्षः । परिपतनं पातः, वक्रं वक्रत्वं, मण्डलं वर्तुलत्वं, समाहारे द्वन्द्वः । भूयो बहुतरमित्यस्मिन्नर्थे चायमभिनयः । ऊर्ध्वलोलितत्वोक्तिः प्रयोगवृत्त्या वैचित्र्येण विभजनीया । तारा नक्षत्राणि । घोणा नासिका । (एकः)एकत्वसङ्ख्या । दण्डः

1 ड - अस्या विविधान्योगान् 2 म - ऊर्ध्वानत 3 प - लोक 4 द तलायाः 5 द - वक्त्रं ड - चक्र ढ - चक्रतटित्पाताका 6 द - कर्णदूतिकाश्चैव म - चूलिका गण्डाः ष - चूलिकाश्चैष 7 प - पल्लवधूम ड - पल्लवधूप म - पल्लवपुष्पदीप 8 द - वल्लीशिखण्डाश्च 9 ड - वक्त्रमण्डलमभिनेयं चोर्ध्वलोलितया न - नेतान्यूर्ध्वलोलितया द - नेतान्यूर्ध्वतोऽभिनयाः 10 ड - कार न - घोषैक ।

विनता च [1]तथा कार्या दंष्ट्रिषु च तथास्ययोगेन[2] ॥
पुनरपि मण्डलगतया सर्वग्रहणं तथैव लोकस्य[3] ।
[4]प्रणतोन्नते च कार्ये ह्याद्ये दीर्घे च दिवसे च ॥ ६९
[5]वदनाभ्याशे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या[6] ।
[श्रवणाभ्याशे वक्रा विजृम्भणे वाक्यरूपणावसरे]
[7]मेति वदेति च योज्या प्रसारितोत्कम्पितोत्ताना ।

---

परं प्रति तर्जनम् । यष्टिः लगुडः पृथुर्वा, नक्षत्रे तर्जन्यूर्ध्वा । दंष्ट्रिषु चकाराद्दंष्ट्रित्वेनाप्रसिद्धेष्वपि राक्षसादिषु । आस्ये योगो भागः सृक्किलक्षणस्तेन सम्बद्धा नता सती । तथेति तेन दंष्ट्राकारेण कार्या सम्मुखतला कार्येत्यर्थः । पुनरपीत्यूर्ध्वाधोमुखत्वप्रसृतमवधार्यते । ग्रहणमिति, भावप्रधानः सर्वशब्दः, कात्स्न्येन ग्रहणमित्यर्थः । लोकस्य प्रत्यक्षेणावलोक्यमानस्य वा स्मर्यमाणस्य वा । तथैवेति अयमिति पुरोनिर्देशेन, स इति च कर्णक्षेत्रे परावृत्तिनिर्देशेन, ग्रहणस्य लोकतः स्मरणात्मकमभिनयः । एकशब्देन प्रथमत्वात् आद्यो मुख्यो ह्रस्वश्च, वीप्सापेक्षया तत्र तत्र प्रणता, ऊर्ध्वा यान्ती दीर्घे तून्नता, विपरीता दिवसे एकतोऽधस्तलप्रणता अन्यतः प्रोत्तानतलोन्नता परस्परश्लिष्टा संयुतकरणत्वेन पार्श्वात्पार्श्वसंचरणादुदयास्तमयसूचिका । पूर्वं कुञ्चिता ततो विजृम्भिता प्रसारिता वक्रान्तिके कार्यविचारे यदा(?)याप्युत्सारिताभिनीयते । "श्रवणाभ्याशे वक्राधिका जृम्भणा रक्ता(वाक्य?)रूपणावसरे" इति वा पाठः । मेति वारणार्थे प्रसारिता, वदेति अत्रार्थे उत्कम्पितोत्ताना कुञ्चितप्रसारितेत्यर्थः । रोषस्य दर्शने स्वेदमार्जने च प्रसारितैव ललाटपट्टादौ स्वेदं हरन्ती । कुन्तलाः केशाः, गण्डाश्रयाः पत्रभङ्गादयः तद्विषयेऽभिनये

---

1 प - पुनः द - ततः 2 म - दंष्ट्रासु यथार्हयोगेन न - तथार्थयोगेन प - दंष्ट्रीषु तथास्ययोः कार्या 3 द - लाभश्च 4 न - प्रणतीकृता च कार्या ध्याये-दर्थे च दिवसे च म - उन्नतनता च कार्या ह्याद्ये दीर्घे च 5 द - वचनाभ्यासे 6 म - विजृम्भिते वाक्यरूपणे कुर्यात् न - वाक्यरूपेण ड - वाक्यरूपणे च मखे 7 द - स इति पदे च न - स इति वदिति नियोज्या प - स इति तदिति ।

कार्या प्रकम्पिता [1]रोषदर्शने स्वेदरूपणे[2] चैव ॥ ७१
कुन्तलककुण्डलाङ्गदगण्डाश्रयसंश्रयेऽभिनये[3] ।
[4]गर्वेऽहमिति ललाटे रिपुनिर्देशे तथैव च क्रोधे ॥ ७२
कोऽसाविति [5]निर्देशे च कर्णकण्डूयने चैव ।
संयुक्ता संयोगे कार्या विश्लेषिता वियोगे च ॥ ७३
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ।
द्वाभ्यां तु वामपार्श्वे[6] दक्षिणतो [7]दिननिशावसानानि ॥
अभिमुखपराङ्मुखीभ्यां[8] विश्लिष्टाभ्यां प्रयुञ्जीत[9] ।
(द्वाभ्यां [10]प्रदर्शयेन्नित्यं सम्पूर्णं चन्द्रमण्डलम् ॥ ७५
श्लिष्टा ललाटे शक्रस्य कार्या ह्युत्तानसंश्रया[11])

कर्तव्ये तत्क्षेत्रगा । गर्वे योऽहङ्कारः तत्राभिनये ललाटगता । रिपोः प्रत्यक्षस्य निर्देशे अग्रनता, परोक्षस्य रणपूर्वसंरभस्तु विशेषः अनुसन्धाने त्रितयात्मिका "स चायं दुष्टात्मा" इति । क्रोध इति संरम्भपूर्वः कोपः पूर्वकृत इति । किमर्थात्मा प्रश्नः, तत्रासाविति च दूरगतवस्तुनिर्देशे । [1]कर्णकण्डूयनं प्रसिद्धम्[2], कटुकवचनमपि च । संयुक्तेति अधस्तलयोः पार्श्वनैरन्तर्यादित्यर्थः । तद्विभागात्तु भुवि विश्लेषिताभ्यां [3]द्वाभ्यामभिमुख [परिमुखे] पराङ्मुखाभ्यां वामपार्श्वे गच्छन्तीभ्यां दिनावसानमभिनयेत्[4] । वामो हि सोमस्य दक्षिणस्तु सूर्यस्याग्रभागः दक्षिणपार्श्वे गच्छन्तीभ्यां निशावसानं । विश्लिष्टाभ्यामिति तालमात्रान्तराभ्यामिति दीर्घह्रस्वतांशत्वादौपचारिकाभ्यां । द्वाभ्यां त्वित्यङ्गुष्ठ-

1 न - रोमदर्शने 2 म - स्वेदमार्जने न - स्वेदरूपेणैव 3 द - श्रयसंयथाभिनये म - श्रयमण्डनाभिनये 4 द - सर्वेऽहमिति 5 म - निर्देशेऽथ कर्णे द - निर्देशे कर्ण 6 ष - वामगमनं 7 ड - दिशि 8 न - मुखाभ्यां 9 द - वियुञ्जीत 10 प - संदर्शयेत् ड - तु दर्शयेत् 11 ड - कार्याभ्युत्थान संश्रिता द - संस्थिता ड - कार्योत्थानं सुसंश्रितम् म - कार्याभ्युत्थानसंस्थिता ।

1 4 कण्डूयनः 2 प्रसिद्धः 3 द्वाभ्यामन्योन्यपरिमुखे 4 अभिनेयम् ।

[1]परिमण्डलं भ्रामितया मण्डलमादर्शयेच्च चन्द्रस्य॥ ७८

हरनयने च ललाटे शक्रस्य च तिर्यगुत्ताना।

[[2]पुनरपि च भ्रामिताग्रा रूपशिलावर्तयन्त्रशैलेषु[3] ॥

परिवेषणे तथैव हि कार्या चाधोमुखी नित्यम्[4] ।

[5]श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपणे [6]कार्या ॥

शक्रस्याप्युत्ताना तज्ज्ञैस्तिर्यक्स्थिता कार्या]

यस्याङ्गुल्यस्तु विरलाः सहाङ्गुष्ठेन कुञ्चिताः ॥ ७९

[7]ऊर्ध्वा ह्यसङ्गताग्राश्च स भवेत्पद्मकोशकः ।

बिल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम्[8]॥

ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु[9] ।

[बहुजातिबीजपूरकमामिषखण्डं च निर्देश्यम्।][10] ८१

---

प्रसारणे सति आकुञ्चनादित्यर्थः । परिमण्डलं भ्रामितया मण्डलमादर्शयेच्च चन्द्रस्येति । चशब्दो विकल्पार्थः । हरस्य भगवतस्तृतीयनयने प्रदर्शिते सति यदभिनयनं तत्र कर्तव्ये सति ललाटे ऊर्ध्वा वा कार्या । एवं शक्रस्याभिनयने ललाट एवोत्ताना तिरश्चीना च, अङ्गुल्या एवात्र प्राधान्यात् । खटकामुखमध्यमया यल्लोके महेश्वरशक्राभिनयनं दृश्यते तदालाक्षणिकं मन्तव्यम् ।

अथ पद्मकोशं लक्षयति यस्याङ्गुल्यस्तु विरला इति । ऊर्ध्वा इति चतुर्वेदवचना(?)इति यावत् । पद्मस्येव कोशोऽभ्यन्तरं विनतं यस्येति तथा । ग्रहणमिति गृह्यतेऽनेनेति ग्रहणमभिनय इत्यर्थः । एवं कुचौ दृश्येते अनेनेति कुचदर्शनं पद्मकोश इति पूर्वेण संबन्धः । बिल्वादीनां तु ग्रहणे ता एवाङ्गुल्योऽग्र-

---

1 ड - आदर्शौ नास्ति 2 न - भूमिकाग्राकूपशिला 3 म - शिखरेषु 4 प - नित्या 5 म - श्लिष्टे 6 प - शम्भुरूपेण 7 न – ऊर्ध्वाभ्युत्संगताग्रा च 8 म - ग्रहणे युवतिस्तनाभिनयने च द - स्तनाभिनयनं च बालनारीणाम् 9 म - कुञ्चितास्तास्तु 10 द - पूरकनिदर्शनं चापि कर्तव्यम् ।

देवार्चनबलिहरणे समुद्गके[1] साग्रपिण्डदाने च।
कार्यः पुष्पप्रकरश्च पद्मकोशेन हस्तेन[2] ॥ ८२

[3]मणिबन्धनविश्लिष्टप्रविरलचलिताङ्गुलिकराभ्याम्[4] ।
कार्यो [5]विवर्तिताभ्यां विकसितकमलोत्पलाभिनयः॥

अङ्गुल्यः [6]संहतास्सर्वाः [7]सहाङ्गुष्ठेन यस्य च।
तथा निम्नतलश्चैव स तु सर्पशिराः[8] करः॥ ८४

एष सलिलप्रदाने भुजगगतौ तोयसेचने चैव।
[9]आस्फोटने च योज्यः[10] करिकुम्भास्फालनाद्येषु[11] ॥८५

अधोमुखीनां सर्वासामङ्गुलीनां समागमः[12] ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ [13]स भवेन्मृगशीर्षकः॥ ८६

---

पर्वण्यतिकुञ्चिताश्च भवन्ति। क्रव्यादानामामिषलाभे आमिषग्रहणे च। लभिरत्र ग्रहणे। आमिषलाभे सति यद्ग्रहणं तत्रेति केचित्। बलेर्हरणं दानं, वैचित्र्यप्रापणं वा। अग्रपिण्डो गवादेः[1], भोजनाय, मृतस्य वा, यत्र यत्रोत्सवादौ नान्दीमुखश्राद्धादावपसव्यता न कार्या पर्यग्रं पिण्डदानम्। पुष्पप्रकरश्चेति द्वित्रिर्विकीर्णाग्रेण।

सर्पशिरसमाह अङ्गुल्यस्संहता इति। संहताः श्लिष्टाः सहाङ्गुष्ठेनेति कुञ्चितोऽङ्गुष्ठ इत्यर्थः। निम्नं तलं मध्यस्याभिमुखस्य, सर्पशिरस्तुल्यत्वाद्वा तस्येदं नाम। सलिलप्रदाने देवेभ्यः, सलिले च प्रतिग्रहार्थे प्रदीयमाने प्रति-

---

1 म - समुद्गते द - समग्रके ड - संहृते चाग्र 2 म - पुष्पप्रकर्यः पुष्पप्रकरश्च पद्मकोशेन 3 प - मणिबन्धश्लिष्टाभ्यां 4 न - चतुराङ्गुलीकराभ्यां तु प - चलिताङ्गुलीयुतकराभ्याम् म - चलिताङ्गुलिभ्यां कराभ्याम् 5 ड - कार्योपवर्तिताभ्यां न - कार्यो विचिन्तिताभ्यां 6 म - संगताश्चोर्ध्वाः सताङ्गुष्ठेन यस्य तु द - संहता 7 ड - सर्वाङ्गुष्ठेन यस्य तु 8 ड - शिरः 9 न - आस्फोटनेषु 10 द - योध 11 द - स्फालने चैव 12 न - समागतः द - समासतः 13 द - तदासौ।

---

1 गङ्गादेः।

इह साम्प्रतमस्त्यद्य [1]च शक्तेश्चोल्लासनेऽक्षपाते च।
स्वेदापमार्जनेषु च कुट्टमिते प्रचलितस्तु[2] भवेत्॥८७
[3]त्रेताग्निसंस्थिता मध्यातर्जन्यङ्गुष्ठका यदा[4]।
[5]काङ्कुलेऽनामिका वक्रा तथा चोर्ध्वा कनीयसी॥ ८८
एतेन तरुणफलरूपणानि[6] नानाविधानि च [7]लघूनि।

---

गृहीतुरभिनयो येन। सर्पगतावधोमुखः। तोयोपसेचनं कुङ्कुमचन्दनादौ। आस्फोटनं मल्लयुद्ध ऊरुबाह्वादिषु।

मृगशीर्षकमाह मृगस्येव शिरस्थे शृङ्गे यस्य। शीर्षशब्दः प्रकृत्यन्तरम्। इहेति प्रत्यक्षाधिकरणनिर्देशे। साम्प्रतमिति वर्तमानकालनिर्देशे। अस्तीत्यभ्युपगमाभिनये संभवाभिनये च। अद्येति वर्तमाननिर्देशेन गतार्थत्वेऽपि साभिनयेन सूचीमुखेन बाधा माभूदिति पुनरुपात्तम्। एतावत्यधोमुखोऽयं। शक्तेरुल्लासनेऽक्षपाते चोर्ध्वमुखः। गण्डादौ स्वेदमार्जने तदाभिमुखतल ऊर्ध्वमुखः। कुट्टमितं हर्षवशात्सह दुःखोपचारेण स्त्रीणां चेष्टालङ्कारः, तत्राभिमुखतलो बाह्ये विकीर्णाङ्गुलिः[1]।

काङ्कुलमाह त्रेताग्निसंस्थिता इति। त्रेतारूपा अग्नयः आहवनीयादयः, तद्वत्संस्थानमासामिति। विरलयोः श्लिष्ट एवाग्रगोऽङ्गुष्ठ इत्यर्थः। [3]कङ्कुः प्रियङ्कुः तां लातीति तस्यायमर्थः। कङ्कूच्चयने कीदृशः करो भवति। काङ्कुलो वृश्चिक इति तु केचित्। एतेन तरुणानि फलानि तेषामुच्यते, मुक्ताफलबदराणि गत्या लघूनीति परिमितानि मृत्पिण्डग्रासानीत्यर्थः। अङ्गुल्यः अङ्गुष्ठस्तर्जनीमध्ये च तासां बहिःक्षेपः।

---

1 प - शक्योचेल्लालनेश्रुपाते च ड - शक्याचेल्लालनेऽक्ष म - च शक्याश्चोल्लालेऽक्षपाते च। उत्कर्षे वस्त्रस्य च रशनायां चैव विनियोज्यः। 2 प - प्रचलितं तु 3 प - प्रेताग्नि 4 प - तर्जन्यङ्गुष्ठकास्तथा 5 प - लाङ्गुले द - अङ्गुली 6 न - फलरूपाणि ड - फलानि म - फलनिरूपणानि रत्नानि द - फलरूपणानि नानाविधानि योगेन 7 ड - लघूनि कार्याणि।

---

1 विस्तीर्णाङ्गुलिः 2 हेङ्गुष्ठ 3 कङ्कूः प्रियङ्कूः।

कार्याणि [1]रोषजानि स्त्रीवचनान्यङ्गुलिक्षेपैः[2] ॥ ८९

([3]मरकतवैडूर्यादेः प्रदर्शनं सुमनसां च कर्तव्यम् ।
ग्राह्यं बिडालपदमिति तज्ज्ञैरेवं प्रयोगेषु ॥) ९०

[4]आवर्तिताः करतले यस्याङ्गुल्यो भवन्ति हि ।
[5]पार्श्वागताविकीर्णाश्च स भवेदलपल्लवः[6] ॥ ९१

प्रतिषेधकृते योज्यः कस्त्वंनास्तिशून्यवचनेषु[7] ।
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥ ९२

तिस्रः [8]प्रसारिता यत्र तथा चोर्ध्वा कनीयसी ।
तासां [9]मध्ये स्थितोऽङ्गुष्ठः स करश्चतुरः[10] स्मृतः ॥ ९३

---

अलपल्लवमाह आवर्तिता इति । कनिष्ठादिक्रमेण वर्तना परिवर्तनं वा कुर्वन्त्यः । इयर्तीत्यरः चलः चलत्पल्लवाकारत्वादलपल्लवः । अलपद्मक इति (च) तन्नाम । प्रतिषेधस्य कृते अभिनयकरणाय । कस्य त्वमिति, नास्तीति च मिथ्याधिक्षेपार्थे च । शून्यवचनानि 'तच्छास्त्रमसत्प्रयुक्त'मित्यादीनि । पुनरर्थे अहमर्थे उपन्यासे च विस्मये अभिनयः स्त्रीणामुपन्यस्यते पुनःपुनरभिनीयते विस्मयापादकत्वादित्युपन्यासः ।

चतुरमाह तिस्रः प्रसारिता यत्रेति । मध्य इति मध्यमाया मध्य एव । चत्वारोऽङ्गुल्यङ्गुष्ठाश्लिष्टत्वेन सन्त्यस्मिन्निति, अच्प्रत्ययाकारान्तश्चतुरशब्दः । चत्वार्यभिनयनाद्वा चतुरः। सत्त्वकैतवादिषु मुखरागभेदाङ्गेदः। विवृतं प्रकारमेकेन,अनावेशे आवेशे तु द्वाभ्यां,नयनयोरभिनेययोः उपमानोपमेयभावे पद्मदला-

---

1 म - रोषजानि तु न - रोषजानि च 2 द - ह्यङ्गुलिक्षेपैः 3 म - अयं श्लोकः क म - योरेवास्ति 4 न - आवर्तिन्यः 5 ड पार्श्वागता 6 म - सोऽलपद्म इति स्मृतः द - अलपद्मः स कीर्तितः ड - स भवेदलपद्मकः 7 न - वचने च 8 न - प्रसारिताङ्गुल्यः म - प्रसारिता यस्य द - प्रसारिताङ्गुल्यस्तथा 9 प - मध्यस्तथाङ्गुष्ठः 10 ड - करश्चतुरकः ।

---

1 लीलार्थं तेन 2 आनुरूप्यं ।

[1]नयविनयनियमसुनिपुणबालातुरसत्त्वकैतवार्थेषु।
[3]वाक्ये युक्ते पथ्ये सत्ये प्रशमे च विनियोज्यः॥ ९४
[4]एकेन द्वाभ्यां वा किञ्चिन्मण्डलकृतेन हस्तेन[5]।
[6]विवृतविचारितचरितं [7]वितर्कितं लज्जितं चैव॥ ९५
[8]नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशः[9]।
[10]संयुतकरणेनैव तु चतुरेणैतानि कुर्वीत[11]॥ ९६
[12]लीलारती रुचिं च [13]स्मृतिबुद्धिविभावनाः क्षमां पुष्टिम्[14]।
संज्ञामात्रां प्रणयं[15] विचारणं[16] सङ्गतं शौचम्॥ ९७
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम्[17]।
प्रश्नं वार्तायुक्तिं[18] वेषं[19] मृदु शाद्वलं स्तोकम्[20]॥ ९८

---

दिके चैकाकितां निषेद्धुमेवकारः। परगतं लीलाद्यनेनाभिनीयत इति। रुचिं दीप्तिम्। विभावनां ऊहापोहरूपां प्रकर्षं वा। दृष्टिव्यापारे तु कर्तरीमुख एव। सङ्गतं मैत्रीमन्योन्यमग्रश्लेषात्, माधुर्यं हृद्यं, शकारादिवचनादिषु, दाक्षिण्यमानुकूल्यं, मार्दवं मृदुत्वम् अङ्गुष्ठमध्यमादर्शनेन। शीलं स्वभावं, वेषं नेपथ्यं वेशं वा गणिकास्थानं, त्रिभवं पार्श्वात्पार्श्वं गच्छता, अभि(वि?)भवमभि-

---

1 ड - नयननिपुणसमसुनिपुणवालातुरशाठ्यकैतवार्थेषु द - नयविनय मुनिप्रणिपुणबालान्तरसत्यकैतवार्थेषु न - नयविनयनियमसुनिपुणराचितवित - र्कितं लज्जितं चैव 2 म - नियमसुनिपुणबालातुरसत्यकैतवार्थेषु 3 प - वाक्ये मध्ये पुत्रे पद्ये प्रशमे द - वाक्ये युक्ते पथ्ये मध्ये 4 द - एतेन 5 प - मण्डलित- हस्तदण्डेन म - मण्डलगतेन हस्तेन 6 प - विधूतविचारितचरितं म - विहृत विचारितचरितं 7 ड - विवर्तितं 8 द - नयनौपम्ये 9 प - कण्ठनिर्देशम् म - कर्णनिर्देशाः 10 द - संवृत न - संयुतकरणेव 11 म - युञ्जीत 12 ड - लीलान्तरतिरुचिं म - लीलारतिं द - लीलां रतिं प - लीलां रतिं कुचं च 13 म - स्मृतिबुद्धी विभावनां 14 ड - क्षमं पुष्टिम् न - क्षमं तुष्टिम् 15 प - पुष्टिं 16 द - विधारणं 17 द - सुखं स्मृतिं शीलम् 18 ड - वार्तां युक्तिं 19 न - वेदं म - वेशं प - देशं 20 म - शाद्वलस्तोकम्।

[1]विभवाविभवौ सुरतं गुणागुणौ यौवनं गृहं[2] दारान् ।
नानावर्णांश्च तथा चतुरेणैवं[3] प्रयुञ्जीत ॥ ९९
[सितमूर्ध्वेन तु कुर्याद्रक्तं पीतं[4] च मण्डलकृतेन ।
परिमर्दितेन [5]तु नीलं[6] वर्णांश्चतुरेण हस्तेन[7] ॥] १००
मध्यमाङ्गुष्ठसन्दंशो[8] वक्रा चैव प्रदेशिनी ।
ऊर्ध्वमन्ये प्रकीर्णे च द्व्यङ्गुल्यौ[9] भ्रमरे करे ॥ १०१
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम्[10] ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥ १०२
[[11]विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
[12]बालालापे च शीघ्रे च [13]ताले विश्वासने तथा ॥] १०३
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः[14] ।

---

गच्छता चाभिनयेदित्येवमन्यदुत्प्रेक्ष्यम् । दारान् संयुताभ्यां[1] संमुखस्वस्तिकेन दर्शयेदिति । एवं वक्षःप्रभृतिशिरोऽन्तं[2] क्षेत्रविशेषः संयुतासंयुतत्वे चञ्चलत्व-स्थिरत्वे संमुखपराङ्मुखोत्तानाधोमुखव्यश्रत्वादिकं च यथायोगमुत्प्रेक्ष्य अभि-नयविशेषं कुर्यात् ।

भ्रमरं दर्शयति मध्यमाङ्गुष्ठेति । सन्दंशोऽग्रसंयोगः । तदाकृतित्वा-द्भ्रमरो हस्तः ।

हंसवक्त्रमाह तर्जनीमध्यमाङ्गुष्ठा इति । निरन्तरा इति विरलत्वं निषे-धति । श्लक्ष्णादयः श्लक्ष्णत्वादौ वर्तते । प्रस्पन्दनमर्दनमथनविधूननक्षेप-णाभ्यावर्तापसारणादि रूपं यथायोगं युक्त्या योज्यम् ।

---

1 प - विभवाभिभवौ 2 द - गृहान् 3 ड - चतुरेणैव 4 द - पातं 5 न - च 6 म - लीनां 7 न - वर्णं चतुरं च युञ्जीत 8 प - मध्यमाङ्गुष्ठकं देशो ब - संदंशौ 9 ड अङ्गुल्यो 10 म - दीर्घविवृतानाम् 11 प - विद्युतश्च सह-जश्च 12 प - बालालापे 13 प - ताल फ - बाल 14 म - निरन्तरम् ।

1 संयुक्ताभ्यां 2 पक्षःप्रभृतिशिखरान्तं ।

भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते॥ १०४
[1]श्लक्ष्णाल्पशिथिललाघवनिस्सारार्थे मृदुत्वयोगे च[2]।
कार्योऽभिनयविशेषः किञ्चित्प्रस्पन्दिताग्रेण[3]॥ १०५
[4]समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः॥ १०६
[5]एष च निवापसलिले दातव्ये गण्डसंश्रये[6] चैव।
कार्यः प्रतिग्रहाचमन[7]भोजनार्थेषु विप्राणाम्॥ १०७
आलिङ्गने महास्तम्भदर्शने[8] रोमहर्षणे चैव।
[9]स्पर्शोऽनुलेपनार्थे योज्यः[10] संवाहने चैव॥ १०८
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः[11]।
कार्या यथारसं स्युर्दुःखे[12] हनुधारणे चैव॥ १०९

---

हंसपक्षमाह समाः प्रसारिता इति कनीयस्या ऊर्ध्वम्। तथेति परिश्लिष्टा मूलविनताः कार्या इति यावत्। निवापसलिले तस्योदके दातव्ये धर्मार्थं चोदकदाने। पराङ्मुखाङ्गुलिपृष्ठेन च चिन्तया [1]गण्डसंश्रयणे केचित्। तदसत्, हनुधारणं ह्येतत्, कस्माद्गण्डसंश्रयं पत्रभङ्गादि। आलिङ्गने महास्तम्भे चाभिनये संयुतकरणत्वं मन्तव्यं, बाहुद्वयमण्डलीकरणेन रोमहर्षणाद्द्वितीयस्कन्धात् स्कन्धान्तरगमनं, परोक्षे प्रियजनस्पर्शे द्वितीयहस्तस्वस्तिकेन। अनुलेपने अङ्गसमालम्भने। यथारसमिति शृङ्गारहास्याद्भुतादौ करुणादावपि व्यभिचारिविशेषयोगात्[2] संभाव्यत एवायम्। दुःखे च सति

---

1 म - श्लक्ष्णाङ्ग 2 ड - निस्सारार्थामृदुतत्त्वयोगेषु द - निस्सारार्थं मृदुतत्त्वयोगेषु 3 म - प्रसारिताग्रेण 4 द - तिस्रः प्रसारिताङ्गुल्यः न - समाः प्रसारिताङ्गुल्यः 5 प - एष विधिंनिवाप द - एष हि 6 ड - गन्धसंश्रये 7 द - प्रहाशन 8 न - तरुस्तम्भदर्शने ब - आलिङ्गनातरुस्तम्भदर्शने 9 ढ स्पर्शौ तु 10 म - कार्यः 11 न - स्तनान्तरसूचनविभ्रमविषादाः 12 प - स्याद्दुःखे।

---

1 गन्धसंश्रये 2 भेदात्।

तर्जन्यङ्गुष्ठसन्दंशस्त्वरालस्य[1] यदा भवेत्।
आभुग्नतलमध्यस्थः[2] स सन्दंश इति स्मृतः॥ ११०
सन्दंशस्त्रिविधो ज्ञेयस्त्वग्रजो मुखजस्तथा।
तथा पार्श्वगतश्चैव[3] रसभावोपबृंहितः॥ १११
पुष्पापचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम्।
[4]शल्यावयवग्रहणे प्रकर्षणे चाग्रसन्दंशः॥ ११२
वृन्तात्पुष्पोद्धरणं [5]वर्तिशलाकादिपूरणं चैव।
धिगिति च वचनं रोषे[6] मुखसन्दंशस्य कर्माणि॥
यज्ञोपवीत[7]धारणवेधन[8]गुणसूक्ष्मबाणलक्ष्येषु[9]।
[10]योगे ध्याने स्तोके [11]संयुतकरणस्तु कर्तव्यः॥ ११४

---

हनुधारणं यत्तदत्र रसेषु ये भावाः अनुभावा दृष्टिविशेषरोमाञ्चादयः तैरुपबृंहितः स्फुटीकृत(श्लो-१११)इति सर्वहस्तविशेषाय मन्तव्यं मध्ये परिभाषणात्।

सन्दंशमाह तर्जन्यङ्गुष्ठसन्दंश इति स्पष्टार्थः। पुष्पाणां सूक्ष्माणामपचये अग्रसन्दंशः शल्यानां कण्टकादीनां ग्रहणे। वृन्तमाकृष्य पुष्पस्योद्धरणं यदा कुङ्कुमपुष्पादिः। वर्तिशलाकया अञ्जननाडिकावर्तिकया [1]न्यूनादीनां पूरणम्। वेधने मुक्तादीनां, यो गुणो धनुराकृते(ष्टे?)स्तत्र संयुतकरणत्वं च न संश्लेषणस्यैव, अपि तु हस्तद्वयस्याधारमात्रमेव। तच्च पार्श्वद्वयगतत्वेन उप-

---

1 ड - संदंशो ह्यरालस्य 2 ड मध्यश्च 3 प - पार्श्वकृतश्चैव 4 ठ - शिलपायवयग्रहणे ड - शल्याकर्षग्रहणापकर्षणे ढ - शल्यावयवग्रहणापकर्षणे प - शिलपाकर्षग्रहणप्रकर्षणे न - शल्यावयवग्रहणावकर्षणे 5 प - वर्त 6 प - धिगिति वचने च रोषे च - भाषणमीषत् न - वचने रोषात् 7 न - निर्धन ड - निधन 8 छ - वर्धन 9 ड - बाणलक्षेषु न - बाललक्ष्येषु 10 प - योगस्थाने ड - योगध्याने 11 ड - संयुक्तकरस्तु न - संयुतकरणाः प्रकर्तव्याः।

---

1 न्यूनादिना।

[1]पेलवकुत्सासूयासदोषवचने[2] च वामहस्तेन ।
किञ्चिद्विवर्तिताग्रः[3] प्रयुज्यते पार्श्वसन्दंशः ॥ ११५
आलेख्यनेत्ररञ्जनवितर्कवृन्त[4]प्रवालरचनं च[5] ।
[6]निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ॥ ११६
[7]समागताग्रास्सहिता यस्याङ्गुल्यो भवन्ति हि ।
[8]ऊर्ध्वा [9]हंसमुखस्यैव स भवेन्मुकुलः करः ॥ ११७
[10]देवार्चनबलिकरणे[11] पद्मोत्पलमुकुलरूपणे[12] चैव ।
विटचुम्बने च कार्यो विकुत्सिते[13] विप्रकीर्णश्च[14] ॥ ११८

---

युपरिभावेनोत्प्रेक्ष्यम् । पेलवमसारम् । प्रवालस्य रचनं गण्डतलबाहुशिखरादौ पत्रभङ्गकरणमित्यर्थः । यदि वा पल्लवस्यैव पत्रच्छेद्यालङ्कृतस्य ललाटादौ निवेशितस्य तत्रापसंश्लेषणार्थमस्य हस्तस्य प्रयोगः । नारीभिरिति परिमितालक्तकपीडनमनेनेति दर्शयति ।

मुकुलमाह समागताग्रा इति । मुकुलाकारत्वान्मुकुलः । देवार्चनादिप्रारम्भे मुकुलव्यापारावेशे तु पद्मकोशवदिति[1] पठता पिटकस्य चुम्बन इति केचित् । शपिटेति (विटेति?) पाठः । स्वाभिप्रायमाविष्कर्तुं[2] प्रमदासन्निधौ स्वहस्तमेवमुकुलितं विटाश्चुम्बन्तीति विटचुम्बनम् । यदि वा विटैर्नारीणां कुचचिबुकादिस्थानेषु अङ्गुलिपञ्चकेन समं सशब्दं नखस्पर्शने कामसूत्रेष्वा-

---

1 प - एवं कुत्सा 2 न - सदूषवचने 3 ङ - किञ्चिद्वर्तिकराग्रः न - किञ्चिद्विवर्तितोऽग्रः 4 प - वृत्त छ - वचनं 5 ङ - रचनेषु 6 ङ - निष्पीडितं 7 प - समागताग्रसहिता 8 न - ऊर्ध्वे 9 प - हंसमुखस्येव 10 प - देवार्चने 11 म - हरणे 12 छ - कुमुदरूपणे 13 छ - विकुत्सितो 14 च - विप्रकीर्णस्य प - विप्रकीर्णे च ।

---

1 पद्मकोशमिति 2 श्रीवष्कर्तं ।

[1]भोजनहिरण्यगणनामुख[2]सङ्कोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः[3] ॥ ११९
पद्मकोशस्य हस्तस्य ह्यङ्गुल्यः[4] कुञ्चिता यदा[5] ।
ऊर्णनाभः स विज्ञेयः[6] केशचौर्यग्रहादिषु ॥ १२०
शिरःकण्डूयने चैव [7]कुष्ठव्याधिनिरूपणे ।
सिंहव्याघ्रेष्वभिनयः [8]प्रस्तरग्रहणे[9] तथा ॥ १२१
मध्यमाङ्गुष्ठसन्दंशो[10] वक्रा[11] चैव प्रदेशिनी ।
शेषे तलस्थे कर्तव्ये [12]ताम्रचूलकरेऽङ्गुली[13] ॥ १२२
[14]विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
[15]ताले विश्वासने चैव [16]शीघ्रार्थे [...]ञ्ज्ञितेषु च[17] ॥ १२३

च्छुरितकमिति ताद्दृष्टचुम्बनम् । हिरण्यं कङ्कणद्वारेणाभिनीयतेऽङ्गुलीयकादीनां तु मोचने। गणना पञ्चसङ्ख्या । तज्ज्ञैरित्युचितामितिकर्तव्यतामनुसन्धापयति ।

ऊर्णनाभमाह पद्मकोशस्येति । ऊर्णनाभिर्जालकारः क्रिमिः । तस्य यतो मक्षिकादिग्रहणे ईदृक्करणानां सन्निवेशो भवत्यतो मत्वर्थीयोऽत्राच्प्रत्ययः। केशानां ग्रहणे चौर्येण परदर्शनशङ्कया लाघवाद्ग्रहः । यत्र सिंहव्याघ्रादि स्वस्तिकेन चिबुकक्षेत्रगतेनाभिनयेत् । ते हि स्थिताः स्वस्तिकेन, आसने कररुहवन्तश्च । प्रस्तरः पाषाणः, निकषपाषाण इत्यन्ये । [2]दर्भच्छटा इत्येके ।

ताम्रचूडमाह मध्यमाङ्गुष्ठसंन्दंश इति । चूडामुक्तकुकुटाकारत्वात्ताम्रचूडः। तालेष्विति? (ताल इति?) कालमानो यथा कचित्तालभुवि सहिज्जु(?)इत्यादौ ।

1 प - आदर्शे नास्ति 2 न - गणतासुख 3 न - तज्ज्ञैरेवं प्रयोक्तव्यम् 4 म - त्वङ्गुल्यः ड - अङ्गुल्यः 4 न - कुञ्चितास्तथा 5 प - चौर्यकेश 6 प - कुष्ठस्याधि 7 प - व्याघ्राद्यभिनयः न - व्याघ्राद्यभिनये म - व्याघ्राभिनयने 8 छ - प्रशस्तग्रहणे 9 प - प्रथने 10 छ - सन्दंशौ 11 द - वक्रा 12 छ - ताम्रचूडे 13 न - कराङ्गुली 14 प - विच्युतिश्च क - व्युत्पन्नश्च च - व्युच्युतश्च 15 प - तालेष्विष्वसिते मं - जालविश्वासने न - बालविश्वासने 16 ड - शीघ्राक्षे 17 प - शङ्कितेषु च ।

1 पञ्चात्सङ्ख्या 2 दर्भजटा ।

[तथा कलासु काष्ठासु निमेषे तु[1] क्षणे तथा ।
एष एव करः कार्यो बालालापनिमन्त्रणे[2] ॥] १२४

[3]अथवा—

अङ्गुल्यस्संयुता[4] वक्रा उपर्यङ्गुष्ठपीडिताः ।
प्रसारिता कनिष्ठा च [5]ताम्रचूडकरः स्मृतः ॥ १२५
[6]शतं सहस्रं [7]लक्षं च कनकं चापि[8] दर्शयेत्[9] ।
क्षिप्रमुक्ताङ्गुलीभिस्तु[10] स्फुलिङ्गान्विप्रुषस्तथा[11] ॥ इति ।
असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।

[12][अथ संयुतहस्ताः]

[13]अतश्च संयुतान्हस्तान् गदतो[14] मे निबोधत ॥ १२७

संज्ञितं बालादेराह्वानम् । अन्ये तु लक्षणान्तरमस्य पठन्ति, "अङ्गुल्यः संयुता" इत्यादि । मुष्टिरेव प्रसारितकनिष्ठ इत्यर्थः । क्षिप्रं कृत्वा मुक्ताभिरङ्गुलीभिरिति ।

असंयुता इति । असंयुतास्तावदेते भवन्ति । न त्वेतेऽसंयुता एव । नाप्येत एव कोहलादिभिरन्येषां दर्शनात् । अतश्चेति । एभ्य एवानुसंयुतेभ्यः अन्यश्लेषाद्ये संयुता उत्पद्यन्ते तान् स्वयं निबोधत मदीयं वचनमनादृत्योत्प्रेक्षध्वम् । तथा हि [1]कूर्पराधीतत्रिपताकेन पार्श्वे खटकामुखेन स्त्रीणामभिनयः, खटकेन कर्णान्तमागच्छता वामेन च कपित्थमुष्ट्यन्यतरेण बाणमोक्षस्य । एतच्चित्राभिनये प्रतिजागरिष्याम इत्यास्तां तावत् । चकारादन्यानि च वक्ष्यमाणानि निबोधतेति सम्बन्धः ।

1 म - निमेषेषु 2 म - बालालापाभिमन्त्रणे 3 ढ - प योर्नास्ति (द्वौ श्लोकौ च) 4 ड - सहिता द - संहताः न - संयुता वक्रा तूपर्यङ्गुष्ठपीडिता 5 ड - ताम्रचूडः करः स्मृतः 6 म - नतं 7 म - लक्षादि 8 म - वापि 9 ड - करेणैकेन योजयेत् ढ - करणे तेन योजयेत् 10 प - अङ्गुलीभिश्च 11 ड - लिङ्गविष्फुलषास्तथा ढ - लिङ्गविष्फुरुषस्तथा म - स्फुलिङ्गविप्रुषस्तथा 12 छ - आदर्शे एव 13 ड - पुनश्च म - यतश्च 14 क - आदितो ।

1 कूर्पराधिक ।

पताकाभ्यां[1] तु हस्ताभ्यां संश्लेषादञ्जलिः[2] स्मृतः ।
देवतानां गुरूणां च मित्राणां[3] चाभिवादने ॥ १२८
[[4]स्थानान्यस्य पुनस्त्रीणि वक्षो वक्त्रं शिरस्तथा ।]
देवतानां शिरस्स्थस्तु गुरूणामास्यसंस्थितः ॥ १२९
वक्षःस्थश्चैव मित्राणां[5] स्त्रीणामनियतो भवेत्[6] ।
उभाभ्यामपि हस्ताभ्यामन्योन्यं पार्श्वसङ्ग्रहात् ॥
हस्तः [7]कपोतको नाम कर्म चास्य निबोधत ।

---

तेषामञ्जलिं तावल्लक्षयति पताकाभ्यां त्विति । अन्यस्य श्लेषेऽपि न नामान्तरम् । यथा सूचीमुखयोः संबन्धान्यभिनयन्ते । अत्र तु नामान्तरमिति तुशब्दः । स्मृत इति लोकेऽपि "प्राञ्जलिः पुष्पकेतुः" (कुमा २-६३) इत्यादौ प्रसिद्ध इत्यर्थः । सम्यग्ग्रहणेन संमुखं सर्वासामङ्गुलीनामयं श्लेषो लक्ष्यते । [1]उक्तमेव विनियोगं विभजति देवतानामिति तिस्रोऽभिवन्दनापेक्षया कर्मणि षष्ठी; [2]स्त्रीणामिति कर्तरि षष्ठी ।

कपोतमाह उभाभ्यामिति, सङ्ख्यापदोपादानं यथारुचि आधाराधेयभावप्रतिपत्त्यर्थम् । कम्पत इति कपोतो भीरुः पक्षी तत्प्रकृतिरन्योऽपि कपोतस्तस्य यतोऽयं भवत्यतो नाम्नैव भीतविषयतास्य । तथा हि—रामाभ्युदये प्रथमेऽङ्के वटोः । कुचाभिनयेऽयमेव प्रधानः । वक्षस्स्थ इति सर्वत्र संबध्यते । भीताभिनये तु कम्पितेऽपि । स्त्रीभिरित्यधमोपलक्षणम्, विनयग्रहणादौ कुट्टनादेरपि । अयमेव च कूर्माकारत्वात् कूर्मक इति लोके प्रसिद्धः । अङ्गुलिपरिघृष्यमाणावयवत्वात् अङ्गुलिघृष्यमाणस्समुखः । खेदश्चिन्ता ।

---

1 प - च  2 म - संश्लेषात्सोऽञ्जलिः  3 प - मिश्राणां  म - विप्रणां 4 छ - आदर्शे एव  म - विप्राणां  6 ङ - शेषे त्वनियमो भवेत्  म - स्त्रीणां कार्यं यथेष्टतः  च - स्त्रीणां कार्यो यथेप्सितः  न - क्रोधेष्वनियमो भवेत्  7 प - कपोतनामा स्यात्कर्म चास्याभिधीयते ।

---

1 रक्तमेव  2 तिसृणां ।

[1]एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च संभाषे[2]॥
शीते भये च कार्यो वक्षस्स्थः कम्पितः स्त्रीभिः[3]।
[4]अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु[4]॥
एतावदिति च कार्यो नेदानीं कृत्यमिति चार्थे[6]।
अङ्गुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरनिस्सृताः[8]॥ १३३
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते[9]।
एष मदनाङ्गमर्दे सुप्तोत्थितजृम्भणे[10] बृहद्देहे ॥ १३४
[11]हनुधारणे च योज्यः शङ्खग्रहणेऽर्थतत्त्वज्ञैः[12]।

---

कर्कटकमाह अङ्गुल्यो यस्येति । अन्योन्यस्य चान्तराणि मध्यानि तैर्निस्सृताः[1]।अन्योन्यसंमुखकर्कटदंष्ट्राद्वयाकारेण अङ्गुलीनामलावस्थानात् कर्कटः। मदनेऽङ्गकृते अङ्गमोटने, अग्रतः पार्श्वतः ऊर्ध्वं वा भुजयुगलात्पराङ्मुखाङ्गुलिः। सुप्तोत्थितपदमुपलक्षणम्[2] सर्वदा हि जृम्भणेऽस्य प्रयोगः। बृहद्देहाभिनये तूदरक्षेत्रे सम्मुखतलोऽयं हस्तः। हनुधारणेऽङ्गुलिपृष्ठप्रतिष्ठापितहनुदेशः। शङ्खग्रहणे किञ्चित्सङ्कुचितोऽन्योन्याभिमुखाङ्गुलिः। एतदेवाह अर्थेति—अभिनेयस्यार्थस्य यत्तत्त्वं परमार्थः तद्ये जानन्त्यभिनयेऽनुसन्धातुं शक्नुवन्ति तैः।

---

1 क – एषोऽभिनयाभिगमे ड - द्विषद्भियाभ्युपगमे 2 न - संभावे 3 प - कल्पितः स्त्रीभिः न - कम्पितः स्त्रीणाम् 4 म - एषोऽङ्गुलिविच्यवनात्प्रशिथिलमोक्षाच्च मन्दवाक्येषु 5 प - भिन्नवाक्येषु च - विन्नवाक्येषु 6 क - भेदाङ्गीकृत्यमिति वार्थे 7 प - अन्योन्य म - त्वन्योन्य 8 फ - हस्तस्यान्योन्याभ्यन्तरनिस्सृताः 9 प - लक्ष्यते फ - कर्मास्य कथ्यते म - कर्म चास्य निबोधत 10 ड - सुप्तोत्थविजृम्भणे 11 च - अनुधारणे 12 ड - ग्रहणे च तत्त्वज्ञैः।

---

1 तैर्निस्सृता 2 सर्वदा चि।

मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ[1] । १३५
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥
स्वस्तिकविच्युति[2] करणाद्दिशो घनाः[3] खं वनं समुद्राश्च[4]
ऋतवो मही [5]तथौघं विस्तीर्णं चाभिनेयं स्यात्[6] ॥
[7]खटकः खटके न्यस्तः खटकावर्धमानकः । १३७
[8]शृङ्गारार्थेषु योक्तव्यः[9] प्रणामकरणे तथा[10] ॥

---

अथ स्वस्तिकमाह मणिबन्धनविन्यस्ताविति । यत्र शुद्धमेव स्वस्तिकपदमुपादीयते तत्रेदृश एव सन्निवेशः प्रदेशेषु मन्तव्यः, यथा—चित्राभिनयादावर्थप्रकरणादिवशात्त्वन्यत्रापि प्रवर्त्येत । यथा—स्वस्तिकविच्युतिकरणादित्यादौ (९-२०) पताकयोगेऽपि तथापि मणिबन्धनविन्यस्तत्वं नामानुयाय्येव रूपम् । अत एव केचिदेतावतास्य लक्षणं परिशिष्टं तूदाहरणदिगर्थमिति प्रतिपन्नाः । स्त्रीप्रयोजिताविति । पताकस्वस्तिककर्माणि स्त्रीभिरमुनैव कार्याणीत्यर्थः । स्वस्तिकार्थलक्षणसमाक्रान्तत्वात्स्वस्तिकः ।

खटकावर्धमानमाह खटक इति लभ्यते । अन्ये त्वन्योन्याभिमुखं खटकद्वयमस्य रूपमित्याहुः । खटकस्य आ समन्तात् बहिर्योगादिदं नाम । शृङ्गारार्थेषु शृङ्गारप्रयोजनेषु ताम्बूलग्रहणादिषु । तथा हि वक्ष्यते—

"खटकावर्धमानं तु कृत्वा विटगतिं व्रजेत्" इति । (अ १२-११०)

तथेति प्रयोजन एव प्रायेणेश्वरीप्रसादनादौ प्रणाम इत्यर्थः ।

"कुमुदोत्पलकुन्देषु कर्तव्यः शङ्खधारणे"

इति वा पाठः ।

---

1 न - वर्धमानकौ 2 न - विच्युत 3 च - करणाद्दिशोऽचनाः ड - घनः
4 ड - खं समुद्राश्च 5 च - तथोर्ध्वं ड - तथोच्चं 6 म - अभिनेतव्यम् न - चाभिनेयं स्यात् 7 ड - कटकः कटकैर्न्यस्तः कटको क - खटकः खेटके
8 म - प्रतोदरश्मिग्रहणे चन्द्रसूर्योदये तथा ।
कर्तव्यः स प्रणामे च शृङ्गारार्थे विधीयते ॥
9 ड - शृङ्गारार्थे प्रयोक्तव्यः 10 ड - प्रमाणकरणे तथा न - प्रमाणकरणेषु च ।

[अन्ये—
कुमुदोत्पलवृन्तेषु कर्तव्य[1]श्छत्रधारणे ॥ इति ]
अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ[2] ।
उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे करः ॥[3] १३९
[4]सनिष्पेषकृते चैव[5] रोषामर्षकृतेऽपि च[6] ।
[7]निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृते भवेत् ॥ १४०

---

उत्सङ्गमाह अरालौ त्विति। विपर्यस्ताविति स्वस्तिकरूपौ । उत्तानाविति स्वसम्मुखौ, वर्धमानकाविति विनतौ तेन दक्षिणो वामस्कन्धक्षेत्र इति यावत्[1] । अत एव च प्रकोष्ठस्वस्तिकत्वं लक्ष्यते। स्वस्तिक एव दक्षिणपार्श्वस्थ इति विपर्यस्तत्वमिति केचित्। अधोनखत्वमित्यन्ये । स्वस्तिकाकारौ कूर्परौ कृत्वा कक्षक्षेत्रात् प्रवेशमुक्ताद्बाह्येऽङ्गुल्यो यदा भवन्ति पृष्ठं च हस्तयोर्बहिर्मुखं तदा विपर्यस्तत्वमिति तु युक्ततरम् । उत्सङ्गग्रहणयोग्यत्वकरणादुत्सङ्गः । स्पर्शस्य परोक्षस्य ग्रहणेऽभिनये । निष्पेषः पीडनम्, तेन सह यद्यत्क्रियते अतिप्रयत्नेन साध्य इत्यर्थः। रोषकरणे यथा—'एषोऽस्मि ते दृढनिपीडनबाहुयन्त्रे'त्यादौ। अमर्षकरणे यथा—विदूषकादेरीर्ष्याकरणे प्रसादनानङ्गीकरणे पर्यायात्सकृत्प्रक्षेपात्[2] । सिंहावलोकित इत्यन्ये पठन्ति। कर्तरि कर्मणि वा षष्ठीति व्याचक्षते ।

---

1 च - कर्तव्यौ 2 ड - उत्तानावूर्ध्वमानकौ प - उत्तानावूर्ध्वमानतौ 3 क - कार्यः सिंहावलोकिते 4 क - आदर्शे द्वौ श्लोकौ न स्तः 5 ड - करश्चैव च - कृतं चैव 6 न - रोषामर्षकृतेषु च ड - रोषामर्षे कृतेऽपि च 7 म - निपीडितः न . निष्पीडितस्तथा चैव ।

---

1 धार्येत 2 पर्यायादुपकूर्परक्षेपात् ।

[1]मुकुलं तु यदा हस्तं कपित्थः परिवेष्टयेत्।
स मन्तव्यस्तदा हस्तो निषधो[2] नाम नामतः॥ १४१
संग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च।
सङ्क्षेपः साङ्क्षिप्तं निपीडितेनाभिनेतव्यम्॥ १४२
[[3]शिखरस्तु यदा हस्तो मृगशीर्षेण पीडितः।
निषधो नाम विज्ञेयः स भयार्ते विधीयते॥ १४३
[4]गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम्।
दक्षिणं चापि वामस्य कूर्पराभ्यन्तरे न्यसेत्॥ १४४
स चापि दक्षिणो हस्तः सम्यङ्मुष्टिकृतो भवेत्।
इत्येष निषधो हस्तः कर्म चास्य निबोधत॥ १४५
एतेन धैर्यमदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः।
अभिमानावष्टम्भस्तम्भस्थैर्यादयः कार्याः॥ १४६
[5]अथवा—
ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्मुखौ।
जालवातायनादीनां प्रयोक्तव्योऽभिघट्टने॥] १४७

---

निषधमाह मुकुलन्त्विति। कपित्थहस्तेन परिवेष्ट्यमानमुकुलं तदभ्यन्तरे निषण्णमास्त इत्यतोऽयं निषधः। (सङ्ग्रहः) सम्यग्ग्रहणं शास्त्रार्थादेः, परिग्रहः स्वीकारः, धारणमत्यजनम्, समयो नियमः, सत्यवचनं तथ्यमिति, सङ्क्षेपस्तात्पर्यम्, समस्तमनेनैव संक्षिप्यमाणमपि। स्वीकृताभिनयेन हि तद्वति द्रव्येऽभिनय इत्युक्तम्। संक्षिप्तं तु सम्यक् क्षिप्तं क्वचित्स्थापितमित्यर्थः।

---

1 कखगघचछ - आदर्शेष्वेवास्ति 2 क - निषेधो 3 भ - आदर्श एवास्ति
4 जप्रभृति भान्तादर्शेषु श्लोकात्रयः सन्ति। ते कीर्तिधराचार्यपाठानुसारिण इति ज्ञायते। 5 - अयं श्लोको डढयोरेवास्ति। एतद्वर्धमानस्य लक्षणमिति व्याख्यात्रा अनादृतम्।

अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ[1] ।
यदा भवेतां करणे स दोल[2] इति संज्ञितः ॥ १४८

[3]सम्भ्रमविषादमूर्च्छितमदाभिघाते तथैव चावेगे ।
व्याधिप्लुते च शस्त्रक्षते[4] च कार्योऽभिनययोगः[5] ॥

यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः[6] ।
द्वितीयः पार्श्वसंश्लिष्टः स तु[7] पुष्पपुटः स्मृतः ॥

[8]धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि[9] ।
ग्राह्याण्युपनेयानि[10] च तोयानयनापनयने[11] च ॥

---

दोलं लक्षयति अंसाविति । हस्तयोः प्रकर्षेण लम्बमानत्वादेव स्कन्धयोः शैथिल्यमदृढत्वं भवति । पताकाङ्गुलीनामवष्टम्भान्युद्धारणाय वा करणक्रियायामङ्गुलिशैथिल्यलक्षणायां सत्यामित्यर्थः । दोलाकारत्वेन दोला । अभिनयनव्यापारे योगो यस्य स तथाविधोऽयं हस्तः । कार्य इत्यनेन तत्र तत्राभिनेये पार्श्वात्पार्श्वान्तरगमनं निपतनं स्तब्धत्वमित्यादिकां तावदितिकर्तव्यतां सूचयति । अभितोऽग्न्यादिव्यसनजो दोषः (अभिघातः) ।

पुष्पपुटमाह यस्तु सर्पशिरा इति । अङ्गुलिस्थाने निरन्तरं बाढमपि । संमुखत्वं माभूदित्याह पार्श्वेति । द्वितीय इति सर्पशिराश्च हस्तः । हस्तपुटेनेदृशेन पुष्पग्रहणमिति । पुष्पपुट इतरः ।

---

1 ड - पताकौ च प्रलम्बितौ 2 ड - डोल 3 न - सभ्रम 4 न - शत्रुक्षते 5 प - योगस्तु 6 प - निरन्तरा ड - निरन्तरम् 7 ड - द्वितीयपार्श्वसुश्लिष्टा सा तु द - द्वितीयपार्श्वसंश्लिष्टः स च न - द्वितीयपार्श्वसंस्पृष्टः स तु 8 प - धान्यजल ड - धान्यपुष्पभक्ष्यान्यनेकनानाविधानि शुकेन फ - धान्यजलपुष्पसदृशान्येते न 9 प - संयुक्तेन 10 प - गेयानि 11 ड - तोयापनयापनयने ज - तोयापनयापनये ।

पताकौ तु[1] यदा[2] हस्तावूर्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ[3] तदासौ मकरः स्मृतः ॥ १५२
सिंहव्यालद्वीपिप्रदर्शनं[4] नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा[5] अभिनेयास्तेऽर्थयोगेन ॥ १५३
कूर्परांसोचितौ[6] हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः स[7] तु करः कर्म चास्य निबोधत ॥ १५४
[8]एष च वधूवराणामुद्वाहे चातिभारयोगे च[9] ।
स्तम्भग्रहणे च तथा[10] शैलशिलोत्पाटने चैव ॥ १५५

---

मकरमाह पताकौ त्विति । अङ्गुष्ठयोर्मकरकर्णद्वयवदवस्थानान्मकरः । द्वीपिनश्चित्रकायाः । मत्स्यानामिति प्रदर्शनमिति संबन्धः । अर्थयोगेनेति अग्रपार्श्वादिषु [1]स्थितचलनादिनार्थवशात्प्रयोज्य इत्यर्थः ।

गजदन्तमाह कूर्परांसोचिताविति । कूर्परांसशब्देनोभयसामीप्यं तयोरन्तरालं गृह्यते पूर्वदक्षिणे तु यथा तत्राकुञ्चितौ तत्स्थानसंवेष्टनपरौ । तद्यथा वामे बाहौ दक्षिणो दक्षिणे वामहस्तः स्तम्भाकारवेष्टितदन्ताकृतियोगाद्गजदन्तः। वधूनां वराणां च विवाहस्थाननयने शिलोत्पाटने गतागतत्वं मन्तव्यम् ।

---

1 ज - च 2 ड - हस्तौ मुखाङ्गुष्ठौ न - हस्तौ मुक्ताङ्गुष्ठौ 3 म - हस्तः स मकरः स्मृतः ड - तदासौ मकरः करः च - तदा स मकरः करः 4 प - द्विपदर्शनं ड - द्विपदर्शने द - द्विपदर्शने 5 ड - ह्यभिनेयास्तेन हस्तेन 6 न - कूर्परांसाश्रितौ ड - कोर्परांसाश्रितौ प - कूर्परे सन्धितौ 7 ड - विज्ञेयः फ - स विज्ञेयः करः कर्मास्य वक्ष्यते 8 प - यानवधूग्रहणे वत्सोत्सङ्गादिभार न - वरयानवधूग्रहणे वत्सोत्सङ्गादिभार म - वरयानवधूग्रहणे बालग्रहणेऽतिभारयोगे च च - भूधरवधूवराणां ज - पुत्रवधूभाराणामुद्वहने चापि भारयोगे च 9 च - योगेन 10 म - शैलस्योत्पाटने ।

---

1 स्थिरचलत्वादिना ।

शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
[1]शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृतः ॥ १५६
दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च ।
उत्कण्ठिते च तज्ज्ञैरभिनययोगस्तु कर्तव्यः[2] ॥ १५७
[3]ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यो विघाटने[4] ॥ १५८
*[सङ्ग्रहपरिग्रहोद्धारणं च समयं च सत्यवचनं च ।
[5]सङ्क्षेपः [6]संक्षिप्तं निपीडितेनाभिनेतव्यम् ॥]
[7]उक्ता ह्येते द्विविधास्त्वसंयुताः[8] संयुताश्च सङ्क्षेपात् ।
[9]अभिनयकरास्तु ये त्विह तेऽन्यत्राप्यर्थतः साध्याः ॥

अवहित्थकमाह शुकतुण्डाविति । अभिमुखौ पूर्वाननावञ्चितौ वर्तनया अधोमुखौ सन्तावाविद्धावधोगमितौ । अवहित्थसूचकत्वादवहित्थः । एवं हि कुर्वन्नाशयमात्मीयं नो भिनत्ति ।

वर्धमानमाह—ज्ञेयो वै वर्धमानश्च हंसपक्षौ पराङ्मुखाविति । अन्योन्यं स्वस्तिकवदवस्थितौ लक्ष्ये तु अन्योन्यानिकटौ दृश्येते । स्वस्तिकताहीनावेव केवलं पराङ्मुखौ परस्परचलनेन विस्तारयोगाद्वर्धमानत्वम् । आदिशब्देन वक्षःकवाटादि ।

उपसंहरन् सूचयति उक्ता ह्येत इति । उक्ता ह्येते यस्मादेते उक्ताः सङ्क्षेपमाश्रित्याभिनेयविषये निरूपिताः । तुरिति तस्मादन्यत्राप्युक्तात् अभिनेयात् अर्थादभिनया अर्थान्तरेऽपि साधयितुं शक्याश्चाहार्याश्च । तुर्हेतौ, यस्मादाभिमुख्यतया, नार्थमनेकरीति त्वदृष्टार्थमर्थेऽर्थतः ।

1 म - शनैरभिमुखाविद्धाववहित्थस्तु स स्मृतः  2 च - योगश्च कर्तव्यः फ - योगः प्रयोक्तव्यः
3 ड - मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥ (कीर्तिधरस्य पाठः)
4 म - विघट्टने  5 प - संक्षेपस्तु  6 ड - संक्षिप्तनिपीडितेन  7 च - उक्ताश्चैते
8 च - ह्यसंयुताः 9 ड - अभिनयकरा ये त्विह ते । * कीर्तिधरपाठानुसारी विनियोगः ।

[अन्यैरप्युक्तम्[1]—

[2]आकृत्या[3] चेष्टया चिह्नैर्जात्या विज्ञाय वस्तुतः[4]।
स्वयं [5]वितर्क्य कर्तव्यं हस्ताभिनयनं बुधैः ॥ इति]
नास्ति कश्चिदहस्तस्तु[6] नाट्येऽर्थोऽभिनयं [7]प्रति।
[8]यस्य यद्दृश्यते रूपं बहुशस्तन्मयोदितम्॥ १६२
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह[9]।
[10]छन्दतस्ते प्रयोक्तव्या रसभावविचेष्टितैः॥ १६३
देशं कालं प्रयोगं चाप्यर्थयुक्तिमवेक्ष्य च[11]।
हस्ता ह्येते प्रयोक्तव्या नृणां स्त्रीणां विशेषतः[12]॥

---

एवमभिनयमभिधायाभिनयान्तरमप्यस्तीति दर्शयति नास्ति कश्चिदिति। नाट्यमिह तदुपयोगिनो विभागादयः। अत्र हेतुः यस्य यद्दृश्यत इति।

एवमुक्तानामेवाभिनयानां साङ्कर्येण प्रयोगमनुज्ञायानुक्तमपि सङ्ग्रहीतुमाह अन्ये चापीति। अर्थोऽभिनयसामर्थ्यं शोभातिशयः। छन्दत इति नाट्याचार्येच्छाप्रवाहानुसारिण्यामित्यर्थः। रसाः स्थायिनः। भावाः सञ्चारिणः तत्सूचकानि यानि विचित्राणि चेष्टितानि सात्त्विकोपाङ्गानि तैः सह। एवं लोकधर्मीप्रदर्शने प्रसिद्धोदाहरणमात्रमभिनेयानां परिगणनमित्याख्येयम्। देशः क्षेत्रविशेषः प्रयोगः सुकुमारोद्धतरूपकविशेषः। अर्थस्य युक्तिरुपपत्तिः मुख्यगौणलाक्षणिकव्यङ्ग्यादिभेदेन। अवेक्ष्येति विचार्येत्यर्थः। प्रयोक्तव्या इति

---

1 कखगघच - आदर्शेष्वेवास्ति 2 दम - योर्नास्ति 3 ड - प्रकृत्या 4 प - तत्पुनः 5 ड - वितर्कात् 6 म - अहस्तो हि 7 च - नाट्याभिनयं म - नाट्ये ह्यभिनयं प्रति प - हस्ताभिनयनं ज - नाट्यार्थाभिनयं प्रति ड - नाट्येऽभिनयनं प्रति 8 म - दृश्यते बहुरूपन्तु येषां ते गदिता मया 9 म - ये दृष्टा लौकिकाः कराः द - लौकिकात्मकरास्त्विह 10 न - छन्दतस्तेऽपकर्तव्या रसभाव म - छन्दतस्तेऽभिनेतव्या नानाभाव ड - छन्दतस्ते नियोक्तव्या द - छन्दतस्तेऽपि योक्तव्या 11 च - अर्थमुक्तिमवेक्ष्य च द - चाप्यर्थयुक्तमपेक्षते 12 ड - प्रयोक्तव्याः स्त्रीणां नृणां विशेषतः म - स्त्रीणां नृणामथापि च।

सर्वेषामेव हस्तानां यानि कर्माणि सन्ति वै[1]।
[2]तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु[3]॥ १६५
उत्कर्षणं विकर्षणं तथा व्याकर्षणं पुनः[4]।
परिग्रहो निग्रहश्चाह्वानं तोदनमेव च[5]॥ १६६
[6]संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा।
[7]विक्षेपधूनने चैव [8]विसर्गस्तर्जनं तथा॥ १६७
[9]छेदनं भेदनं चैव स्फोटनं मोटनं तथा[10]।
[11]ताडनं चेति विज्ञेयं तज्ज्ञैः कर्म करान्प्रति॥ १६८
[[12]उत्तानः पार्श्वगश्चैव तथाधोमुख एव च।
हस्तप्रचारस्त्रिविधो नाट्यतत्त्वसमाश्रयः॥] १६९

शक्यार्थे कृत्यः। विशेषत इति। पुरुषाणां तदपेक्षया सामान्यानामाचारा भवन्ति। अत एवोत्तमानामतिस्वल्पप्रचारो हस्ताभिनयः। रसभावकृतानीति। स्थायिसञ्चारिभेदेन तत्तद्विभावभेदवशादित्यर्थः। तथा हि, केशानां विदूषकं प्रत्याकर्षणं खटकामुखेन, प्रियां प्रत्यरालेन, क्रीडायां कलहे मुष्टिनेत्याद्युत्प्रेक्ष्यम्। ऊर्ध्वाधोदूरगमनादन्यथाकरणमुत्कर्षणादि। परिग्रहो मण्डलेन ग्रहणम्। निग्रहो विनाशनं, तोदनं ताडनं, विक्षेपस्त्यागः सावज्ञं, धूननं कम्पनम्। विसर्गः सादरं त्यागः, स्फोठनं विकासनं, मोटनं सङ्कोचनं, इति प्रकारे। एवंप्रकारा अन्येऽपि। रसभावकृतानीति यदुक्तं तत्स्पष्टयितुमाह सर्वे नेत्रभ्रूमुखरागाद्यैर्व्यञ्जिताः कार्या इति। प्रचार ऊर्ध्वोद्वर्तनपार्श्वाधोमुखादिः। परोक्षाभिनयने दृष्ट्यादयो हस्तानामनुगताः, प्रत्यक्षे तु विपर्ययः।

1 ड - सन्तिहि म - ज्ञेयं कर्म यथाक्रमम् 2 भ - तदहं 3 म - भावक्रियात्मकम् 4 ज - चाकर्षणं पुनः ड - चैवापकर्षणम् 5 ड - परिग्रहो निग्रहश्च आह्वानं नोदनं तथा द - परिग्रहो निग्रहश्चाह्वानं नोदनमेव च छ - परिग्रहो निगृहश्च आह्वानं तोदनं तथा 6 म - संश्लेषोऽथ ड - संक्षेपश्च 7 प - विक्षेपो धूनने ड - विक्षेपो धूननं 8 द - निसर्गस्तर्दनं न - विसर्गस्तर्जनं 9 प - तोटनं मोटनं चैव ताडनं मोदनं तथा 10 ड - स्फोटनं मोहनं तथा च - छिद्रविस्फोटनं तथा ज - घोटनं मोटनं तथा 11 प - स्पोटनं चैव 12 चछद - आदर्शेषु नास्ति।

सर्वे हस्तप्रचाराश्च[1] प्रयोगेषु यथाविधि ।
नेत्रभ्रूमुखरागाद्यैः[2] [3]कर्तव्या व्यञ्जिता बुधैः[4] ॥ १७०
[5]करणं कर्म स्थानं [6]प्रचारयुक्तिं क्रियां च समवेक्ष्य[7] ।
हस्ताभिनयः [8]कार्यस्तज्ज्ञैर्लोकोपचारेण[9] ॥ १७१
[10]उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः ।
[11]वक्षस्स्थाश्चैव मध्यानामधमानामधोगताः ॥ १७२

---

एतत्सर्वमुपसंहरति करणमिति । करणमावेष्टितादि, कर्म विधेयं, स्थानं, ललाटादिक्षेत्रं उत्तानादिसन्निवेशस्थितिश्च, प्रचारः स्वल्पादिः । युक्तिर्मुख्यगौणाद्युपपत्तिः, न हि गौरयं ब्राह्मण इत्यत्र मृगार्थो हरिणाभिनयेन कर्तरीमुखमृगशीर्षक प्रायेणाभिनीयते । अपि तु मौर्ख्याभिनये, चतुरशुकतुण्डशिखरनिषधप्रायेण । युक्तिश्च विशेषणविशेष्यभावादिविचारः । तद्यथा तद्गुणसंविज्ञाने बहुव्रीहौ वृत्तिपदार्थान्यपदार्थाः अभिनेयाः, "सपुलकस्वेदोद्गमोत्कम्पये"ति(रत्ना १-१)उपलक्षणविमुक्ते त्वन्यपदार्थमात्रं, तत्राप्युपलक्षणताप्रतिपत्त्यै वृत्तिपदार्थोऽप्यभिनेयः। स त्वनावेश इति तूपाध्यायाः।क्रिया त्रिधा विधिनिषेधानुभयरूपा । गच्छ मागच्छेत्यादौ विधौ हि प्रत्ययार्थस्यैव, निषेधे चार्थस्यैव, अनुभयरूपे प्रकृत्यर्थस्यैव, अवतरत्वार्य इत्यादौ तु न विधिः, अपि तु प्रकृत्यर्थमात्रं प्रदर्शयितव्यम् । लोटा तु स्वाभिप्रायमात्रं प्रकाश्यमानमप्रधानमिति प्रकृत्यर्थ एवाभिनेयः । अत्र व्यापकं हेतुमाह लोकोपचारेणेति ।

करणं कृत्वे (कर्मे?) त्यत्र स्थानमुक्तम् । तद्विभजत्युत्तमानामिति । उत्तमे सुवर्णादिद्रव्ये सन्निकृष्टाः मध्यमे मध्यमाः अधमे विप्रकृष्टाः । ललाटादिशब्दानामुपलक्षणार्थत्वादिति केचित् । एतेषु क्षेत्रेषु वर्तनानिवेशपूर्वकमुत्तमा-

---

1 न - प्रकारास्तु म - सर्वहस्तप्रचारास्तु 2 ड - रागैश्च 3 ड - कर्तव्यं जीवितं म - कर्तव्या रञ्जिता 4 ज - व्याञ्जितमुखैः
5 म - करणं कर्मसंस्थानं प्रयोगं युक्तितः क्रियाम् ।
संलक्ष्य हस्ताभिनयः कार्यो लोकोपचारतः ॥
6 ड - प्रकार 7 ड - संप्रेक्ष्य 8 न - तज्ज्ञैः कार्यो 9 ड - कारेण 10 म - कार्या कराह्युत्तमानां 11 प - मध्यानामखिलानां च वक्षो नाभिगतास्तथा ।

[1]ज्येष्ठे स्वल्पप्रचाराः स्युर्मध्ये कुर्वीत मध्यमैः।
[4]अधमेषु प्रकीर्णाश्च हस्ताः कार्याः प्रयोक्तृभिः॥

दयो राजामात्यविदूषकादयोऽभिनयान् यथोचित एवाभिनयस्थाने कुर्युरित्यने- नोत्तमा देवतागुरुनृपादयो यदा निर्दिश्यन्ते तदा ललाटक्षेत्रचारिभिः अञ्ज- ल्यादिहस्तैः, मध्यमास्तु चतुरादिभिर्वक्षःक्षेत्रचरैः, अधमाः शुकतुण्डाद्यैरधः क्षेत्रचरैः। तेन चन्द्रतारादिदर्शनेऽधमस्यापि ललाटक्षेत्रचरा हस्ता इत्यादि न विरुद्धमिति। इदं च युक्ततरमित्युपाध्यायाः—ये चतुरारालाद्यैः सत्या- नृतगाम्भीर्यशौण्डीर्यादिविरुद्धविषया उक्तास्तेषां विभागार्थमिदं वचनम्। ये धान्यादय उत्तमा अर्थास्तेषामभिनये ललाटक्षेत्रगत्वमित्यादिक्रमेण।

अभिनयगतं विशेषान्तरमप्याह ज्येष्ठे स्वल्पप्रचाराः स्युरित्यादि। प्रयोगे ज्येष्ठे नाटकादौ चतुर्वर्गोपायोपदेशिनि प्रत्यक्षताप्राधान्यादल्पो हस्ताभिनयो, मध्यमे तु रञ्जनाफले भाणकादौ मध्यमः प्रत्यक्षे हि तत्राकाशभाषितप्राधा- न्यात्, अधमे तु नृत्तकाव्ये षिद्गकादौ च काल—इति केचित्। एतत्त्वव्यवस्थि तत्वादयुक्तम्। नाटकेऽपि भूयस्त्वमस्य। परस्थस्याभिनेयत्वे उत्तमपात्रेण तु प्रधान एवाभिनयः कार्यो न विशेषणात्, अस्मिन्नाट्ये गृहीतविशेषणा विशेषधी- रिति मन्यमाना एतदमृष्यन्तोऽन्ये त्वाहुः—यत्र पदार्थसमुदायो ह्येकेनाभिन- येन शक्यप्रतिपत्तिरनेकेन वा चलत्वात्। तद्यथा—"या स्रष्टुः सृष्टिराद्या" (शाकु १-१) इत्यत्र। तत्रैक एव जलहुताशनाभिनय उत्तमेन प्रयोज्यः। अधमेन त्वनेकश्च चलस्वभावत्वात्। मध्यमेन मध्यम इति प्रचारो वर्तना योत्तमेऽ- ल्पेति वा। एतत्तु शोभाविच्युतिकारित्वात्, "अथ नयनसमुत्थं" (रघु २-७५) इत्यादौ प्रयत्नोपहृतस्य (उपमानद्वयस्य) पदार्थे वाक्यवचनमित्यस्य प्रौढत्वस्या- भिनये नानुसरणप्रसङ्गान्नाद्रियते। ये परिमितमभिनेयं गमयन्ति ते स्फुटमेवा- र्थस्य गमकाः, अर्थप्रकरणादेस्तत्र सुखेन सहायत्वात्। अनन्तार्थजातव्यवच्छेद- कत्वं हि क्लेशः। तादृशा उत्तमप्रकृतिषु हस्ताः। अधमास्तु यथावचनं श्लिष्टमाहुस्त- (था प्रकीर्ण)भूयस्त्वमभिनेये सन्दिह्यमानस्याभिनयायत्तमुत्कर्षणं विकर्षण-

1 द - ज्येष्ठेष्वल्प म - आदर्शे श्लोको नास्ति 2 ढ - स्तु मध्ये 3 प - मध्य विचारिणः 4 क - आदर्शे श्लोको नास्ति 5 ड - प्रकीर्णास्तु।

1 विधावपि 2 विशेषणादस्मिन्नाट्ये।

लक्षणव्यञ्जिता हस्ताः कार्यास्तूत्तममध्यमैः ।
[1]लोकक्रियास्वभावेन [2]नीचैरप्यर्थसंश्रयाः ॥ १७४
अथवान्यादृशं प्राप्य प्रयोगं कालमेव च[3] ।
[4]विपरीताश्रया हस्ताः प्रयोक्तव्या बुधैर्न वा[5] ॥ १७५
विषण्णे [6]मूर्छिते ह्रीते[7] जुगुप्साशोकपीडिते ।
ग्लाने स्वप्ने विहस्ते च निश्चेष्टे तन्द्रिते जडे[8] ॥ १७६

मित्यादि—एवं केचित् । अपरे त्वाहुः—प्रचारस्त्रिधा पञ्चधा च वक्ष्यते । तत्रोत्तमस्य च फलत्वादेकरस एवोत्तानादिकः प्रचारः, अधमस्य त्वतिसङ्कीर्ण इति । इदन्त्वत्र युक्ततमम्—ज्येष्ठेऽभिनये प्रत्यक्षवर्तमानात्मगस्थविषये हस्तव्यापारोऽल्पः । "हिअअ समस्सस" (शाकु अ ७) इत्यादौ । तथा "तन्वी मेघजलार्द्रवल्कलतया"(विक्र ४-२८) इत्यादौ । अत्र हि सात्त्विकभूयस्त्वात् ज्येष्ठत्वम् । अप्रत्यक्षभाविभूतपरस्थरूपे तु सात्त्विकावकाशाभावोऽनावेशादिति तत्राधमोऽभिनयः, "सत्त्वहीनोऽधमः (२२-२) स्मृतः" इति वचनात् । तत्र विप्रकीर्णा विक्षिप्ता बहुलतमा हस्ताः । यथा *कुञ्जरक †सुन्दरकादीनां परस्थवृत्तयुद्धवर्णने । एतद्व्यतिरिक्ते तु मध्यमो हस्तप्रयोगः । यथा विदूषकेण प्रत्यक्षं दृश्यमानेनावस्थावेशकारिणि उद्यानादिवर्णने ।

लक्षणं सौष्ठवं लक्ष्यते ।

सौष्ठवं लक्षणं प्रोक्तं वर्तनाक्रमयोजितम् (१०-७७) ॥ इति ।

तद्धीना अधमानाम् । (अथवेत्यादि) । अन्ये त्वाहुः—यादृग्येषां लक्षणमुक्तं तेन्यथा परिपूर्णाश्लिष्टाकृतयोऽभिनयाद्धीनानां श्लिष्टवर्णोच्चारणवदिति । (विपरीतेति) भयजुगुप्सादिप्रयोगे शीतकालादियोगे च सौष्ठवमस्फुटाकृतित्वं, अवहित्थादौ चासौष्ठवयोगेऽपि सौष्ठवमित्यादि वैपरीत्यम् । विहस्तो हस्तवैकल्याधानं, मत्तो मद्येन, प्रमत्तः प्रमादात्, उन्मत्तोऽपस्मारी । किं सर्व एवात्र हस्ताभिनय इत्याशङ्क्य प्रतिप्रसवार्थमाह

1 छ - नीचक्रिया द - लोकक्रियाश्च 2 म नीचैरेवार्थ 3 द - वा 4 क - विपरीतक्रिया 5 ड - नरैः 6 द - स्तंभिते 7 ड - भीते क - ह्रीने 8 द - जने

* तापसवत्सराजे † वेणीसंहारे ।

व्याधिग्रस्ते [1]जरार्ते च भयार्ते शीतविप्लुते ।
[2]मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥ १७७
[3]हिमवर्षहते [4]बद्धे [5]वारिणाप्लवसंश्रिते ।
[6]स्वप्नायिते च सम्भ्रान्ते नखसंस्फोटने तथा ॥ १७८
न हस्ताभिनयः कार्यः[7] कार्यः[8] सत्त्वसमाश्रयः[9] ।
[[10]तथा काकुविशेषश्च नानार्थरसभावकः[11] ॥] १७९
[12]यत्र व्यग्रावुभौ हस्तौ [13]तत्तद्दृष्टिविलोकनैः[14] ।
[15]वाचिकाभिनयं कुर्याद्विरामैरर्थदर्शकैः ॥ १८०
[16]उत्तानः पार्श्वगश्चैव तथाधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥ १८१

कार्य इति । ये हस्ता आन्तरीं चित्तवृत्तिं सूचयन्ति कपोतक इव भयं, कर्कटक इव मदनविजृम्भां, दोल इव शोकं, शुकतुण्ड इवेर्ष्यां ते कार्या एव, सात्त्विकवदनुभावस्य भावत्वात्तेषां सात्त्विकश्च कार्य एवेत्यावृत्त्या ये तु बाह्यद्रव्यगुणादिगमकास्ते न कर्तव्या इति । यत्र तु सर्व एव न कर्तव्यास्तं विषयमाह यत्र व्यग्राविति यथा सारथेः प्रतोदरश्मिव्यग्रहस्ततायां । (विलोकनैरिति) विलोक्यते चित्तवृत्तिरनेनेति मुखरागादि, कुर्यादिति स्फुटयेदित्यर्थः । अर्थदर्शकैरिति । अनुवृत्तिलक्षणोपरोधकृतैरित्यर्थः ।

1 म - ज्वरार्ते च तपश्श्रान्ते भयान्विते 2 म - मत्तोन्मत्तप्रमत्तेषु, शोकार्ते शीतविप्लुते 3 - दचयोः श्लोको नास्ति न - हिमवर्षगते 4 ड - बन्धे 5 ढ - भारिणि ड - हारिणप्लव न - चारिणी म - वारिणि प - चारिणा 6 न स्वप्नायिते स म - स्वप्नायितेऽथ 7 न, नभसः पतितेऽद्भुते म - नभसः पातितेऽद्भुते 8 म - योज्यः 9 प - सत्त्वस्य संग्रहः म - समुद्भवः छ - सत्त्वस्यसंभवः 10 द - तथैवाङ्ग ड - तथाकार ज - तथाकारु 11 ड - भावरसान्वितः द - भावरसाश्रयः 12 म द - योः श्लोको नास्ति 13 प - पत्र 14 ड - विलोकितैः
15 प - आदर्शे सार्धः श्लोको न दृश्यते ।
16 ड - उत्तलोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च ।
हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा ॥
म - उत्तानोऽधस्तलस्त्र्यश्र ऊर्ध्वाधोमुख एव च ।
हस्तप्रचारास्त्रिविधो नाट्यनृत्तसमाश्रयः ॥

[1]अन्ये तु—

[2]उत्तानो वर्तुलस्त्र्यश्रः स्थितोऽधोमुख एव च ।
[3]पञ्च प्रचारा हस्तस्य नाट्यनृत्तसमाश्रयाः ॥ [4]इति ।
एवं ज्ञेयाः करा ह्येते नानाभिनयसंश्रयाः[5] ।
अत ऊर्ध्वं प्रवक्ष्यामि करान्नृत्तसमाश्रयान्[6] ॥ १८३

हस्तानां दिग्भेदावस्थानकृतं प्रचारमाह उत्तान इत्यादि । उत्तानो यथा—'विरचितमुर्वीसंस्थ' मित्यभिनये(९-२२) पताकः, यथा वा जिह्वाभिनये आस्यक्षेत्रगोऽग्रगस्त्रिपताकः । पार्श्वगो यथा धनुरभिनये मुष्टिः । अधोमुखो यथा समुद्राभिनये ललाटक्षेत्रगः । स्वस्तिकपताको, यथा "संवृतविवृतं पाल्य"-मित्यत्र त्रिपताकः "उत्तानोऽधस्तलस्त्र्यश्रोऽग्रगोऽधोमुख एव च । पञ्च प्रचारा हस्त"स्येति [1]भट्टोद्भटः पठति । तत्राधस्तलेऽधोमुखोऽन्तर्भूतः उत्तानेऽग्रगः, त्र्यश्रः त्रिपार्श्वग एव । अत्रापि तु समविषमत्र्यश्रिताद्यवान्तरभेद उत्तानादेर्भवति । इत्थं त्रैविध्यमेव युक्तम् । तत्र रसनिष्पादनमभिनयस्य वस्त्वित्युक्तं तच्च करणानुभावात्मकं, तत्राङ्गहाराः करणसञ्चयाः, करणस्य च लक्षणमुक्तम् । "यानि स्थानानि याश्चार्यो नृत्तहस्ताः" (४-५९) इत्यादि । तत्र स्थानकचार्यः स्वक्षेत्रे (अ-१३) लक्षयिष्यन्ते ।

हस्तप्रसङ्गान्नृत्तहस्ता वक्तव्याः । किञ्चाभिनयकृताप्येषां कचिद्व्यापृतिः, यथा लताहस्तौ प्रतिपद्येते नृत्ताभिनयनं प्रति (९-२००), यथा वा करिहस्तस्य हस्त्यभिनयनम् । एवं चतुरश्रादीनामपि प्रयोगवशात् द्रष्टव्यमित्याशयेनाह अत ऊर्ध्वमिति । नृत्तस्य करणात्मकस्याश्रयाद्धेतुता । एभ्योऽभिनयहस्तेभ्य ऊर्ध्वमित्येतद्गणना पृष्ठेऽभिनयनहस्तत्वेनापि गणनायोग्यादित्यर्थः । तत्र

1 एष श्लोकश्च कगन - आदर्शेष्वस्ति 2 न - उत्तानोऽधस्तलस्त्र्यश्र ऊर्ध्वाधोमुख एव च ड - उत्तलोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च म - आदर्शे नास्ति 3 ड - हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा न - हस्तप्रचारास्त्रिविधा नाट्यनृत्तसमाश्रिताः द - हस्तप्रचारस्त्रिविधो नाट्यनृत्तसमाश्रयः 4 प - नृत्तहस्तसमाश्रयाः 5 म - नानार्थरससम्भवा ड - संश्रिताः प - संज्ञिकाः 6 ड - हस्तान् नृत्तसमाश्रयान् म - समुद्भवान् छ - श्रितान् ।

1 भट्टलोल्लटः ।

[1]वक्षसोऽष्टाङ्गुलस्थौ [2]तु प्राङ्मुखौ* खटकामुखौ[3]।
समानकूर्परांसौ तु चतुरश्रौ प्रकीर्तितौ[4]॥ १८४
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत्।
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ॥ १८५
चतुरश्रस्थितौ हस्तौ हंसपक्षकृतौ तथा[5]।
[6]तिर्यक्स्थितौ [7]चाभिमुखौ ज्ञेयौ तलमुखाविति॥

चातुरश्र्यमूलं नृत्तेऽङ्गस्य जीवितमिति तन्निमित्तभुवौ चतुरश्रौ तावदाह वक्षस इति। वक्षोऽतिक्रम्य योऽष्टाङ्गुलो देशः तत्स्थौ। परस्परं त्वष्टाङ्गुलान्तरत्वात् प्रत्युत चातुरश्र्यं भवतीत्युत्प्रेक्ष्यमेव। प्राङ्मुखाविति यत्संमुखः प्रयोक्ता तत्संमुखावेव, न तु प्रयोक्तृसंमुखौ। कूर्परयोरंसयोश्च तुलाधारणवत्समत्वमवैषम्यम्। अङ्गचातुरश्र्यदानाच्चतुरश्रौ। आकर्षणविशेष एवायमभिनयोऽपि द्विवचनादपवादविहीनत्वे द्वयोरेव प्रयोग उपपादनीयो हेतुहस्तान्तरस्य द्वितीयप्रकारयोगेऽपि केवलस्यैव चतुरश्रतापदेश एव, तुल्यरूपत्वाच्च न चतुष्षष्टिताव्याहतिरिति। एवं सर्वत्र।

अथोद्वृत्तौ[1]—हंसपक्षकृताविति। आदौ चतुरश्रौ तत उद्वेष्टितवर्तनया हंसपक्ष (कृत) इति, कृतशब्देनाह विधिम्। एको विवर्तते उत्तानः स तु, परस्त्वधोमुखः सन्नावर्तते वक्षस्स्थानमित्यर्थः। एतदेवाह तालवृन्तवदिति। आवर्तनकाले ऊर्ध्वं वर्तमानत्वादुद्वृत्तौ[1]। नामान्तरेण तालवृन्तविषयत्वमभिनेयत्वं ब्रूते।

अथ तलमुखौ—चतुरश्रस्थिताविति। तथेति व्यावृत्तोद्वृत्तपूर्वकत्वमस्याह। तेन परिसमाप्तिकाले स्वस्वपार्श्वस्थाङ्गौ त्र्यश्रस्थितौ हंसपक्षावेव। अन्योन्यसंमुखतलत्वात्तलमुखौ। "मंडल महुरिजिम वज्जइ" (मर्दलं मधुरं वादयति) इत्यादिविषये चायमभिनयोऽपि।

1 ड - वक्षःस्था 2 छ - च 3 प - कटकामुखौ 4 म - चतुरश्राविति स्मृतौ 5 न - यदा 6 म - तिर्यङ्मुखोर्ध्वाभिमुखौ द - तिर्यङ्मुखौ चाभिमुखौ 7 च - वाभिमुखौ * पराङ्मुखाविति सोमेश्वरः, संमुखाविति भोजः।

1 उद्वृत्तौ।

तावेव मणिबन्धान्ते [1]स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ[2] विप्रकीर्णकौ ॥
अलपल्लवसंस्थानावूर्ध्वास्यौ[3] पद्मकोशकौ ।
[4]अरालखटकाख्यौ [5]चाप्यरालखटकामुखौ ॥ १८८

[6]अन्ये तु—

[7]तथैव मणिबन्धान्ते ह्यरालौ विच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमरालखटकाविति ॥ इति ।
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ[8] ।
[9]पराङ्मुखतलाविद्धौ ज्ञेयावाविद्धवक्रकौ[10] ॥ १९०

---

अथ स्वस्तिकौ विप्रकीर्णौ च—तावेवेति । तलमुखावेवेत्यर्थः । अन्तस्समीपः । स्वस्तिको नाम लक्षणविशेषः । (विच्युताविति) विशेषेण सहसा च्युतावित्यर्थः । एवं पूर्ववृत्तनृत्तकरचतुष्टयस्वरूपोपजीवित्वं (स्वस्तिक)विप्रकीर्णयोः ।

अरालखटकामुखौ—अरालखटकामुखावाह अलपल्लवसंस्थानाविति । स्वस्तिकवत्पताकौ कृत्वा अलपल्लवोपलक्षितया व्यावर्तितकरणवर्तनया परिवर्तनान्तया तावेवोर्ध्वमुखौ पद्मकोशौ विधाय समनन्तरमेव भाविनलिनीपद्मकोशाभ्यामरालवर्तनया एकमरालं द्वितीयं खटकामुखं चातुरश्रचसंस्थानेन कुर्यात् । स्वस्तिकेनेति त्वपरे । अरालौ ततः खटकावित्येके ।

---

1 ङ - स्वस्तिकाविति 2 म - विख्यातावरालौ 3 छ - संस्थानोपद्मास्यौ 4 म - ज्ञेयावभिमुखौ तज्ज्ञैरराल 5 प - वाप्यरालकरकामुखौ 6, 7 क ग च - आदर्शेष्वेव 8 म - कुटिलावर्तिभिस्तथा न - कुटिलावर्णितौ करौ द - कुटिलावर्तितैः करैः 9 म - अधोमुख प - पराङ्मुखतथा 10 प - वक्रगौ म - आविद्धाविति संज्ञितौ ।

[1]हस्तौ तु सर्पशिरसौ[2] [3]मध्यमाङ्गुष्ठकौ यदा।
तिर्यक्प्रसारिताख्यौ च तदा सूचीमुखौ स्मृतौ[4]॥ १९१

[5]अन्ये—

[6]सर्पशीर्षौ यदा हस्तौ भवेतां[7] स्वस्तिकस्थितौ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा[8]॥ १९२
रेचितौ चापि विज्ञेयौ हंसपक्षौ द्रुतभ्रमौ[9]।
प्रसारितोत्तानतलौ रेचिताविति संज्ञितौ[10]॥ १९३

---

अथाविद्धवक्रौ—भुजांसकूर्पराग्रैरिति। वृत्तानुरोधादेवं पठितम्। अयं त्वर्थः अंसाभ्यां कूर्पराग्राभ्यां भुजाग्राभ्यां च क्रमेणोपलक्षितं यत्कुटिलं सविलासं (*पताकौ) कृत्वा आवर्तनं व्यावर्तितकरणं कनिष्ठादि तद्युक्तावाविद्धौ हळधारिणौ सन्तावधोमुखतलौ यदा भवतस्तथेदं नाम।

अथ सूचीमुखौ—हस्तौ तु सर्पशिरसाविति। चतुरश्रस्थानगौ सर्पशिरसौ मध्यमाङ्गुलिनिविष्टाङ्गुष्ठौ कृतौ यदा तिर्यक्प्रसारितं पार्श्वगमनेन सह विकाशितं मुखं तर्जन्यग्ररूपं द्वयोस्तादृशौ बाहु (बहिः?) प्रसारणेन पर्यायशः क्रियते तदा सूचीमुखौ सूचीवद्बाहु (द्बहिः?) प्रसारणात्। तत्र तुशब्दः पर्यायं द्योतयति।

सूचीमुखौ—मध्यप्रसारिताङ्गुष्ठौ स्वस्तिकौ सर्पशीर्षकौ।

†इत्येकेषां पाठः।

अथ रेचितौ—अर्धरेचितौ चापीति। केचित् रेचितावित्यस्य पौनरुक्त्यपरिजिहीर्षवो द्वे लक्षणे इत्याहुः। तेन द्रुतौ भ्रान्तावविकृतावेव हंसपक्षौ रेचितौ,

---

1 म - श्लोको नास्ति 2 द - शिरसो 3 ड - मध्यस्थाङ्गुष्ठकौ 4 भ - सूच्यग्राविति तौ स्मृतौ 5 क - अन्यैः कचछ - आदर्शेष्वेव 6 कचछम - आदर्शेष्वेव 7 छ - भवतः 8 म - तदा सूचीमुखौ स्मृतौ 9 क - हंसपक्षोद्भूतभ्रमौ द - भ्रमद्रुतौ म - भ्रमस्थितौ भ - भ्रमकमौ 10 प - रेचितावेव संज्ञितौ ड - रेचितावेव संस्थितौ।

† व्यावृत्तिपरिवृत्तिभ्यां चतुरश्रगौ पताकौ प्रथमं कृत्वा पश्चात्सर्पशिरसौ रेचितस्वस्तिकौ सूच्यास्याविति मतान्तरम्। * अरालाविति सोमेश्वरः।

चतुरश्रो भवेद्वामः सव्यहस्तश्च रेचितः।
विज्ञेयौ [1]नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञितौ[2] ॥ १९४
अञ्चितौ कूर्परांसौ तु त्रिपताकौ करौ कृतौ[3]।
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ॥ १९५
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ।
[4]बाहुशीर्षाद्विनिष्क्रान्तौ नितम्बाविति कीर्तितौ[5] ॥

---

तथा प्रसारितोत्तानतलत्वेन विकृतावपि रेचिताविति। अन्ये त्वेकमेव वाक्यमित्याहुः। रेचितौ सन्तौ यौ द्रुतभ्रमौ तौ रेचितसंज्ञाविति। न पौनरुक्त्यम्। संज्ञयैवार्धरेचिते लब्धे पुनर्वचनमविशेषेण चातुरश्रयस्य स्थितिं सूचयन् नृत्तहस्तान्तरेष्वपि अङ्गपर्यायेण प्रयोगं सूचयति।

अथोत्तानावञ्चितौ[1]—अञ्चिताविति। त्रिपताकौ हस्तावंसकपोलललाटानामन्यतमक्षेत्रे कृतौ अञ्चनक्रियया युक्तौ, अन्योन्याभिमुखावर्धतिरश्चीनौ, तथांसयोः कूर्परयोश्चाञ्चनं किञ्चिच्चलनं भवति। अञ्चनसमये उत्तानत्वप्राप्तेः पुनरप्यञ्चनेनोद्गमनक्रियायोगान्मृदूत्तानावञ्चितौ[1]।

अथ पल्लवौ—मणिबन्धनमुक्तौ त्विति। ऊर्ध्वव्यावर्तितकरणेन बाहू प्रसार्य परिवर्तितक्रियया स्वस्तिकाकृती पताकौ। पल्लवाकारत्वात् तथोक्तौ। शिथिलौ पल्लवावित्यन्ये पठन्तः त्रिपताकावित्यनुवर्तयन्ति।

अथ नितम्बौ—बाहुशीर्षादिति। पताकाविति वर्तते। स्कन्धक्षेत्राद्विचलत्वेनोत्तानत्वाधोमुखत्वपर्यायत्वेन निष्क्रान्तौ पताकौ, नाम्ना क्षेत्रस्याक्षेपात् नितम्बक्षेत्रे तथैव पर्यायेण वर्तमानौ नितम्बौ।*

---

1 म - नाट्य 2 द - ऊर्ध्वरेचितसंज्ञितौ प - संज्ञकौ 3 प - त्रिपताककृतौ करौ 4 म - बाहुशीर्षविनिष्क्रान्तौ द - बाहुशीर्षादि 5 प - परिपार्श्वस्थिते यदा म - संज्ञितौ।

---

1 उत्तानवञ्चितौ।
* त्रिपताकावन्ये पताकस्थाने वर्तयन्ति।

[1]केशदेशाद्विनिष्क्रान्तौ परिपार्श्वोत्थितौ तथा[2] ।
विज्ञेयौ केशबन्धौ तु[3] करावाचार्यसंमतौ ॥ १९७
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
[4]लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति[5]॥ १९८
समुन्नतो लताहस्तः पार्श्वात्पार्श्वे विलोलितः[6] ।
[7]त्रिपताकोऽपरः कर्णे करिहस्तः प्रकीर्तितः[8] ॥ १९९

अथ केशबन्धौ—केशदेशादिति । आदौ पार्श्वक्षेत्रात् तत्पार्श्वपरिवर्तनपूर्वकमुत्थितौ* शिरःक्षेत्रं प्राप्तौ, अत एव केशदेशान्नितम्बहस्तोक्तवदेव विचित्रहस्तत्वेन निष्क्रान्तौ तथा तेनैव प्रकारेण पुनः केशदेश एव पर्यायशो गतागतत्वेन प्रत्यावर्तमानौ । केशसंबन्धात्केशबन्धौ । आचार्यसंमतौ च शोभातिशयकरणात् ।

अथ लताहस्तौ—तिर्यक्प्रसारितौ चेति । पताकाविति वर्तते । अन्ये तु नितम्बादिषु त्रिपताकावित्यनुवर्तयन्ति लताहस्तान्तेषु ।

अथ करिहस्तः—समुन्नत इत्यादि । संश्लेषक्रमेण य उन्नतः । विलोलित इति दोलावन्नीतः । अपरग्रहणात्त्रिपताक एव ललाटाख्य इति केचित् । खटकाख्योऽपर इत्यन्ये पठन्ति । सजातीयतयानारम्भोऽस्य चतुरश्रवत्, विजातीयारम्भोऽपि नृत्ताभ्यासस्य व्यपदेशादरालखटकामुखवत् । अतो न

1 भ - अंसदेश विनिष्क्रान्तौ न - एकदेशविनिष्क्रान्तौः द - केशदेशान्निवृत्तौ तु 2 ड - पार्श्वस्थितौ यदा द - पार्श्वक्षितौ यदा 3 प - बन्धाख्यौ 4 भ - चतुरश्रौ तु द - लताख्यौ तु 5 न - आदर्शे श्लोकोऽयमधिकोऽस्ति 'हस्तः पञ्चविधः कार्यो नाट्यनृत्तसमाश्रयः । उत्तानोऽधस्तलस्त्र्यश्च ऊर्ध्वाधोमुख एव च ॥ 6 ड - पार्श्वविलोकितः द - पार्श्वविलोडनः 7 म - द्वितीयः कटकाख्यश्च करिहस्तौ प्रकीर्तितौ 8 ड - करिहस्तौ प्रकीर्तितौ ।

* पताकाविति वर्तते । अन्ये त्रिपताकाविति, केचित्पल्लवाविति च वर्तयन्ति ।

[1]कटिशीर्षनिविष्टौ द्वौ त्रिपताकौ यदा करौ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः[2] ॥ २००
तावेव तु परावृत्तौ पक्षप्रद्योतकौ[3] स्मृतौ।
[4]अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ २०१
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ।
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ २०२

---

द्विवचनम्। एकैकस्य पृथक्प्रयोगे करिहस्तत्वाभावादित्येकवचनमेव। तदाकारत्वाच्चेदं नाम*।

अथ पक्षवञ्चितौ पक्षप्रद्योतौ च—कटिशीर्षेति पाठः। वृत्तौ पक्षावञ्चितौ गतौ, तत्सम्मुखौ तु तं द्योतयतीति तथोक्तौ। एवकारेणानयोः व्यामिश्रतया प्रयोगशोभा भवतीत्याह।

अथ गरुडपक्षौ—अधोमुखेति। अधोमुखे नितम्बक्षेत्रे भूत्वा तलेनाविद्धौ ऊर्ध्वगमनं झटिति कुर्वाणौ। तार्क्ष्यभुजाकाराक्षेपात् लिङ्गवाक्यप्रमाणत्वात्सुकरणं प्राप्तं त्रिपताकबाधेन पताकावुपलभ्येते।

अथ दण्डपक्षौ—हंसपक्षकृताविति। एकस्य हंसपक्षस्य व्यावर्तने विलासेन पार्श्वाद्वक्षःक्षेत्रस्य निकटस्य वर्तनं तत्समकालमेव द्वितीयस्य स्वदेहपरिवर्तनेन वर्तनं भुजप्रसारणपर्यन्तं पुनरपरेणाङ्गेनेति द्वावपि प्रसारितभुजौ व्यावर्तितपरिवर्तितौ च भवत इति पक्षे पार्श्वतो दण्डवद्भुज इति दण्डपक्षौ। युगपदेव द्वयोरपि प्रसारणं व्यावर्तनपरिवर्तने तु क्रमेणेत्यन्ये।

---

1 प - करिहस्तनिविष्टाग्रौ 2 म - विज्ञेयौ नाट्यकोविदैः 3 भ - पक्षोद्द्योतकरौ 4 म - चतुरश्रमुरः कृत्वा।

---

1 तत्संमुखौ कृतम्।

* यत्कीर्तिधराचार्येण त्वधरेचिताविति नामसाम्येन करिहस्ताविति द्विवचनान्तपाठ एव गृहीतः साधीयानिति समर्थितश्च तन्मतस्य खण्डनमेतद्वाक्यम्। अयं भावः—चतुरश्रावित्यादौ सजातीयकरद्वन्द्वेन वा, अरालखटकामुखादौ विजातीयतया वा द्विवचनं संभाव्यते। न तु करिहस्ते यत्राकृतित्वाच्च, द्वितीयहस्तप्रयोगगौणत्वाच्च, एकहस्तप्रयोग एव द्योत्यते।

ऊर्ध्वमण्डलिनौ [1]हस्तावूर्ध्वदेशविवर्तनात् ।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ[2]॥ २०३
उद्वेष्टितो भवेदेको द्वितीयश्चापवेष्टितः[3] ।
[4]भ्रमितावुरसः स्थाने ह्युरोमण्डलिनौ स्मृतौ॥ २०४
[5]अलपल्लवकारालावुरोऽर्धभ्रमणक्रमात् ।

---

अथोर्ध्वमण्डलौ—ऊर्ध्वमण्डलिनाविति । वक्षोदेशाद्व्यावर्तितकरणेन ललाटक्षेत्रेण पार्श्वगमनं विधाय ततोऽपि मण्डलवक्रमणेन प्रसारितावूर्ध्वमण्डलिनौ । प्रसारितभुजाविति वर्तते । ललाटप्राप्तिपर्यन्तेनैवानयोर्लक्षणं शिष्टं तु पार्श्वमण्डलिनोरिति केचित् । तावेव पार्श्वविन्यस्ताविति वचनान्नृत्तप्रसिद्ध (चक्र) वर्तनात्मकावूर्ध्वमण्डलावित्यन्ये* ।

अथ पार्श्वमण्डलौ—तावेवेति । ऊर्ध्वमण्डलावेव पार्श्वगतौ पताकाकृती परस्परसम्मुखौ । *अन्ये तु निर्वचनसमर्थनाशयेन स्वपार्श्वे एवाविद्धभुजभ्रमणवर्तनात्मकमनयो रूपमाहुः ।

अथोरोमण्डलिनौ—उद्वेष्टित इति । चकारसंनियोगेन यौगपद्यमाह । उरस इति पञ्चमी । तत आरभ्य पार्श्वक्षेत्रे भ्रमितावेकस्यागमनस्य परस्य गमनमिति वर्तनया । षष्ठीत्यन्ये वदन्तः तत्रैव स्थानमित्याहुः । ऊर्ध्वपार्श्वोरोमण्डलिषु हंसपक्षावित्यपरे वर्तयन्ति ।

अथोरःपार्श्वार्धमण्डलौ—अलपल्लवकारालाविति । वक्षोदेशत उत्तानो हस्तः संस्तम्भोऽलपल्लवसंस्थानदायिना व्यावर्तितकरणेन निष्कृष्यते ।

---

1 भ - ज्ञेयौ पुरो म - हस्तावुरो 2 म - करौ भ - विज्ञेयौ मण्डलौ करौ
3 प - द्वितीयश्च विवेष्टितः 4 ढ - भ्रमितौ म - तद्भ्रामितावुरःस्थाने ह्युरो
5 म - अलपल्लवसंस्थानावूर्ध्वाग्रौ पद्मकोशकौ ड - अलपल्लवकारालावुरोर्ध्वे न - अलपल्लवकारालावधोर्ध्वे ।

---

* अन्ये—कीर्तिधराचार्यादयः । ते पार्श्वमण्डलिनोः कक्षवर्तनेत्याहुः ।

[1]पार्श्वावर्तश्च विज्ञेयावुरःपार्श्वार्धमण्डलौ[2] ॥ २०५
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा[3] ।
[4]खटकाख्यौ कृतौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥
[5]पद्मकोशौ यदा हस्तौ [6]व्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोशौ तु [7]तदा ज्ञेयौ प्रयोक्तृभिः॥ २०७

तत्समकालं च पार्श्वप्रसारितभुजो द्वितीयो हस्तस्तर्जन्याद्युद्वेष्टितसन्निवेशेनारालरूपदायिना वक्षोदेशमानीयते । पुनरेवामिति । उरसि अर्धमेको हस्तः पार्श्वे च द्वितीयो मण्डलवद्गतागतक्रमणे कुरुत इति तथोक्तौ ।

अथ मुष्टिकस्वस्तिकौ—हस्तौ तु मणिबन्धान्त इति । एकः कुञ्चितोऽरालवर्तनया, अपरोऽञ्चितोऽलपल्लववर्तनया पुनरङ्गपर्याय[1] इत्येवं वर्तनानन्तरं खटकामुखाभ्यां स्वस्तिक इति पारम्पर्येण मुष्टिप्रभवत्वात्खटकस्य मुष्टिकस्वस्तिकव्यपदेशो मुष्टिशिखरकपित्थखटकानामन्यतमप्रयोगानुज्ञानार्थमिति तद्विदः* ।

अथ नलिन्याख्यौ पद्मकोशौ—पद्मकोशाविति । पद्मकोशौ सम्मुखौ श्लिष्टमणिबन्धौ । ततोऽप्येकस्य कनीयसः संमुखमपरस्याङ्गुष्ठं मुखं क्रियया परिवर्तनमिति केचित् । इदं त्वत्र युक्तम्—व्यावृत्तेन परिवृत्तौ यदा पद्मकोशाविति सङ्गतिः । अस्मिन् मुष्टावेव स्वस्तिकक्षेत्रे करौ कृत्वा द्वयोरपि यदा व्यावर्तितकरणेन कनिष्ठादिना परिवर्तनमन्योन्यपराङ्मुखता तदनन्तरं च पद्मकोशद्वयं तदा । नलिन्यामनेककमलसंभवादिदं नाम । †

---

1 ड - पार्श्वार्धतश्च म - पार्श्वोर्ध्वतश्च 2 म - पार्श्वोर्ध्वमण्डलौ 3 द - कुञ्चितावकुञ्चितौ 4 ड - खटकाख्यौ तु तौ ढ - खटकास्यौ तु तौ भ - तदामुष्ट्यागतौ ज्ञेयौ संमुखौ तु परस्परम् 5 म - पद्मकोशकृतौ 6 ड - व्यावर्तं म - न्यस्तौ तु स्वस्तिकौ यदा 7 म - च - तौ नाम्नौ संप्रकीर्तितौ ।

1 व्यवायः ।

* एकः कुञ्चितो मुष्टिरपरोऽञ्चितः खटक इत्युक्त्वा तावेव खड्गवर्तनेत्याह कीर्तिधराचार्यः ।

† कीर्तिधरस्तु पद्मकोशौ स्कन्धस्तनजानुष्वन्यतमक्षेत्रे विवर्तिताविति लक्षयति । तावेव पद्मवर्तनेति चाह ।

करावुद्वेष्टिताग्रौ च[1] [2]प्रविधायालपल्लवौ।
[3]ऊर्ध्वप्रसारिताविद्धौ [4]कर्तव्यावुल्बणाविति॥ २०८
पल्लवौ [5]च शिरोदेशं[6] संप्राप्तौ [7]ललितौ स्मृतौ[8]।
कूर्परस्वस्तिकगतौ[9] लताख्यौ वलिताविति[10]॥ २०९
[11][करणे तु प्रयोक्तव्या नृत्तहस्ता विशेषतः।
तथार्थाभिनये चैव पताकाद्याः प्रयोक्तृभिः॥ २१०
सङ्करोऽपि भवेत्तेषां प्रयोगोऽर्थवशात्पुनः।
प्राधान्येन पुनस्संज्ञा नाट्ये नृत्ते करेष्विह॥ २११

---

अथोल्बणौ ललितौ च। करावुद्वेष्टिताग्राविति। वक्षःक्षेत्रादुद्वेष्टितप्रधानौ हस्तौ विधायोर्ध्वस्कन्धक्षेत्रे प्रसारितावाविद्धौ च स्कन्धाभिमुखचलदङ्गुलीकावलपल्लवौ भवतस्तदोल्बणौ। हर्षपरवशां चित्तवृत्तिं सूचयतः इत्युल्बणौ।

अथ ललितौ—अलपल्लवावेव तु शिरःक्षेत्रप्राप्तौ चलितौ ललितौ चातुरश्र्येणाङ्गलालित्योपादानात्।

अथ वलितौ—कूर्परस्वस्तिकगताविति। कूर्परस्थाने स्वस्तिकौ लताहस्तौ बाह्वोर्वलनाद्वलितौ इति। शब्द एवंप्रकारवर्तनान्तरसूचकः।

करणसंश्रयान्करान्वक्ष्यामीति करणासक्तत्वाद्विशेषणभागस्यैव संश्रियमाणस्य करणस्य प्रवचनं फलतः। यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीति वचनान्तरादृत्विजां प्रचारलाभात् द्वाविति (?) विभक्तिरुपपदार्थविधानपरेति करणं करणानि वा इति ह्यर्थे पाठः। (करणं) क्रियते सम्पाद्यते बलादेवाभिनयविशेषो, येनाङ्गुलितुलनक्रियाविशेषेण स्वसमाप्तौ निराकाङ्क्षायां स करणं, यथा कनिष्ठाद्यावर्तनेनालपल्लवः, विपरीतवर्तनायां तु परिसमाप्त्यभावे वर्तनायाः क्रियान्तराकाङ्क्षा। तदेवेदमङ्गतत्त्वविदस्त्रोटनमङ्गस्येति

---

1 च - तु 2 म - विच्युतावलपल्लवौ 3 द - ऊर्ध्वं 4 प - विज्ञेयौ 5 द - तु 6 ड - देशे 7 प - वलितौ 8 द - लता 9 म - न्यस्तौ 10 द - लताख्यवलिताविति म - वलितौ स्मृतौ 11 द्वौ श्लोकौ नमयोरेव।

[1]वियुतास्संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः[2] ।]
[3]अतः परं प्रवक्ष्यामि करान्करणसंश्रयान्[4] ॥ २१२
सर्वेषामेव हस्तानां नाट्यहस्तनिदेशिभिः[5] ।
[6]विज्ञातव्यं प्रयत्नेन करणं तु चतुर्विधम् ॥ २१३
[7]अथावेष्टितमेकं स्यादुद्वेष्टितमथापरम् ।
व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् ॥ २१४
[9]आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
[10]अभ्यन्तरेण करणं तदावेष्टितमुच्यते[11] ॥ २१५
[12]उद्वेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या बहिर्मुखम्[13] ।
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ॥ २१६
[14]आवर्त्यन्ते कनिष्ठाद्या [15]अङ्गुल्योऽभ्यन्तरेण तु ।
[16]यथा क्रमेण करणं तद्व्यावर्तितमुच्यते ॥ २१७

---

व्यवहरन्ति । तेन येषु हस्तेषु तर्जन्यादेः कुञ्चनं तेष्वरालवत्क्रिया, यथा शुकतुण्डचतुरमृगशीर्षकादिषु । एवमन्यदुत्प्रेक्ष्यम् । पताकस्य तु सर्ववर्तनासु कार्यकरणतया साधारण्यं सर्वप्रकृतित्वम् । तत एव प्राधान्यात् पताकव्यपदेशः । नाट्यशब्देनाभिनयनहस्ताः नृत्तशब्देन नृत्तहस्ताः सूचिताः । अभ्यन्तरेण

---

1 म - असंयुताः संयुताश्च 2 न - हस्ताश्च कीर्तिताः 3 म - वक्ष्याम्यतः परमहं 4 प - करणं हस्तसंश्रयम् 5 म - नृत्तप्रवेदिभिः ज - नृत्तप्रदर्शिभिः ढ - नृत्तप्रदेशिभिः भ - ज्ञेयं कर्म चतुर्विधम् 6 भ - आदर्शे श्लोकार्धो नास्ति 7 ज - अपवेष्टित भ - उद्वेष्टितमपवेष्टितमावर्तविवेष्टितं चैव 8 द - च 9 म - उद्वेष्ट्यन्ते 10 म - उद्वेष्टितं तु करणं तज्ज्ञेयं हस्तसंश्रयम् ज - भवेत्तदपवेष्टितम् छ - आवेष्टितं तु करणं तदा ज्ञेयं प्रयोक्तृभिः 12 म - आवेष्ठ्यन्ते 13 ड - मुखाः म - कनिष्ठाद्याः पुनः पुनः । तदावेष्टितमित्याहुः करणं हस्तसंश्रयम् । यदाङ्गुल्योऽपवेष्ट्यन्ते कनिष्ठाद्याः पुनः पुनः । अपवेष्टितमित्याहुः करणं हस्तसंश्रयम् । कुञ्चितौ मणिबन्धान्ते व्यावृत्तपरिवेष्टितौ । शुकतुण्डे यदा हस्तं स्मृतं त्वावर्तितं तत् ॥ 14 न - आवेष्टयन्ते द - आवर्त्यन्ते म - आदर्शे द्वौ श्लोकौ न स्तः 15 ह्यङ्गुल्यो 16 ड - यत्तु न - यत्र ।

[1]उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः[2] क्रमशो यदा।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम्॥ २१८
[3]नृत्तेऽभिनययोगे च[4] पाणिभिर्वर्तनाश्रयैः।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत्[5]॥ २१९
[6]तिर्यक्तथोर्ध्वसंस्थो ह्यधोमुखश्चाञ्चितोऽपविद्धस्तु।
मण्डलगतिस्तथा स्वस्तिकश्च पृष्ठानुसारी च॥ २२०

तलसंमुखत्वेन बाह्यपार्श्वात् देहं प्रति वक्षःक्षेत्रपर्यन्तप्राप्त्या। अतो वैपरीत्येन बहिर्मुखत्वं कनिष्ठाद्यावर्तेत इति तलसंमुखमेवाभ्यन्तरत्वं वक्षःक्षेत्रात्तु बहिर्निर्गमनम्। एतद्विपर्यासेन बाह्यता।

ननु किमेतैरावेष्टिताद्यैरित्याशङ्क्य एतेषां साधकतमत्वं दर्शयति नृत्तेऽभिनययोगे चेति। नृत्ते नाट्ये च करणानि प्रकर्षेण योजयेत्। केन हेतुनेत्याह पाणिभिरिति, यतो वर्तना जाता जन्यजनकाश्च पूर्वपश्चाद्भावित्वेन। पाणयो नृत्तनाट्यहस्ताः। कथं प्रयोजयेदित्याह मुखभ्रूनेत्रयुक्तानीति। यतो हि वर्तना धावन्ति तत एव मुखा(दी)नीति तात्पर्यम्। नेत्रभ्रूमुखरागाः यैर्व्यञ्जिता इति त्वियमभिनयेषु पूरणार्था प्रक्रिया। इयं तु वर्तनास्वित्यपौनरुक्त्यम्।

बाहुलग्नत्वादङ्गुलिक्रियायास्तद्भेदानाह तिर्यक्तथोर्ध्वसंस्थ इत्यादि। तिर्यगिति पार्श्वगत्या, ऊर्ध्वः शिरसोऽप्युपरि गच्छन्, अधोमुखो भुवमाश्लिष्यन्, अञ्चितो वक्षोदेशान्निष्क्रम्य शिरःक्षेत्रमेव प्रत्यागतः, अपविद्धो, मण्डल-

1 द - आवर्त्यन्ते छ - उद्वेष्ट्यन्ते 2 द - बाह्यशः 3 म - नृत्ते चाभिनये चापि हस्तैरेतानि नित्यशः 4 ड - तु 5 म - करणानि तु कारयेत्।
6 ड-न-म-प-न - प्रभृतिष्वादर्शेषु—
तिर्यगूर्ध्वगतश्चैव तथाधोमुख एव च।
आविद्धश्चाप (पि-म) विद्धश्च मण्डलः स्वस्तिकस्तथा।
अञ्चितः कुञ्चितश्चैव पृष्ठगश्चेति चोदितः (ताः - म)॥
बाहुप्रकारो (शो—ड, श—द) दशधा नाट्यनृत्तसमाश्रयः (प्रयोक्तृभिः—ड)

उद्वेष्टितः प्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता [1]विज्ञेया नर्तकैर्नित्यम् ॥ २२१
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये [2]हृदयोदरपार्श्व[3]कर्माणि ॥२२२
[4]आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव ह्युरः[5] पञ्चविधं स्मृतम् ॥ २२३
[6]निम्नमुन्नतपृष्ठं च [7]व्याभुग्नांसं श्लथं क्वचित् ।
आभुग्नं [8]तदुरो ज्ञेयं कर्म चास्य निबोधत ॥ २२४

---

गतेः सर्वतो भ्रमन् । पृष्ठं स्वकायस्यानुसरतीति पृष्ठानुसारी । उद्वेष्टितो मणिबन्धनवर्तनया निष्क्रामणप्रसारितस्य तु स्पष्टमेवाग्रमनुधावन् । एतेषु करणेषु चतुर्षु द्रुतमध्यबिलम्बितादिवैचित्र्येण बाहुपर्यायेण च समस्तानि योजनया यदा नियुज्यन्ते तदा घातवर्तनादिशतसहस्राण्यत्रैवान्तर्भूतानीति यदेके चत्वारिंशतमन्ये शतमाहुस्तन्मिथ्यैव । तदाह करणगता विशेषा अवश्यं ज्ञातव्या इति । नित्यमेतद्व्यातिरिक्तप्रयोजनाभावात् ।

अथोरसः कर्माण्याह आभुग्नमित्यादि । निम्नमिति ससङ्कोचम् । क्वचिदिति मध्ये मध्ये, श्लथं शिथिलं निरवष्टम्भं कृत्वा व्याभुग्नावधः पतन्ता-

---

1 छ - विशेषा 2 प - हृदयोरः 3 ज - प्रभृति म - पर्यन्तं सर्वासु मातृकासु " इति भारतीये नाट्यशास्त्रे हस्ताभिनयो नाम नवमोऽध्यायः म - हस्ताध्यायः द - नवमः (१८८ आदितः १६८८ श्लो) 4 च - आभुग्नमप्यनिर्भुग्नं 5 ड - उरः 6 म - निम्नमध्यं भवेद्यत्त व्याभग्नांसं तथैव च ।
आभुग्नमिति तत्प्रोक्तं कर्माण्यस्य निबोधत ॥
7 न - आभुग्नांसं ड - व्याभुग्नं संश्लथं 8 द - च उरो

[1]सम्भ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशल्येषु[2] ।
कार्यं [3]शीतस्पर्शे वर्षे [4]लज्जान्वितेऽर्थवशात् ॥ २२५
[5]स्तब्धं च निम्नपृष्ठं च निर्भुग्नांस समुन्नतम् ।
उरो निर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥ २२६
स्तम्भे [6]मानग्रहणे विस्मयदृष्टे च[7] सत्यवचने [8]च ।
अहमिति च [9]दर्पवचने [10]गर्वोत्सेके च कर्तव्यम् ॥

[[11]अत्र केचित्—क्षेपकोऽयम्—
दीर्घनिःश्वसिते चैव जृम्भणे मोटने तथा ।
[12]बिब्बोके च पुनः स्त्रीणां तद्विज्ञेयं प्रयोक्तृभिः ॥]

[13]ऊर्ध्वक्षेपैरुरो यत्र निरन्तरकृतैः कृतम्[14] ।
[15]प्रकम्पितं च [16]तज्ज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥ २२९
[17]हसितरुदितेषु कार्यं श्रमे भये श्वासकासयोश्चैव ।
[18]हिक्के दुःखे च तथा नाट्यज्ञैरर्थयोगेन ॥ २३०

---

विवांसौ । यत्र शीतेनापि विना दुर्दिने । एवमत्र मार्गे भ्रमणामिति वर्ष इत्युक्तम् । सम्यगुत्थितं कृत्वा निष्कान्तौ शुद्धा(भुग्ना ?) वंसौ यत्र । हिक्का स्पष्टम् ।

---

1 भ - शस्त्रच्छेदे विषादे च हृच्छोके मूर्छिते भवेत् ।
खेदे कार्यं वर्षे शीतस्पर्शे लज्जान्वितेऽपि च ॥

2 ड - शिल्पेषु 3 ड - तेन स्पर्शे न - शीते द - शीते वर्षे स्पर्शे 4 ड - लज्जायिते 5 म - स्तब्धं समुन्नतं चैव निम्नं पृष्ठं तथैव च 6 ड - मानप्रग्रहणे न - माने ग्रहणे 7 ड - तु 8 द - दृष्टे च छ - विस्मयहर्षे च सत्त्वदृष्टे च 9 न - जल्प 10 ड - गर्वोत्साहे न - गर्वे शोके भ - गर्वोद्वृत्ते विषादे च
11 अयं श्लोकः कखगच - आदर्शेष्वेवास्ति 12 क - विद्वेषे 13 ड - ऊर्ध्वोत्क्षेपैद - उरोक्षेपैः ढ - ऊर्ध्वोत्क्षेपैरुरसो 14 म - कृतैर्युतम् 15 न - आकम्पितं तु कर्तव्यं कर्म चास्य निबोधत 16 ड - तु विज्ञेयं म - तु तज्ज्ञेयं कर्म चास्य निबोधत 17 न - हसिते रुदिते कार्यं दड - हसितरुदितादि (द-ति) संभ्रमभयश्रमव्याधिपीडितार्थेषु 18 न - हिल्के च - हिक्का दड - नानाभावोपगतं कार्यमुरो नाट्ययोगेषु

[1]उद्वाहितं तूर्ध्वकृतमुरो ज्ञेयं प्रयोक्तृभिः ।
[2]दीर्घोच्छ्वासोन्नतालोके जृम्भणादिषु चेष्यते ॥ २३१
[3]सर्वैरेवाङ्गविन्यासैश्चतुरश्रकृतैः कृतम्[4] ।
[5]उरः समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥ २३२
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम्[6] ।
[7]अतः परं प्रवक्ष्यामि पार्श्वयोरिह[8] लक्षणम् ॥ २३३
नतं समुन्नतं चैव प्रसारितविवर्तिते[9] ।
[10]तथापसृतमेवं तु पार्श्वयोः कर्म पञ्चधा ॥ २३४
[11]कटी भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च[12] ।
[13]तथैवापसृतांसं च किञ्चित्पार्श्वं नतं स्मृतम्[14] ॥ २३५
[15]नतस्यैवापरं पार्श्वं विपरीतं तु युक्तितः[16] ।
[17]कटिपार्श्वभुजांसैश्चाभ्युन्नतैरुन्नतं भवेत्[18] ॥ २३६
[19]आयामनादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।

---

1 म - उद्वाहितमूर्ध्वगतं यदुरस्तु स्वभावतः । दीर्घे निःश्वसिते कार्ये जृम्भणे च तथैव च न - उद्वाहितमूलकृतं ड - उद्वाहितमूर्ध्वगतमुरो ज्ञेयं प्रयोगतः 2 ड -दीर्घोच्छ्वासनतालोके द - दीर्घोच्छ्वासोन्नतालोके न - दीर्घनिःश्वासितं कार्यं द - दीर्घोच्छ्वासायताग्रागा 3 ड - सर्वैः ससौष्ठवैरङ्गैः 4 न - कृतैस्तु यत् द - कृतैश्च यत् 5 म - समं तच्चैव विज्ञेयमुरः सौष्ठवसम्भवम् द - उरः सममिदं ज्ञेयं स्वभावाभिनयात्मकम् 6 द - उरः शास्त्रविकल्पनम् 7 ड - अत ऊर्ध्वं 8 म - पार्श्वयोरपि 9 द - विवर्तने 10 ड - तथा प्रसृतमेतत्तु म - तथापसृतमेवं स्यात् 11 ड - कटिर्भवेत्तु द - कटी भवेत्तथा भुग्ना म - कटिर्भवेत्तु निर्भुग्ना 12 द - तु 13 द - तथैवोपसृतांसं तु 14 म - भवेत् 15 म - अन्यत्पार्श्वनतादस्माद्विपरीतं प्रयोगतः ड - तस्यैव चापरं 16 द - यत्कृतः 17 म - कटीपार्श्वभुजांसानामुन्नतैः द - कटिपार्श्वभुजांसं वाभ्युन्नतैः 18 म - स्मृतम् 19 म - प्रसारणात्

[1]परिवर्तात्त्रिकस्यापि विवर्तितमिहेष्यते[2] ॥ २३७

[3]निवर्तनापनयनाद्भवेदपसृतं पुनः[4] ।

[5]पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥ २३८

[6]उपसर्पे नतं कार्यमुन्नतं चापसर्पणे[7] ।

प्रसारितं [8]प्रहर्षादौ परिवृत्ते विवर्तितम् ॥ २३९

विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् ।

एतानि पार्श्वकर्माणि जठरस्य निबोधत[9] ॥ २४०

क्षामं खल्वं[10] च पूर्णं च सम्प्रोक्तमुदरं त्रिधा[11] ।

तनु क्षामं नतं [12]खल्वं [13]पूर्णमाध्मातमुच्यते ॥ २४१

क्षामं[14] हास्येऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।

व्याधिते तपसि[15]श्रान्ते क्षुधार्ते खल्वमिष्यते ॥ २४२

[16]पूर्णमुच्छ्वसिते स्थूले व्याधितात्यशनादिषु ।

[17]अन्ये तु—

क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् ॥] २४३

---

1 झ - परिवर्तः ड - परिवर्तितकस्यापि म - परिवर्तं त्रिकस्याथ न - परिवर्तनात्त्रिकस्यापि 2 म - अथोच्यते 3 म - तस्यैव चापगमनात् 4 म - सृतं तु तत् 5 भ - प्रयोगमेषां वक्ष्यामि पुनस्तन्मे नत... । 6 न - उपसर्पणे नतं कार्यं ज - द्वौ श्लोकौ न स्तः 7 ढ - चापसर्पणम् 8 द - स्यादायामे परावृत्ते ड - प्रकर्षादौ परिवृत्तौ ढ - प्रकार्षादौ परावृत्त्या भ - प्रहर्षादौ त्रासे चापसृतं भवेत् । विवर्तनं निवर्तं च करणे पार्श्वमिष्यते 9 भ - यथायोगं प्रयोजयेत् 10 भ - खल्लं 11 भ - बुधैः 12 द - खल्लं 13 ड - पूर्णमानत ढ - पूर्णमायात छ - पूर्णमाध्यात झ - पूर्णमाध्नात 14 ड - हासे च भ - तु हसिते कार्यं तथा चैव प्रजृम्भण 15 म - तपसा 16 भ - पूर्णं निःश्वसिते कार्यं भुक्ते पीते च योक्तृभिः न - पूर्णमुच्छ्वासिते स्थूल ड – पूर्णमुच्चलिते स्थूलव्याधितन्यूशनादिषु द - पूर्णमुच्छ्वासितारोग्य 17 जादि मान्तेष्वादर्शेषु नास्ति ।

[1]इत्येतदुदरस्योक्तं कर्म कट्या निबोधत।
[2]छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा[3] ॥२४४
उद्वाहिता [4]चेति कटी नाट्ये नृत्ते च पञ्चधा[5]।
[6]कटी मध्यस्य वलनाच्छिन्ना सम्परिकीर्तिता[7] ॥ २४५
[8]पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता[9]।
सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी[10] ॥ २४६
[11]तिर्यग्गतागता क्षिप्रं [12]कटी ज्ञेया प्रकम्पिता।
[13]नितम्बपार्श्वोद्वहनाच्छनैरुद्वाहिता कटी ॥ २४७
[14]पुनश्चासां प्रवक्ष्यामि विनियोगप्रयोजनम्[15]।
[16]छिन्ना व्यायामसम्भ्रान्तव्यावृत्त[17]प्रेक्षणादिषु ॥ २४८
[18]निवृत्ता वर्तने चैव रेचिता भ्रमणादिषु[19]।
[20]कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ॥ २४९
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च।
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ॥ २५०

---

1 ड - इत्येतदुदरं प्रोक्तं कट्याः कर्म 2 म - छिन्ना प्रकम्पिता चैव विवृत्ता रेचिता तथा 3 ज - भवेत् 4 ड - चैव कटी 5 म - नृत्ते पञ्चविधाः स्मृता 6 भ - मध्यस्य वलनात्तत्र कटी छिन्नेति कीर्तिता ढ - सा परिकीर्तिता 7 द - आदर्शे श्लोकार्धो नास्ति 8 म - विवृत्ता परिकीर्तिता 9 म - भ्रमणाच्चैव रेचिता त्वभिसंहिता 10 म - आदर्शे छिन्नालक्षणानन्तरमस्ति 11 ड - क्षिप्ता 12 म - विज्ञेया सा प्रकम्पिता 13 म - नितम्बोद्वाहनाच्चैव क्रमेणोद्वाहिता स्मृता 14 जड - कटिकर्म मया प्रोक्तं त्रिनियोगं निबोधत 15 न - योगं प्रयोगजम् भ - योगं प्रसादजम् 16 भ - छिन्ना कार्या कटी भ्रान्ते विवृत्ता वर्तनेषु च 17 द - पृष्ठतः 18 भ - रेचिता रेचितेषु स्यादन्या लीलागते स्त्रियः 19 ड - भ्रमणेषु च 20 म - वृद्धवामनकुब्जानां गतौ कार्या प्रकम्पिता। व्यायामे त्वथ संभ्रान्ते विवृत्ता प्रेक्षितेषु च। निवृत्ता . . . .

[1]विवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत्[2] ।
[3]नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ॥ २५१
[4]गच्छेदभ्यन्तरं जानु यत्तु तद्वलनं स्मृतम् ।
[5]स्तम्भनं चात्र विज्ञेयमपविद्ध[6]क्रियात्मकम् ॥ २५२
वलिताविद्धकरणादुद्वर्तनमितीरितम्[7] ।
पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्तु निवर्तनम्[8] ॥ २५३
[9]गतिष्वधमपात्राणां भये चापि हि कम्पनम्[10] ।
वलनं चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे ॥ २५४
[11]साध्वसे च विषादे च स्तम्भनं सम्प्रयोजयेत्[12] ।
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः[13] ॥ २५५
[14]विवर्तनं च कर्तव्यं सम्भ्रमादिपरिक्रमे[15] ।

---

शिष्टकटीत्रिकस्कन्धकर्माणि पार्श्वकर्माणीति। गतेषु तदुक्तमपविद्धक्रियात्मकमिति निष्क्रियत्वमिति यावत् ।

---

1 ड - निवर्तनं 2 न - योजयेत् 3 म - नमनोन्नमनं पार्ष्ण्योर्महीपृष्ठे द्रुतभ्रमम् । स्थित्वा पादतलाग्रेण तदूर्ध्वं कम्पनं स्मृतम् । 4 न - गच्छेच्चाभ्यन्तरा द - गच्छेदभ्यन्तरे ड - गच्छेदभ्यन्तराज्जानु म - गच्छेदभ्यन्तरज्जानु शनैर्यद्वलनं तु तत् । क्रियायाश्चाप्रवृत्तिर्या स्तम्भनं तदुदाहृतम् । 5 म - आदर्शे नास्ति 6 न - अपवृत्तं 7 भ - भावो यस्तदुद्वर्तनामिष्यते ड - करणादूर्वोरुद्वर्तनं स्मृतम् 8 ड - तत्र निवर्तनम् 9 द - आदर्शे त्रयो विनियोगश्लोका न सन्ति 10 क - भवेच्चापि हि कम्पनम् म - कम्पनं संप्रयोजयेत् झ - भयतोऽपि हि कम्पनम् न - प्रकम्पनम् 11 म - ह्रीसाध्वसविषादेषु 12 ड - तु प्रयोजयेत् 13 न - तथा 14 न - निवर्तनं 15 ड - परिभ्रमे

[1]यथादर्शनमन्यच्च लोकाद्ग्राह्यं प्रयोक्तृभिः ॥ २५६
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घयोस्तु[2] निबोधत ।
[3]आवर्तितं नतं [4]क्षिप्तमुद्वाहितमथापि वा[5] ॥ २५७
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा[6] ।
[7]वामो दक्षिणपार्श्वेन दक्षिणाच्चापि वामतः ॥ २५८
[8]पादो यत्र व्रजेद्विप्रास्तदावर्तितमुच्यते[9] ।
[जङ्घास्वस्तिकयोगेन क्रमादावर्तितं नयेत् ॥] २५९
जानुनः कुञ्चनाच्चैव[10] नतं ज्ञेयं प्रयोक्तृभिः ।
विक्षेपाच्चापि[11] जङ्घायाः क्षिप्तमित्यभिधीयते ॥ २६०
[नतं स्याज्जानुनमनात्क्षिप्तं विक्षेपणाद्बहिः ।]
उद्वाहितं च[12] विज्ञेयमूर्ध्वमुद्वाहनादिह[13] ॥ २६१
[14]प्रतीपनयनं यत्तु परिवृत्तं तदुच्यते[15] ।
आवर्तितं प्रयोक्तव्यं [16]विदूषकपरिक्रमे ॥ २६२
[17]नतं चापि हि कर्तव्यं स्थानासनगतादिषु ।
क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते[18] । २६३
तथा चोद्वाहितं [19]कार्यमाविद्धगमनादिषु ।
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ॥ २६४

---

1 ड - तथा 2 ड - जङ्घायास्तु न - जङ्घयोश्च 3 न - आवर्तनं झ - आवर्तितं तु तं 4 द - क्षिप्र 5 ड - च 6 भ - कारयेत् द - पञ्चवै 7 द - जङ्घास्वस्तिकयोगेन क्रमादावर्तितं भवेत् । नतं स्याङ्गानुगमनाद्धिक्षिप्तं क्षेपणाद्बहिः । 8 झ - पादो यत्राग्रतो विप्राः 9 म - तदावर्तनमिष्यते 10 ड - कुञ्चनं वापि 11 म - विक्षेपाच्चैव 12 म - तु 13 ड - उद्वाहनादपि म - उद्वाहनाद्बुधैः ढ - ऊद्वाहनादथ 14 भ - प्रपात द - प्रतीपगमनं 15 म - तदिष्यते 16 ढ - संभ्रमाति 17 द - विनियोगश्लोकाः नसन्ति 18 म - प्रयोजयेत् 19 ढ - कुर्यात्

[1]इत्येवं जङ्घयोः कर्म पादयोस्तु[2] निबोधत।
[3]उद्घट्टितः समश्चैव तथाग्रतलसञ्चरः॥ २६५
अञ्चितः कुञ्चितश्चैव पादः पञ्चविधः स्मृतः।
[4]स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ[5] निपात्यते[6]॥२६६
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः[7]॥
[8]अयमुद्वेष्टितकरणेष्वनुकरणार्थं प्रयोगमासाद्य।
[9]द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः[10]॥
स्वभावरचितो[11] भूमौ समस्थानश्च यो भवेत्[12]।
[13]समपादः स विज्ञेयः स्वभावाभिनयाश्रयः॥
स्थिरः स्वभावाभिनये नानाकरणसंश्रये। २६९
[14]चलितश्च पुनः कार्यो [15]विधिज्ञैः पादरेचिते[16]॥

---

बहिः पार्ष्णिक्षेपाच्च पतनमाविद्धमूरोः वर्तना करण इति क्रियायां सत्यामित्यनेन पुनःपुनः पादतलाग्रात्तु स्थानं च कर्तव्यमिति दर्शयति। ऊर्ध्वविकृतस्य घट्टनानुद्घट्टितः उद्वेष्टितरूपं यत्करणमुद्वेष्ट्यन्ते यदा-ङ्गुल्य इत्यादि तदेव बाहुकर्मभेदाद्बहुधा। तत्रास्य प्रयोग इति वर्तनाश्रयो विनियोगः। केचित्तु प्रयोगमासाद्यानुकरणार्थमप्यस्य प्रयोग इत्यूचुः। यथा विक्रमोर्वश्यादौ पुरूरवःप्रभृतेः। एतेन नाट्यविषयो विनियोग उक्तः।

---

1 झ - इत्येतत् म - एतत्तु 2 झ - पादयोश्च 3 झ - उद्घट्टितं समं चैव द - उद्घाटितः समस्त्र्यश्रः ......पादःषोढा प्रकीर्तितः 4 द - स्थित्वाग्रतलपादेन प - स्थित्वा पादान्तलग्नेन 5 झ - पार्ष्णिभूमौ 6 भ - निवेशयेत् 7 द - भवेदुद्घाटितस्तु सः म - स तूद्घट्टित इष्यते 8 ड - अयमुद्घट्टित द - अयमुद्घाटित 9 म द - ललितमधुरप्रचारः 10 द - वापि कार्यस्तु ड - समकृद्वा प्रयोक्तव्यः 11 द - रचितौ 12 द - समस्थानं च योजयेत् 13 म - समो मतः स पादस्तु 14 ड - वलिता च पुनः कार्या म - वलितश्च 15 च - विक्षेपः 16 म - रेचके

[[1]समस्यैव यदा पार्ष्णिः पादस्याभ्यन्तरे भवेत्। २७०
बहिः पार्श्वस्थितोऽङ्गुष्ठस्त्र्यश्रपादस्तु स स्मृतः ॥
त्यक्त्वा (कृत्वा?) समपदं स्थानमश्वक्रान्ते तथैव च।
स्याद्विक्लबादिष्वर्थेषु त्र्यश्रः पादो यथाविधि] ॥
[[2]अस्यैव समपादस्य पार्ष्णिरभ्यन्तरे भवेत्।
त्र्यश्रपादः स विज्ञेयः स्थानकादिषु संश्रयः ॥]
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोऽङ्गुष्ठकस्तथा[3]।
[4]अङ्गुल्यश्चाञ्चिताः सर्वाः पादेऽग्रतलसञ्चरे[5] ॥
[6]तोदननिकुट्टने[7] स्थितनिशुम्भने भूमिताडने भ्रमणे[8]।
[9]विक्षेपविविधरेचकपार्ष्णिकृतागमनमेतेन[10] ॥
[11]पार्ष्णिर्यस्य स्थिता भूमौ पादमग्रतलं[12] तथा। २७५

---

अग्रेण नतेन च न त्वरत इति ।। तथा तोदनं प्रेरणम्, निकुट्टनं तदवग्रहणं स्थितं स्थानकादि, शुम्भनं पीडनं, (ताडनं) हननं, विक्षेपो भूतस्यापसारणं

---

1 द - आदर्शे एव 2 ज द न - आदर्शेष्वेव 3 न - पार्ष्णिरञ्चितोऽङ्गुष्ठतस्तथा ज। - पार्ष्णिरञ्चितोऽङ्गुष्ठकस्तथा 4 क - अङ्गुल्यग्राञ्चिताः 5 ड - पादोऽग्रतलसञ्चरे झ - पादोऽग्रतलसंचरः म - पादे च तलसंचरे 6 म - नोदन 7 ड - निकुट्टिते द - निकुट्टनस्थितस्तम्भने 8 म - स्थितिनिसुम्भिते भूमिताडने चैव ड - निशुम्भिते भूमिताडनभ्रमणे 9 म - विक्षिप्त छ - विक्षेपविधिरेचकपाणिकृतगमन 10 ड - क्षताग्रगमनमेतेन न - कृतं गमनमेतेन झ - क्षणगमनमेतेन ज - क्षतगमनमेतेन
11 - छ - पार्ष्णिर्यस्य

म - ऊर्ध्वमग्रतलं यस्य पार्ष्णिर्भूमौ स्थिता तदा।
अञ्चितः स स्मृतः पादः कर्म चास्य निबोधत ॥

12 ड - यस्याञ्चिता भूमावूर्ध्वमग्रतलं द - भूमावुत्क्षमग्रतलं

अङ्गुल्यश्चाञ्चिताः[1] सर्वाः स पादोऽञ्चित उच्यते[2] ॥
[3]पादाग्रस्थितसञ्चारे[4] वर्तितोद्वर्तिते तथा । २७६
[5]एष पादाहते कार्यो नानाभ्रमरकेषु च ॥
ऊत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
[6]तथाकुञ्चितमध्यश्च स पादः कुञ्चितः स्मृतः ॥
[7]उदात्तगमने चैव वर्तितोद्वर्तिते[8] तथा । २७८
अतिक्रान्तक्रमे चैव पादमेतं[9] प्रयोजयेत् ॥
[10][उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थितः[11] । २७९
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ॥
[12]नृत्ते नूपुरकरणे प्रयोगस्तस्य कीर्तितः[13] ॥] २८०
[14]पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ।
पादस्य करणे सर्वं जङ्घोरुकृतमिष्यते[15] ॥ २८१

भ्रान्तकं मनसः, विविधरेचकः करपादरेचकः। अञ्चिता इति प्रसृताः। अञ्चितमुद्वर्तितं विदूषकादिगतौ। भ्रमरी चारी, येषु प्रयोगेषु ते भ्रमरकाः। सूचीं षष्ठं पादमन्ये पठन्ति। नूपुरस्य पादभूषणस्य करणे बन्धने। कट्यूरुजङ्घापादकर्माण्येव परस्परामिश्रीभूततावैचित्र्येण समुदिततया प्रयुज्यमानानि चारीत्युच्यन्ते। तत्समुदायस्य मण्डलभेदेन गतिर्निष्पद्यत इति कट्यादिपादान्तकर्मणैव चार्य उक्ताः। अत एव तासां विनियोगः पृथङ्नोक्तः।

समनन्तरं त्वध्यायत्रयं तद्वैचित्र्योदाहरणप्रदर्शनार्थमित्येतत्सर्वं मनसि कृत्वाह पादजङ्घोरुकरणमित्यादि। सममिति सह। अत्र हेतुः पादस्येति नाभिजङ्घोरुकरणमित्यादिकर्मस्वन्यं पादकर्मेत्यर्थः।

1 ढ - चालिताः 2 द - पादस्त्वरितः स्मृतः ड - पादस्त्वञ्चितः स्मृतः 3 ड - पादाग्रतल न - पादाग्रक्षत ढ - पादाग्रकृत झ - पादाग्रहत 4 म - ऊद्वर्तने 5 म - नानाभ्रमरके चैव योज्यः पादोऽयमञ्चितः 6 म - कुञ्चितश्च तथा मध्यः 7 च - उपान्ते द - तदानुगमने 8 म - वर्तनोद्वर्तने 9 म - पादमेनं 10 जदनादर्शेषु नास्ति 11 म - संस्थितिः ढ - संस्थितम् 12 च - नृत्तेऽन्तःपुर 13 ड - कीर्त्यते 14 म - ऊरुजङ्घांघ्रिकरणं 15 म - करणे चोक्तमूरुजङ्घाकृतं तथा -

यथा पादः प्रवर्तेत तथैवोरुः[1] प्रवर्तते।
तयोः समानकरणात्पादचारीं[2] प्रयोजयेत्॥ २८२

इत्येतदङ्गजं प्रोक्तं लक्षणं चैव कर्म हि[3]।
[4]अतःपरं प्रवक्ष्यामि चारीव्यायामलक्षणम्॥ २८३

इति श्रीभारतीये नाट्यशास्त्रे
[5]अङ्गाभिनयो नाम
[6]नवमोऽध्यायः॥



एतदेव स्फुटयति यथा पाद इति । तयोरिति मध्ये जङ्घापि स्वीकृता। अत्रैवं सर्वमाङ्गिकमियतैवोक्तमिति दर्शयति इत्येतदिति । अनन्तरवक्तव्यस्यासूत्रयति अतःपरमिति । चारीव्यायामा लक्ष्यन्ते उपलक्ष्यन्ते उदाहरणतया येनेति शिवम् ॥

शिशिरतरकिरणकलिकालङ्कारविभक्तिभक्तभङ्गुरतापः ।
अभिनवगुप्तो नवमाध्याये सन्देहतापमपनुदताति स्म ॥



इति श्रीमहामाहेश्वराभिनवगुप्तविरचितायां
नाट्यवेद*विवृतावभिनवभारत्यां
आङ्गिकाध्यायो नवमः ॥



1 म - तथोर्वादि 2 द - करणां पादचारीं 3 म - कर्मलक्षणमेव च. द - इत्येतल्लक्षणं प्रोक्तमङ्गजं कर्म चैव हि न - कर्म चैव च। झ - चैव कर्मभिः 4 म - अत ऊर्ध्वं 5 ड - शारीराभिनयो न - शारीराभिनयो 6 ज - प्रभृति म - पर्यन्तेष्वादर्शेषु भ - संज्ञके विना दशमोऽध्यायः. 1 भ - संज्ञके अध्यायविभाग एव नास्ति द - संज्ञके दशमोध्यायः ४९॥ आदितः १७३७॥ इति च। *वृत्तौ

श्रीः

# नाट्यशास्त्रम्

## दशमोऽध्यायः[1]

—·—

[[2]एवं पादस्य जङ्घाया [3]ऊरोः कट्यास्तथैव च।
समानकरणे चेष्टा[4] चारीति परिकीर्तिता[5]॥] 1
विधानोपगताश्चार्यो [6]व्यायच्छन्ते परस्परम्।
यस्माद् [7]समायुक्तास्तस्माद् व्यायाम उच्यते[8]॥ 2

---

निश्चलस्थितिमव्योमभूचारीसद्गतिप्रदः।
सर्वदा ध्वनिमात्रात्मा शम्भुर्विजयतात् प्रभुः॥

चारीव्यायामलक्षणमित्युक्तम्। तत्र समासे सन्देहः व्यायामशब्दार्थे च, चरेर्हि (इञ्) करणे भावे वा औणादिक इति, 'कृदिकारादक्तिन ङीष्' इति च चारीशब्दः प्रसिद्धार्थ इत्यभिप्रायेण सन्देहद्वयमपाकर्तुमाह—विधानोपगता इति। अन्योन्ययोजनापतिताश्चार्यो व्यायामशब्दस्यार्थ इति तात्पर्यम्। चार्य एव व्यायाम इति कर्मधारय इत्यर्थः। अन्वर्थस्तु व्यायच्छन्ते इति परस्परतया आपतन्ति। कुत्र नियम इत्याह—परस्परं पूर्वा चारी परत्र नियता (न तु) पूर्वस्यामिति, तेनाकर्मकत्वादात्मनेपदं परस्परोपपदाच्चेति कर्मव्यतिहारजमात्मनेपदं निषेधति, न तु 'आङोयमहन' इति। ननु किं तन्नियमनमित्याह। विधानोपगता इति प्रधानेनैकस्या यतः अपरा उपगता बलादेवागता। नन्वेवमन्योन्याश्रयम्? न, अङ्गेन प्रधानभूतेन केनचित्, सम्यगायुक्ताः प्रयुक्ताः प्रवर्तिता

---

1 भ-आदर्शे नात्राध्यायविभागः कृतः। नवमाध्यायमध्य एव दशमस्य प्रारम्भोऽस्ति। जादि भान्तादर्शेषु सर्वेष्वयमेकादश इत्येव गण्यते।
2 - अयं श्लोकः कखगघचाभादर्शेषु न वर्तते 3 छ - ऊर्ध्वं म - ऊरु 4 छ - करणाचेष्टा ड - करणाच्चेष्टा न - करणे चेष्टा 5 ड - सा चारीत्यभिधीयते ज - सा चारीत्यभिसंज्ञिता 6 म व्यायच्छान्ति झ - व्याश्रयन्ति 7 ड - समायुक्तः 8 ड - व्यायाममुच्यते।

एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता[1] ।
[2]द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥ ३
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा [4]संयुक्तैर्मण्डलं भवेत् ॥ ४
चारीभिः [5]प्रसृतं नृत्तं चारीभिश्चेष्टितं तथा ।
चारीभिः शस्त्रमोक्षश्च[6] चार्यो युद्धे च कीर्तिताः[7] ॥ ५

---

यत्रायत्रापेक्षया बहुवचनम् । एतदुक्तं भवति—किंचिदङ्गं प्रधानं यत् संभवति यथा हस्तो वा अभिनये, पादो वा गतौ, तदा तदुपयोगिनी चारी प्रधानं, तच्चारीसंपत्त्युचिता च पूर्वा चारी आश्रीयते परयाचेति परस्परनियमवत्यश्चार्यो-व्यायाम इति । तत्र व्यायामस्य संक्षिप्तमध्यमविस्तीर्णतया भेदान्निरूपयति । एकपादप्रचारो एकः एकाकिपादेन, श्रोण्यादिप्रचारो व्याक्षिप्तः । द्विपादेति । पादशब्देन तत्प्रचारः । नामेति तुर्व्यायामप्रसिद्धादन्यदेवेदं संज्ञात्वेनाधुनैव नियम्यत इत्यर्थः । एष संक्षिप्तो व्यायामः अभिनयान्तरादौ । करणानामिति बहुवचनात् त्रीन् (त्रीणि?)'कपिञ्जलानालभे'तेति यथा । अन्यथा बहुत्वानियमे खण्डानां मण्डलेभ्यः क्व प्रविभागः । एष मध्यमो व्यायामः उपवृत्त्येधमानौ । त्रिभिश्चतुर्भिरित्येतच्चतुरश्रतालाभिप्रायेण, वाग्रहणान्मिश्रणमपि सूचयन् सङ्ख्यान्तरमपि गृह्णीते । तथा हि—चतुर्थे सूचीविद्धाख्ये (११-१२) मण्डले तु याश्चारीर्वक्ष्यति 'सूचीमाद्यं पदं दध्या'दित्यादि । (११-१३)सप्तमे त्वलाताभिख्ये—'भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् । षट्सङ्ख्यं सप्तसङ्ख्यं वा'इति (११-२२) द्वादशेऽद्ध्यधिका इति । एवमन्यत्र । तत्र लौकिकत्वं तावच्चारीणां दर्शयति चारीभिरिति नृत्तं वाऽङ्गहारात्मकत्वं च तच्चारीभिः प्रसृतं च व्याप्तमिति प्रत्येकं चेष्टितं गतिः । शस्त्रमोक्ष इति चक्रकुन्तादियुद्धं युद्धमिति, खड्गहननादियुद्धं नियुद्धं च । प्रकृतेऽप्युपयोजयति—

---

1 द - चारित्याभिधीयते न - सा चारीत्यभिसंज्ञिता 2 द - पादाभ्यां चरणं यत्तु करणं चेह तत्स्मृतम् । 3 ङ - समायोगात् खण्डमित्यभिधीयते 4 ङ - संयुक्तं 5 द - संस्कृतं नृत्यं म - प्रस्तुतं 6 न - मोक्षश्च 7 प प्रकीर्तिताः.

[1]यदेतत्प्रस्तुतं[2] नाट्यं तच्चारीष्वेव संस्थितम्[3] ।
[4]न हि चार्या विना किंचिन्नाट्येऽङ्गं संप्रवर्तते[5] ॥ ६
तस्माच्चारीविधानस्य[6] संप्रवक्ष्यामि लक्षणम्[7] ।
या यस्मिंस्तु [8]यथा योज्या नृत्ते युद्धे गतौ तथा[9] ॥ ७
[10]समपादा स्थितावर्ता शकटास्या तथैव च ।
[11]अध्यर्धिका [12]चाषगतिर्विच्यवा च तथापरा[13] ॥ ८
[14]एडकाक्रीडिता बद्धा [15]ऊरूद्वृत्ता तथाड्डिता[16] ।
[17]उत्स्पन्दिताथ जनिता स्यन्दिता चापस्यन्दिता[18] ॥ ९

यदेतदिति । यच्छब्देन व्याख्यातधर्मपूर्वकं, एतच्छब्देन व्याख्यास्यमानधर्मयोगं परामृश्यत इति विततता नाट्यस्याह । किंचिदङ्गमिति शिरोहस्तादि, किंचिद्धि, चार्या सह किंचित्पूर्वापरभावेन । संप्रवर्तत इति संवर्तते खलत्वेन प्रवर्तते क्रियया, सम्यक् प्रवर्तते वा, अनित्येनेति वैकल्पिकोऽप्युपसर्गार्थयोगः तथाङ्गेऽपि स्वीकारतत्त्वं(?)निरूप्यत इति भर्तृमित्राचार्यः । प्रकृताधिकारिखेदावहत्वाच्च न पदवाक्यवित्परिचितताप्रकटनमात्रलालसात्मकमतिरिति विरमति(म्यते?) । लक्षणमिति उदाहरणम् । नृत्त इति, करणाङ्गहारादौ । यस्मिन्निति । 'नपुंसक'मित्येकशेषः, तथेति उक्तं, वक्ष्यते चेति

1 सार्धः श्लोके द - आदर्शे न वर्तते पतितः स्यात् 2 प - प्रायशो 3 म - तच्चारीषु व्यवस्थितम् ड - संज्ञितम् 4 न - न चारीभिर्विना 5 ड नाट्ये ह्यङ्गं प्रवर्तते म - नाट्येष्वङ्गं प्रवर्तते न - नाट्याङ्गं संप्रवर्तते 6 म - विधानं ड - विधानश्च 7 म - तत्त्वतः 8 ड - तथा 9 म - गतेषु च 10 - मन - आदर्शयोः "समपादस्थिता, आवर्ता" इति पाठानुसारी छेदः कृतः 11 न - अभ्यर्धिता म - अध्यर्धगा 12 प वासगति 13 म - स्वस्तिकोद्वर्तिता तथा द - परे 14 म - एलकाक्रीडिता च स्यादूरुवृत्ता द - एलिका 15 प - ह्यरूद्वृत्ता 16 झ - तथाधिता च - तथांडिता

17 म - विच्यवा जनिता चैव विज्ञेयास्कान्दिता तथा ।
तथावस्कन्दिता चैव मत्तल्ली च तथापरा ।
समोत्सारितमत्तल्लीत्येता भौम्यस्तु कीर्तिताः ॥

ड - उत्सन्दिताच द - तत्सन्दिताथ झ - उत्स्यन्दि 18 ड - चापस्पान्दिता न - स्पनिता द - चापसान्दिते,

[1]समोत्सारितमत्तल्ली मत्तल्ली चेति षोडश ।
[2]एता भौम्यः स्मृताश्चार्यः शृणुताकाशिकीः पुनः[3] ॥
अतिक्रान्ता ह्यपक्रान्ता[4] पार्श्वक्रान्ता[5] तथैव च ।
ऊर्ध्वजानुश्च सूची च[6] तथा नूपुरपादिका ॥ ११
डोलापादा तथाक्षिप्ता [7]आविद्धोद्वृत्तसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च[8] भुजङ्गत्रासिता तथा ॥ १२
[9]मृगप्लुता च दण्डा च [10]भ्रमरी चेति षोडश ।
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १३
पदैर्निरन्तरकृतैस्तथा समनखैरपि ।

---

शेषः । तत्र नृत्ते उक्तं, युद्धे वक्ष्यते न्यायेषूद्यमिति शेषः, गतौ च द्वादशाध्याये वक्ष्यते—इत्यध्यायत्रयस्यार्थ इह सूचितः । तत्रोद्देशमाह—सभावेति (भौम्य इति?) भूमौ भवा भौम्यः, एवमाकाशिक्यः उपरिचरताम् । स्मृता इति वेदोदाहरणेऽत्र यावत्स्मर्यते तावद्व्युत्पादनार्थं, शिष्टानि । तैर्वक्तव्यम् तेनैतन्नाशङ्कनीयम् । यदि नेदं परिगणनं कियता भेदेनोक्तेति न तत्र स्पष्टम् । यल्लक्षणमनन्वर्थं च, तद्व्याक्रियते ।

---

1 न - समासादित ड - समोत्सारित द - समोसरित च - समासरित
2 म - आदर्शे श्लोकार्धो न वर्तते 3 न - आकाशिकाः पुनः ढ - आकाशकीः पुनः 4 द - अपक्रान्ता म - त्वपक्रान्ता 5 द - पार्श्वाक्रान्ता 6 म - ऊर्ध्वजानु स्तथा चैव 7 ड - व्याविद्धोद्वृत्त म - ह्याविद्धोद्वृत्त ढ - ह्यावृत्तोद्वृत्त च - आविद्धोद्वृत्तसंज्ञका 8 म - तथालाता द - ह्यताना च
9 म - उत्कीर्णा दण्डपादा च भ्रमरी हरिणप्लुता (भ - बद्ध)
आकाशगास्त्विमाश्चार्यो नियुद्धकरुणाश्रयाः ॥
द्वात्रिंशदेता निर्दिष्टा मया चार्यो द्विजोत्तमाः ।
पुनरासां प्रवक्ष्यामि लक्षणं कर्मणा सह ॥
10 ख - भ्रमरा ।

समपादा तु सा[1] चारी विज्ञेया स्थानसंश्रया[2] ॥ १४
भूमिघृष्टेन[3] पादेन कृत्वाभ्यन्तरमण्डलम् ।
[4]पुनरुत्सारयेदन्यं स्थितावर्ता[5] तु सा स्मृता ॥ १५
निषण्णाङ्गस्तु चरणं[6] प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यां प्रयोजयेत् ॥ १६
[7]सव्यस्य पृष्ठतो वामश्चरणस्तु[8] यदा भवेत् ।
[9]तस्यापसर्पणं चैव ज्ञेया साध्यर्धिका बुधैः[10] ॥ १७

अथ समपादा—ननु सममादा कथं वा चारीत्याह—स्थानसंश्रयेति यदा समपाद एव स्थानान्तरं गच्छति तदा चरणश्चारी भवत्येव योग्यतया तथा व्यपदेशादिति भावः ।

अथ स्थितावर्ता--भूमिघृष्टेनेति, अग्रतलसञ्चरेणाभ्यन्तरमण्डलं द्वितीयपार्श्वे जानुस्वस्तिकान्तं, पुनःशब्दो विशेषं द्योतयन् सन्नि(वेश)योगमाह । तेन स चेत् स्वस्तिकत्वेन श्लिष्टस्ततो द्वितीयमुत्सारयेत् स्वपार्श्वे कर्षयेदेकस्य स्थानमपरस्यामिति तथा ॥

अथ शकटास्या—निषण्णाङ्गस्त्विति प्रयत्नधृतपूर्वकाय इत्यर्थः । शकटमसनीयं क्षेप्यं यया। एकस्मिन्नु पादे समेऽङ्गुल्याश्रितं पक्षेतरं कृत्वा जानुनः कुञ्चने जङ्घाप्रसरणे च स्वपार्श्वे च त्र्यश्रिततलसञ्चरस्थापनं नु निरोधन (रेचन?) मिवेति केचिदेनामाहुः । एतच्च लक्षणं लक्ष्यार्थासङ्गतमेव ।

अथाध्यर्धिका—सव्यस्येति दक्षिणस्य । पृष्ठत इति पार्ष्णिदेशे। तस्येति दक्षिणस्योपसर्पणे स्वपार्श्वार्धत्र्यश्रिततया स्थितिः । अव्यतिरेकेति अध्यर्धतालान्तरत्वादयो मन्तव्याः । एकस्य पूर्णता गतिरन्यस्य पादस्य पूर्णार्धकेत्यन्ये । करणप्राधान्याच्चैवमुक्तं वामस्यापि पृष्ठसङ्गतमेव ।

1 ङ - स्मृता म - समपादस्थिता झ - सृता 2 म - संश्रिता 3 च - कृष्टेन 4 म - वाममुत्सारयेत्पादमावर्ता चारिमादिशेत् । ङ - पुनरुत्सादयेदन्यं न - पुनरुत्सारयेत्पादं 5 ङ - स्थिरावर्ता झ - स्थिरावृत्ता 6 म - निषण्णगात्रश्चरणं ङ - सदृशं 7 झ - सव्यस्तु 8 न - चरणस्य 9 म - वामापसर्पणाच्चैव विज्ञेयाध्यर्धिका बुधैः । न - तस्यापसर्पणश्चैव ङ - तस्योपसर्पणं 10 द - लब्धा च - साध्यधिका बुधैः ।

पादः प्रसारितः सव्यः पुनश्चैवापसर्पितः[1]।
वामः [2]सव्यापसर्पी वा चाषगत्यां[3] विधीयते॥ १८
[4]विच्यवात्समपादाया [5]विच्यवां संप्रयोजयेत्।
निकुट्टयंस्तलाग्रेण[6] पादस्य धरणीतलम्॥ १९
[7]तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं तु यत्।
[8]पर्यायशश्च क्रियते[9] [10]एडकाक्रीडिता तु सा[11]॥ २०

---

अथ चाषगतिः—सव्येति दक्षिणस्य पृष्ठत इति, सव्योऽपसर्पत्येव सर्वत्र। प्रसारित इति तालमात्रमग्रतः पुनः स एवापसर्पितो द्वितालमात्रं पश्चान्नीतः, वामः सव्येन सहापसर्पति। किंचिदुत्प्लुत्य सव्यवामात्रपसर्पतः श्लिष्यतश्चेति सत्रासमपसर्पणादौ चाषस्येव गतिः चाषगतिः। सव्योपसर्पि चेत्यन्ये पठन्ति, तत्र श्लिष्टत्वं शब्दो (सव्यो?)क्तत्वमपसर्पणं चार्थः॥

अथ विच्यवा—पादस्येति पादयोरित्यर्थः।

अथैलकाक्रीडिता—उत्प्लुत्या किंचिदेकः सक्थिगुल्फदेशेभ्यः पुनरुत्प्लुतिः अङ्गान्तरेणैवमिति पर्यायशः पतनं यत्र चार्या सा अजिकागतितुल्यत्वादेडकाक्रीडिता॥

---

1 न - पुनश्चैवोपसर्पितः 2 न - सव्यापसर्पी च द - सव्योपसर्पी वा काशमित्यभिधीयते 3 ड - चाषगत्या 4 म - आदर्शे त्वधिकोऽयं श्लोकः—

अन्योन्यजङ्घासंवेधात्स्वस्तिका सा तु कीर्तिता।
ऊरुभ्यां वलनं यत्तु सा स्मृतोद्वर्तिका बुधैः॥

विच्यवेति श्लोकोऽड्डितालक्षणात्परमस्ति
च - एवं वा झ - विच्यवां समपादायां द - विच्यवन्तं समादाय ढ - वीच्यवात्समपादाया 5 ढ - वीच्यवां ज - विवृतं न - विच्यवा ड - विश्लेषं झ - वीचिवत् 6 ड - तथाग्रेण 7 झ - तलसंचार द - नव म - पादयोस्तलसंचारादुत्क्षिप्य पतनं तु यत्। 8 ड - पर्यायतश्च 9 ढ - क्रियतः 10 म - सैडकाक्रीडिता स्मृता 11 झ - तथा।

[1]अन्योन्यजङ्घासंवेधात्कृत्वा तु स्वस्तिकं ततः[2] ।
ऊरुभ्यां वलनं [3]यस्मात्सा बद्धा चाप्युदाहृता[4] ॥ २१
तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखी यदा[5] ।
जङ्घाञ्चिता [6]तथोद्वृत्ता ऊरूद्वृत्तेति सा स्मृता[7] ॥ २२
अग्रतः पृष्ठतो वापि [8]पादोऽग्रतलसञ्चरः ।
द्वितीयपादनिर्घृष्टो[9] यस्यां स्यादड्डिता तु सा[10] ॥ २३

---

अथ बद्धा—केवलयोरेवोर्वोर्वलनं स्थित एव जङ्घास्वस्तिक इति बद्धां केचिदाहुः । अन्ये तु स्वस्तिकापसरणेन पादतलाग्रयोर्मण्डलभ्रमणपूर्वकं स्वस्वपार्श्वगमनमिति यदूरुबन्धनमाहुः । जङ्घयोः संबन्धनात् अनु बद्धा ॥

अथोरूद्वृत्ता—अग्रतलसञ्चरस्य पादस्य संबन्धिनी पार्ष्णिर्द्वितीयपादपृष्ठभागौन्मुख्यं यदा भवति जङ्घा च जानुनमनादाकुञ्चिता उद्वृत्ता- द्वितीयजङ्घा सम्मुखं वलनात् तथा । ऊरोरूर्ध्वविवर्तनात् लज्जेर्ष्यादिविषया ऊरूद्वृत्ता । अन्ये तु पार्ष्णिर्द्वितीयस्य तलसञ्चारबाह्योन्मुखीत्याहुः ॥

अथाड्डिता—अग्रत इति । अपिस्समुच्चये, वा पर्याये । तेन समस्थितस्यैकस्य द्वितीयस्तलसञ्चरः क्रमादग्रे पृष्ठे च निर्घृष्टः श्लिष्टः कार्य इति अड्डिता,

---

1 म - आदर्शे पूर्वमेव निवेशितोऽयम्  2 झ - तु तत् द - यत्स्यात्  3 क - चाप्युदीरिता  4 म - पार्ष्णिश्चेदुन्मुखी भवेत्  द - बाह्योन्मुखी स्थिता  5 ढ - ततोद्वृत्ता  6 म - सोरूवृत्ता तथेष्यते  7 ड - पादस्तु तलसंचरः  8 झ - पादो निर्घृष्टो  न - द्वितीयं पादनिर्घृष्टो  9 म - यत्र सा त्वड्डिता भवेत् ।  झ - यत्र स्यादड्डिता तथा  10 भ म - आदर्शयोरत्रैव विच्यवाजनितालक्षणमस्ति । 'शनै' रित्याद्युत्स्पन्दितालक्षणं तु जनिताया अनन्तरमेव दृश्यते । यथा—

विच्यवात्समपादाया विच्यवा सा तु कीर्तिता । (भ - दस्य)
पुनर्निकुट्टनं चैव पादस्याग्रेण योजयेत् ॥
पादः स्यात्तलसंचारः करश्चैव प्रलम्बितः ।
मुष्टिहस्तश्च वक्षःस्थो जनिता सा विधीयते ॥
शनैः पादविवर्तो यो बाह्येनाभ्यन्तरेण वा ।
रेचकस्यानुचरणाज्ज्ञेया चास्कन्दिता बुधैः ॥

[1]शनैः पादो निवर्तेत[2] बाह्येनाभ्यन्तरेण च ।
यद्रेचकानुसारेण[3] सा चार्युत्स्पन्दिता[4] स्मृता ॥ २४
[5]मुष्टिहस्तश्च वक्षस्थः करोऽन्यश्च प्रवर्तितः[6] ।
[7]तलसञ्चरपादश्च जनिता चार्युदाहृता ॥ २५
[8]पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां[9] न्यसेत् ।
द्वितीयेन तु पादेन[10] तथापस्यन्दितामपि ॥ २६

पादस्य स्वस्थानातिक्रमणात् । अड्डु अतिक्रमहिंसयोरिति पठन्ति, सत्त्वे च रूपम् ॥ *

अथोत्स्पन्दिता—बाह्येन कनिष्ठाङ्गुलिभागेन अभ्यन्तराङ्गुष्ठभागेन निवर्तते चेद्(उभयोः पादयोः) गमागमं कुरुते । किमवधीत्याह पादरेचितस्यापसारेण शोभापेक्षयोत्क्रान्तमस्या । यन्नद्याः प्रत्यावर्तनरूपस्पन्दितकृत् तत्तुल्यत्वादियमुत्स्पन्दिता । रेचकं नृत्तहस्तमत्र केचिदाहुः ॥

अथ जनिता—तलसञ्चरपादः प्रवर्तित इति । एतदेवास्याः स्वरूपं मुष्टेर्वक्षोगामित्वं हस्तान्तरस्य च प्रवर्तनमितिकर्तव्यतामात्रम् । समस्तगतीनामियं जननं करोति प्रारम्भरूपत्वादिति जनिता ॥ †

अथ स्यन्दितापस्यन्दिते—क्रमसमो निषण्णोरुः पादो दक्षिणस्तु-पञ्चतालात् प्रसारितः । तालः स्मृतः मध्यमया" इति । सा स्यन्दिता प्रसारणधर्मत्वात् । एतद्विपर्ययादस्या अपि सव्येन स्यन्दितेनेति अङ्गपर्यायाच्च लब्धाप्येषा प्रयोगे साहचर्यनियमख्यापनार्थं पुनर्निरूपिता । आलीढप्रत्यालीढयोस्तु पादद्वयमपि त्र्यश्रितसंस्थानं मण्डलस्थानतो जीवित्वं यद्वक्ष्यते 'अस्यैव दक्षिणं

1 न - विवर्तेत 2 द - कारेण 3 द सा चास्त्रच्छन्दिता 4 च - चार्युत्सन्दिता 5 द - स्वस्तिहस्तस्तु 6 च - करोऽन्यश्च प्रकीर्तितः न - करोऽन्यश्चापवर्तितः प - करोऽन्यः परिवर्तितः । 7 द - तलाग्रसंस्थितः पादो जनितायामुदाहृता
8 म - पञ्चतालान्तरं पादं प्रसार्य तलसंचरम् ।
द्वितीयं च नयेत्पार्श्वं सावस्कन्देति चोच्यते ॥
द - यश्च 9 ड - स्पन्दितां 10 न - पार्श्वेन ।

* अग्रत एव प्रासिद्धेति कीर्तिधरः ।

† जनिता चारी मुसलघाटिकाख्यवर्तनैवेति कीर्तिधरः ।

[1]तलसञ्चरपादाभ्यां [2]घूर्णमानोपसर्पणैः ।
[3]समोत्सरितमत्तल्ली व्यायामे समुदाहृता ॥ २७
उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च [4]हस्तैर्मत्तल्ल्युदाहृता ॥ २८
एता [5]भौम्यः स्मृताश्चार्यो [6]नियुद्धकरणाश्रयाः ।
[7]आकाशिकीनां चारीणां संप्रवक्ष्यामि लक्षणम् ॥ २९

---

पादं पञ्चतालान्' इत्यादि स्यन्दितायास्तु नैवमिति शेषः । स्थानस्य स्थितिप्रधानता चार्यास्तु गतिप्रधानतेत्यपि विशेषः ।

अथ समोत्सरितमत्तल्ली—तलसञ्चरजङ्घास्वस्तिकेनाभ्यन्तरे यदान्यस्य तदेव च द्वितीयतलसञ्चरं करोति ततो घूर्णमानयोस्तयोः उपसर्पणमित्यन्ये । समः अविकलः(अ) अवनं रक्षणं उत् तदर्थं सरितः गतिमान् मदनं मत् मदं तनोतीति मत्तत् तस्य लयो गमनं यस्यामिति समोत्सरितमत्तल्ली । सरितशब्दो रि गतौ विन्यस्यते सहेन समासे च मदनं मुत्क्षिपः लयनं लीः । सरिशब्दस्य प्रातिपदिकात् तृचि वा सरितशब्दः । सं आ उत् सरित- इत्यन्ये पठन्ति* । मदेन यो न विकलीभूतः रक्षार्थं चान्यतरः पलायते तस्य वै द्विधा गतिरिति मध्यमदविषयेयं चारी सम्पद्यते ।

अथ मत्तल्ली—पादाभ्यामिति भूमिश्लिष्टाशेषतालाख्यामिति जङ्घास्वस्तिकयोगेनार्धत्र्यश्रिभागाभ्यां घूर्णमानत्वेनापसर्पणाद्वा, अगाढमदविषया मत्तल्ली ।

नियुद्धकरणाश्रया इति नियुद्धेऽनादिसिद्धा एताः करणाङ्गहारेषु च ततो नाट्ये । स्मृता इत्यनेनोपवेदसंबन्धत्वेन वेदोऽत्र प्रमाणमिति दर्शितं, विनियोगादिक्मदर्शनं चेदं मन्तव्यम् ।

---

1 भम - आदर्शयोः प्रतिज्ञापाठानुसारेण मत्तल्ल्या अनन्तरमेव समोसरितमत्तल्लिलक्षणं वर्तते । यथा—
अञ्चितेन तु पादेन घूर्णमानोपसर्पणैः । उद्वेष्टितापविद्धत्वान्मत्तल्ली करयोर्मता ॥
उभयोः पादयोश्चापि घूर्णमानापसर्पणैः समोत्सारितमत्तल्ली व्यायामे सा विधीयते ॥
2 ड - घूर्णमानापसर्पणैः 3 प - समोसरित 4 छ - करैः 5 ड - भूम्यः म - भूमिगताः 6 ड - नियुक्त 7 म - शस्त्रमोक्षाङ्गहारेषु वक्ष्याम्याकाशगाः पुनः । न - आकाशिकानां

* 'ओसरिअ' इत्यपसरणार्थकप्राकृतरूपस्य संस्कृतीकरणमिति केचित् । तत्रापशब्ददोषं परिजिहीर्षुणाचार्येण भङ्गीभेदेन निरुक्तिरनुगृहीतेति मन्यामहे ।

कुञ्चितं पादमुत्क्षिप्य पुरतः संप्रसारयेत्[1] ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु[2] सा स्मृता ॥ ३०
[3]ऊरुभ्यां वलनं कृत्वा कुञ्चितं [4]पादमुद्धरेत् ।
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता[5] ॥ ३१
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत्[6] ।
[7]उद्घाट्टितेन पादेन पार्श्वक्रान्ता विधीयते[8] ॥ ३२
कुञ्चितं पादमुत्क्षिप्य [9]जानुस्तनसमं न्यसेत्[10] ।
द्वितीयं च [11]क्रमस्तब्धमूर्ध्वजानुः प्रकीर्तिता[12] ॥ ३३

अथातिक्रान्ता—उत्क्षिप्ता यस्य पार्ष्णिरिति (९-२७७) कुञ्चितं तद्द्वितीयगुल्फक्षेत्रे कृत्वा किंचित् पुरतः प्रसार्य प्रकृतिभेदेन चतुस्तालाद्यन्तरमुत्क्षिप्याग्रेण भूमौ निपात्यत इति गन्तव्यातिक्रमादतिक्रान्ता ।[1]

अथापक्रान्ता—ऊरू च स्तनोपलक्षितौ पूर्वं (बद्धां) कृत्वा ततः पादमुद्धृत्य पार्श्वे क्षिपेदित्यपक्रमणादपक्रान्ता[2] ।

अथ पार्श्वक्रान्ता—कुञ्चितं पादं स्वपार्श्वेनोपरि नीत्वा भूमौ पार्ष्ण्या पातयेदिति पूर्वं कुञ्चनाद्बलादेवोद्घाटितत्वं भवति, तस्य हि लक्षणं "स्थित्वा पादतलाग्रेण पार्ष्णीं भूमौ निपात्यत" इति (९-२६६) इयमेवपार्ष्णिचण्डघातेति प्रसिद्धा । अन्ये तु द्वितीयोरुक्षेत्रं यावदुत्क्षिप्योद्घाटितेन पातयेदित्याहुः ॥

अथोर्ध्वजानुः—क्रमस्तब्धमिति यथा तस्योत्क्षेपस्तथास्य स्तब्धतेत्यर्थः ।

1 म - संप्रयोजयेत् न - संप्रकारयेत् 2 म - पातयेच्चैकमति क्रान्तेति । 3 भ - ऊर्ध्वावलितकं द - ऊर्वोर्वलितकं म - ऊरुभ्यां वलितं 4 ड - तु समुद्धरेत् 5 म - प्रकीर्तिता 6 न - जानूर्ध्वं संप्रसारयेत् ड - पार्श्वोत्थानोद्गतिर्भवेत् द्र - पार्श्वोत्थानोत्थितं न्यसेत् म - पार्श्वेनोत्पतनं तथा 7 द - उद्वाहितेन 8 म - पार्श्वक्रान्ता भवेदियम् द - पार्श्वाक्रान्ताभिधीयते 9 ड - जानुं 10 म - तथा 11 ड - क्रमात्स्तब्धं 12 म - ऊर्ध्वजानुरसौ स्मृता ।

1 पार्श्वे एव पातयेदिति सैव पार्ष्णिचण्डघातेति च कीर्तिधरः ।
2 एषैव विक्षेपवलितमिति कीर्तिधरः ।

[1]कुञ्चितं पादमुत्क्षिप्य जा ध्र्वं संप्रसारयेत्[2] ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥ ३४

[3]पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु[4] ।
द्रुतं [5]निपातयेद्भूमौ चारी नूपुरपादिका ॥ ३५

कुञ्चितं पादमुत्क्षिप्य पार्श्वात्पार्श्वन्तु[6] दोलयेत् ।
[7]पातयेदञ्चितं चैव दोलपादा प्रकीर्तिता[8] ॥ ३६

[9]कुञ्चितं पादमुत्क्षिप्य [10]आक्षिप्य त्वञ्चितं न्यसेत् ।
जङ्घास्वस्तिकसंयुक्ता चाक्षिप्ता[11] नाम सा स्मृता[12] ॥ ३७

---

अथ सूची—जानूर्ध्वं जानुपर्यन्तां जङ्घां प्रसारयेत्, यदि वा जानुनोरूर्ध्वमूरुपर्यन्तां जङ्घां सकलां प्रसार्याग्रयोगेनापातयेदिति । सूच्याकारत्वात् सूची ॥

अथ नूपुरपादिका—पृष्ठत इति "पार्ष्णिर्यस्य स्थिता भूमौ" इत्यञ्चितं (९-२७५) कृत्वा तं पृष्ठतः स्फिक्पार्ष्णिश्लेषपर्यन्तं नीत्वा स्वपार्श्वेऽग्रतलेनाञ्चितं जङ्घां पातयेदिति । नूपुराणां झणज्झणिति शब्दजननात् स्वरितार्थत्वमनया भवति नूपुरयोजनं चेति तथोक्ता ।

अथ डोलपादा—उत्क्षिप्येति दक्षिणक्षेत्रान्तं स्वपार्श्वं निनीय ततोऽपि स्वपार्श्वं दोलयेदिति दोलाकारेण नयेत्, ततः स्वपार्श्वे पार्ष्ण्या निपातयेत् ।

अथाक्षिप्ता—आक्षिप्येति । अग्रतस्त्रितलोत्क्षेपादर्धमण्डलवत् पार्श्वान्तरं नीत्वा स्वस्तिकेन पार्ष्ण्या भुवि पातयेत् ।

---

1 भमयोः प्रतिज्ञापाठानुसारेण सूचीलक्षणं न दीयते । तत्स्थाने तूत्कीर्णा वक्ष्यते
2 छ - जानुमूर्ध्वं प्रसारयेत् 3 चछयोः नूपुरपादिकानन्तरमेव सूची लक्ष्यते द - पृष्ठतो ह्यञ्चितं म - पृष्ठतस्त्वञ्चितं 4 म - च 5 म - भूमिनिपातेन 6 ड - पार्श्वे पार्श्वे तु छ - पश्चात्पार्श्वं तु 7 म - अञ्चितेन द्वितीयेन डोलापादा तु सा भवेत् 8 ड - तु सा स्मृता 9 द - आदर्शे आक्षिप्तालक्षणं न दृश्यते प्रमादादेव
म - उत्क्षिप्य कुञ्चितं पादमञ्चितं तु निपातयेत् ।
अग्रस्वस्तिकसंयुक्ता साक्षिप्ता चार्युदाहृता ॥
10 ड - आक्षिप्यं चाञ्चितं 11 न - आक्षिप्ता छ - संयुक्तमाक्षिप्ता 12 ड - भवेत्

स्वस्तिकस्याग्रतः पादः कुञ्चितश्च[1] प्रसारितः ।
[2]निपतेदञ्चिताविद्धमाविद्धा नाम सा स्मृता ॥ ३८
[3]पादमाविद्धमावेष्ट्य[4] समुत्प्लुत्य[5] निपातयेत् ।
[6]परिवृत्य द्वितीयं च सोद्वृत्ता चाप्युदाहृता[7] ॥ ३९
पृष्ठतो वलितं पादं शिरोघृष्टं[8] प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥ ४०
[9]पृष्ठप्रसारितः पादो वलितोऽभ्यन्तरीकृतः ।
[10]पार्ष्णिप्रपतितश्चैव [11]ह्यलाता संप्रकीर्तिता ॥ ४१

अथाविद्धा—विश्लिष्टजङ्घस्यैव स्वस्तिकस्य संबन्धी कुञ्चितः पादः प्रसारितः तत आविद्धस्सन् स्वपार्श्वे द्वितीयपार्ष्णेः क्षेत्रे पार्ष्ण्या पातितः कार्यः ।

अथोद्वृत्ता—आविद्धमिति आविद्धचारीसंबन्धिनं कुञ्चितमित्यनेन आविद्धाशेषभूतेयमिति दर्शयति । आवेष्टनं द्वितीयोरुक्षेत्रगपार्ष्णित्वं । तमेव पादमुत्प्लुत्य भ्रमरकं कृत्वा पातयेत् । ततो द्वितीयमित्यूर्ध्वं वर्तमानत्वादुद्वृत्ता ।

अथ विद्युद्भ्रान्ता—पृष्ठत ऊरुमूलादिति केचित् । उपाध्यायस्तु पृष्ठतः पार्श्वात् पश्चाद्भागे वलितं कृत्वा शिरःसंश्लेषात् तद्द्वारेण सर्वत ऊर्ध्वाधःपार्श्वेषु मण्डलवद्भ्रमितं प्रसारयेदिति विद्युद्भ्रान्ता (इति) ।

अथालाता—पूर्वं पश्चाद्भागे प्रसारितस्ततो वलनेनाभ्यन्तरीकृतो द्वितीयोरुदेशादभिमुखतलं च नीतः, ततः स्वपार्श्वपार्ष्ण्या पातित इति अलातचक्राकृतिरलाता ।

1 म - कुञ्चितः स्यात् ज - कुञ्चितस्तु 2 ज - पातयेदञ्चिताविद्धं म - पातयेदञ्चितं चैव ह्याविद्धा चारिरिष्यते ।
3 म - पादमाविद्धकरणं परिवृत्य निवर्तितम् ।
प्रसारयेत्पृष्ठतश्च सोद्वृत्ता चारिरिष्यते ॥
4 द - आविश्य झ - पादमाविध्य चावेष्ट्य 5 ड - समुत्क्षिप्य 6 झ - परिवृत्तद्वितीयं तु 7 द - सा वित्ता समुदाहृता 8 न - शिरोद्घृष्टं द - शिरोत्स्पृष्टं 9 द - पृष्ठे म - पृष्ठप्रसारितः 10 च - पार्ष्णिप्रपतितः म - पार्ष्णिः प्रस्फुरिता चालातकाली परिकीर्तिता 11 ड - आलाता सा ।

[1]कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत्[2]।
कटीजानुविवर्ताच्च[3] भुजङ्गत्रासिता भवेत्॥ ४२
[4]अतिक्रान्तक्रमं कृत्वा [5]चोत्प्लुत्य विनिपातयेत्।
[6]जङ्घाञ्चिता परिक्षिप्ता सा ज्ञेया हरिणप्लुता[7]॥ ४३
[8]नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत्।
[9]क्षिप्रमाविद्धकरणं [10]दण्डपादा तु सा स्मृता॥ ४४

---

अथ भुजङ्गत्रासिता—द्वितीयोरुमूलक्षेत्रान्तं कुञ्चितमुत्क्षिप्य कटिजानुनिवर्तनेन नितम्बसम्मुखपार्ष्णित्र्यश्रमूरुं विवर्तयेत्। स्वपार्श्वगजानुकमुत्तानपादतलं कुर्यादिति पादोपान्तभुजगभयभावितगतिसादृश्याद्भुजङ्गत्रासिता।

अथ हरिणप्लुता—अतिक्रान्तचार्युक्तकुञ्चितं पादमुत्क्षिप्योत्प्लुत्य च तमेव पातयेत्, तदनन्तरं द्वितीया जङ्घा अञ्चितपादा सती पृष्ठभागे पश्चाद्देशे क्षिप्ता कार्येति मृगप्लुतितुल्या, "सण्धि होदु" इत्यादौ विदूषकादेर्दृश्यते।

अथ दण्डपादा—नूपुरपादोक्तं कुञ्चितं पादं द्वितीयपार्ष्णिगं कृत्वाग्रतः प्रसारयेत्; कथं, क्षिप्रं कृत्वा तथा आविद्धकरणं, आविद्धस्वदेहक्षेत्रसम्मुखीकृतजान्वग्रात् क्रिया यत्र। ऊरुजानुजङ्घस्य स्तब्धत्वेन दण्डाकारत्वाद्दण्डपादा।

---

1 म - उत्क्षिप्य कुञ्चितं पादं 2 म - निवर्तयेत् ङ - प्रवर्तयेत् भ - समम्रू निवर्तयेत् 3 ङ - विवर्तेन प - निवर्ताच्च म - विवर्तं च 4 भमयोः भुजङ्गत्रासितानन्तरं तत्पाठक्रमेणोत्कीर्णालक्षणं वर्तते। यथा—

कुञ्चितं पादमुत्क्षिप्य जानु चोर्ध्वं प्रसारयेत्।
पादपृष्ठेन चोत्कीर्णा सोत्कीर्णा चारिरिष्यते॥

द - अतिक्रान्तं क्रमं 5 छ - त्रिकं तु परिवर्तयेत् ङ - समुत्प्लुत्य 6 च - जङ्घाञ्चितो परि 7 भम - आदर्शयोः भ्रमर्यनन्तरमेव हरिणप्लुतालक्षणं वर्तते—

कृत्वा क्रान्तमपाक्रान्तमुत्प्लुत्य च निपातयेत्।
जङ्घाञ्चितपरिक्षिप्ता सा भवेद्धरिणप्लुता॥

8 भमयोः—उत्कीर्णालक्षणानन्तरमेव दण्डपादायाः। तत्र—स्थित्वा नूपुरपादेन पादमूर्ध्वं प्रसारयेत्। इति पूर्वार्धः। उत्तरार्धः समान एव 9 च - क्षिप्तं 10 ङ - दण्डपाता।

[1]अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्तयेत्।
द्वितीयपादभ्रमणात्तलेन भ्रमरी [2]स्मृता ॥ ४५
[3]आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः।
[4]धनुर्वज्रासिशस्त्राणां [5]प्रयोक्तव्या विमोक्षणे ॥ ४६
[6]अग्रगौ पृष्ठगौ वापि[7] ह्यनुगौ वापि[8] योगतः।
पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्ययोक्तृभिः॥ ४७

---

अथ भ्रमरी—अतिक्रान्तचार्युक्तं कुञ्चितं पादमुत्क्षिप्य भुजङ्गत्रासितवत् त्र्यश्रमूरुं विवर्त्य द्वितीयपादतलभ्रमणे त्रिकं परिवर्तयेदिति सर्वशरीरपरिवर्तनद्वारेण नेमिभ्रमणाद्भ्रमरी।

इतिकर्तव्यताशेषं विनियोगादिकं चासां दर्शयति—ललिताङ्गक्रियात्मिका इति धनुर्वज्रेत्यादि च। अथ कायशोभां निरूपयन् व्यापकविनियोगं चारीणां दर्शयति—अग्रगावित्यादि। इदं तात्पर्यं—इह कदाचिद्गतेः प्राधान्यं, कदाचिद्धस्तव्यापारस्य, कदाचिद्द्वयोः, आद्ये पक्षे पादविक्षेपस्यानुगौ तदनुसारिणौ तत्पश्चाद्भाविनौ च हस्तौ, द्वितीये हस्तव्यापारस्यानुसारेण पश्चाद्भावेन च पादौ, तृतीये द्वयोरपि। तुल्यकालताविनियोगपारतन्त्र्येण च प्रवृत्तिः। योग औचित्यम्। कायशोभायोजनायेह चाताध्यायाग्रे चार्यः प्रस्तुताः

---

1 म - आक्षिप्तकरणं द - आक्षिप्तचरणं 2 च - तलने भ्रमरी द - भ्रमरा
3 भमयोः श्लोकद्वयस्थाने—

एतास्त्वाकाशगाश्चार्यो ललिताश्चरणाश्रयाः।
धनुर्वज्रादिशस्त्राणां कर्तव्यास्तु विमोक्षणे ॥ (म)
(धनुश्शस्त्रप्रहरणे कर्तव्यास्तु विचक्षणैः)—(भ)
सर्वासामेव चारीणां पृष्ठतस्त्वग्रतोऽपि वा।
आकीर्णपतनं यस्याश्चारीविद्धं तु तद्भवेत् ॥
अग्रगौ समगौ वापि पुनश्चाप्यनुगौ तथा। (पुनश्चाप्यन्यथा हि तौ-भ)
पादयोर्नर्तकैर्हस्तौ प्रयोक्तव्यौ सुसंगतौ ॥ (चारीणां—भ)

4 च - धनुर्वज्रासिशस्त्राणां योक्तव्या शस्त्रमोक्षणे। 5 न - प्रयोक्तव्यास्तु द - प्रयोक्तव्या प्रयोक्तृभिः 6 द - अग्रगौ वापि समगावनुगौ चापि योगतः। 7 न - चापि 8 ज - चापि

यतः पादस्ततो हस्तो [1]यतो हस्तस्ततस्त्रिकम्।
पादस्य निर्गमं कृत्वा[2] तथोपाङ्गानि योजयेत्[3]॥ ४८

[4]पादचार्यां यथा पादो धरणीमेव गच्छति।
एवं हस्तश्चरित्वा तु कटीदेशं समाश्रयेत्॥ ४९

एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः[5]।
[6]स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे॥ ५०

वैष्णवं समपादं च वैशाखं मण्डलं तथा।
[7]प्रत्यालीढं तथालीढं स्थानान्येतानि षण्णृणाम्[8]॥५१

---

(१०-७३)इति तत्प्राधान्यं यदा भवति तदा प्रयोजना कीदृशी कार्येति स्पष्ट-यितुमाह—यतो हस्त इति। तथेति तेनैव प्रकारेण, उपाङ्गानि भ्रूनेत्रादीनि। ननु पादस्य क्रियायां यदि हस्तस्य गतिक्रिया तर्हि तद्विश्रान्तौ हस्तस्य को वृत्तान्त इत्याशङ्क्याह—पादचार्यामिति समाप्तायामिति शेषः। एवकारो ऽप्यसंभावनां निरस्यते। हस्त इति। अर्धचन्द्रो नृत्ते नाट्ये, नृत्ते तु पक्ष-प्रद्योतौ पक्षवञ्चितावपि पादस्य धरणीप्राप्तौ कीदृक् कायसन्निवेश इत्याशयेन स्थानकान्यभिधित्सुः पूर्वोपसंहारपूर्वकं प्रतिजानीते—एताश्चार्य इति। ललि-तत्वमङ्गस्य यत इयतीभिरेवेमा उत्तानत्वे तावानेव गतिप्रकार इति यावत्। स्थानानि भावे करणेऽधिकरणे वा व्युत्पत्त्या कायसन्निवेशाश्च या उच्यन्ते। सर्वशस्त्रविमोक्षण इति साधारणो विनियोग उक्तः। आसामपि चारीणां गतिरूपत्वं गतेश्च पूर्वं पश्चाद्भाविनी स्थितिरिति भावः। नृणामिति स्थानकानि

---

1 द - यतः पादस्ततः 2 ङ - ज्ञात्वा च - निर्गतिं कृत्वा छ - पादस्य तु गतिं ज्ञात्वा 3 न - ततो वाङ्गानि योजयेत्, ङ - तत्रोपाङ्गानि म - तत्राङ्गानि प्रयोजयेत्। 4 ङ - पादचार्यां द - पादचार्यो म - कृत्वा चारीं यथा पादो 5 द - क्रियाश्रयाः म - समाश्रयाः 6 ङ - स्थानानि संप्रवक्ष्यामि 7 ङ - प्रत्यालीढमथालीढं 8 म - नरॄणां स्थानकानि षट्।

[1]द्वौतालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोस्समुत्थितस्त्वेकस्त्र्यश्रः पक्षस्थितोऽपरः ॥ ५२
किंचिदञ्चितजङ्घं च[2] सौष्ठवाङ्गपुरस्कृतम्[3] ।
वैष्णवस्थानमेतद्धि विष्णुरत्राधिदैवतम् ॥ ५३
स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः[4] ।
[5]नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमैः ॥ ५४
[[6]चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा[7] ।
[8]धैर्योदात्ताङ्गलीलासु [9]तथा क्रोधे प्रयोजयेत् ॥ ५५

---

तु निरूपयिष्यन्त इत्यर्थः । पक्षस्थित इति पार्श्वाभिमुखाङ्गुलिः । त्र्यश्र इति किंचिदग्राभिमुख्यमस्पृशत् । अञ्चिता कुटिला जानुनमनाज्जङ्घा यत्र । सौष्ठवे यदङ्गं वक्ष्यते तेन पुरस्कृतं पूजितं, सौष्ठव अप्रधाने वा अङ्गपुरस्कृतं प्रधानम् । हि यस्मात् विष्णुरत्राधिदैवतम् तस्माद्वैष्णवम् । तेन तस्य तादृशस्य वाऽस्त्रीप्रधानस्य सूत्रधारादेः प्रयोगे स्थानकमिदम् । एवमुत्तरत्र मन्तव्यम् । एतदे-

---

1 भमयोर्वैष्णवलक्षणं तु
स्वभावसंस्थितस्त्वेकस्त्र्यश्रः पक्षस्थितोऽपरः ।
किंचित्तथाञ्चिता जङ्घा समुन्नतमुरस्तथा ॥
हनुशीर्षे समे चैव कर्णाद्द्व्यङ्गुले स्थिते ।
उरःस्थानाच्च चिबुकं चतुरङ्गुलसंस्थितम् ॥
कटकास्त्रिपताको वा दक्षिणो नाभिसंस्थितः ।
त्रिपताकोऽर्धचन्द्रो वा वामः कटितटाश्रितः ॥
पादयोरन्तरं यत्तत्तलद्वयमितं भवेत् ।
ज्ञेयं तद्वैष्णवं स्थानं कार्यमुत्तममध्ययोः ॥ (विष्णुरत्राधिदैवतम्—मं)
स्थानेनानेन कर्तव्यः सल्लापस्तु स्वभावजः ।
शेषं कार्यमनेनैव यद्वक्ष्येन कर्मणा ॥

2 ड - जङ्घोऽसौ ढ - जङ्घश्च 3 न - समन्वितम् ढड - समन्वितः 4 नं - प्रभावतः 5 न - नानाकार्यान्तरोपेतो 6 नंद - आदर्शयोः "चक्रस्य" आदि "योजितम्" इति पर्यन्तो भागो न वर्तते । 7 च - धनुषि स्थिते 8 जझयोस्त्रयः श्लोका न सन्ति ड - धैर्यदानाङ्ग ढ - धैर्यादानाङ्ग 9 च - तथोद्धाद्यः ।

इदमेव विपर्यस्तं प्रणयक्रोध[1] इष्यते।
उपालम्भकृते चैव प्रणयोद्वेगयोस्तथा[2] ॥ ५६
शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि।
दैन्ये [3]चपलतायां च गर्वाभीष्टेषु शक्तिषु॥ ५७
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम्।]
[4]समपादे समौ पादौ तालमात्रान्तरस्थितौ॥ ५८
स्वभावसौष्ठवोपेतौ[5] ब्रह्मा चात्राधिदैवतम्।
अनेन कार्यं [6]स्थानेन [7]विप्रमङ्गलधारणम्[8] ॥ ५९
[9]रूपणं पक्षिणां चैव [10]वरं कौतुकमेव च।
[11]खस्थानां स्यन्दनस्थानां विमानस्थायिनामपि॥ ६०
लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत्[12]।
[13]तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत्॥ ६१

---

वाह—स्थानेनानेनेति, स्वभावजः अनावेशितः। (विप्रमङ्गलेति) विप्रैः क्रियमाणं यन्मङ्गलाशीर्वचनादि तस्य धारणं प्रतीप्सन्। खस्थादीनामिदं स्थानकम्। लिङ्गस्थाः शैवाद्याः व्रतस्था ऊर्ध्वकायादिप्रज्ञाङ्गाः (?)। निषण्णावचलौ विश्रान्तौ तु (ऊरू) यत्र सूच्यपेक्षया। कियत्याकाशदेश इत्याह—तालास्त्रयोऽर्धता-

---

1 च - प्रणयः कोपः 2 ङ - प्रकर्षाधिबलस्तथा 3 ढ - चपलतायोगे 4 भमयोः—पद्भ्यां तालान्तरस्थाभ्यां समपादं प्रकीर्तितम् च - समपादसमौ 5 म - सौष्ठवोपेतं 6 म - कार्या 7 द - क्षिप्र 8 म - सत्क्रिया ङ - कारणम् 9 म - कर्तव्यं स्यादनेनैव वरकौतुकमङ्गलम् 10 ङ - परं झ - पर 11 प - स्वस्थानां 12 म - समपादं प्रयोजयेत् 13 छ - तालाश्चत(स्त्र?)योऽर्धताले च निषण्णोरु प्रकल्पयेत्

म - द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत्।
तालास्त्रयोऽर्धतालश्च निषण्णोरु प्रवर्तयेत् (निषण्णार्धैस्तथैव च—भ)
जङ्घे चैवाश्रिते यत्र पादौ पक्षस्थितौ पुनः।

तालांस्त्रीनर्धतालांश्च[1] निषण्णोरुं[2] प्रकल्पयेत्।
[3]त्र्यश्रौ पक्षस्थितौ चैव [4]तत्र पादौ प्रयोजयेत्॥ ६२
वैशाखस्थानमेतद्धि[5] स्कन्दश्चात्राधिदैवतम्[6]।
स्थानेनानेन [7]कर्तव्यमश्वानां वाहनं बुधैः॥ ६३
[8]व्यायामो निर्गमश्चैव स्थूलपक्षिनिरूपणम्[9]।
[10]शरासनसमुत्कर्षे व्यायामकृतमेव च॥ ६४
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः।
[11]ऐन्द्रे तु मण्डले पादौ [12]चतुस्तालान्तरस्थितौ॥ ६५
[13]त्र्यश्रौ पक्षस्थितौ चैव कटिजानू समौ तथा[14]।
[15]धनुर्वज्राणि शस्त्राणि मण्डलेन प्रयोजयेत्॥ ६६
वाहनं कुञ्जराणां तु[16] स्थूलपक्षिनिरूपणम्[17]।

---

छायेति सार्धतालत्रयादधो नभोदेश इत्यर्थः। विशाखः स्कन्दः। व्याप्याक्रानामेव युद्धादौ निर्गमनात् तेषामेव वेगादानपार्ष्णिचोदनाक्रमेण। ऐन्द्रे त्विति शेषं द्योतयन् सार्धतालद्वयान्तर्नभोदेशनिषण्णोरुत्वमत्रापि सूचयन्निति। मण्डलेश्वरविषयत्वान्मण्डलम्। अश्वानां वाहने वैशाखं, इदं तु हस्तिनां तेभ्यस्स्थूलानामिति प्रक्रमात् [स्थूलतमात्] पक्षिणोऽत्र गरुडादयो मन्तव्याः।

---

1 द - तालं च 2 प - निषण्णोरु
3 झ - त्र्यश्रौ पक्षस्थितौ चैव कटिजानुसमौ तथा।
धनर्वज्रादिशस्त्राणां तत्र पादौ प्रयोजयेत्॥
4 द - पादावत्र 5 म - वैशाखं नाम तत्स्थानं 6 म - तस्याधिदैवतम् 7 म - कर्तव्यं हयानां 8 ङ - व्यायामनिर्गमं द - व्यायामनिर्गमश्चैव 9 म - प्रयोगो धनुषस्तथा 10 दजझनपभम - आदर्शेष्वयं श्लोको न वर्तते ङ - शराणां च समुत्क्षेपं 11 झ - ऐन्द्रन्तु मण्डलं 12 द - चतुस्तालान्तरं 13 म - कटी जानुसमा चैव करौ पक्षस्थितौ तथा 14 द - जानुसमास्थिता 15 ङ - धनुर्वज्रादि म - धनुर्वज्रं प्रहरणं मण्डलेन तु योजयेत् 16 म - च 17 म - पक्षतिरूपणम् ङ - पक्षानिरूपणम्।

अस्यैव दक्षिणं पादं पञ्चतालान्[1] प्रसार्य तु ॥ ६७
[2]आलीढं स्थानकं कुर्याद्रुद्रश्चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन [3]वीररौद्रकृतं तु यत् ॥ ६८
उत्तरोत्तरसंजल्पो रोषामर्षकृतश्च यः[4] ।
मल्लानां चैव [5]संफेटः शत्रूणां च निरूपणम् ॥ ६९
[6]तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ।
[7]कुञ्चितं दक्षिणं कृत्वा वामपादं प्रसार्य च ॥ ७०
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम्[8] ।
आलीढसंहितं [9]शस्त्रं प्रत्यालीढेन मोक्षयेत्[10] ॥ ७१
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः[11] ।
[12]न्यायाश्चैवात्र विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥ ७२
भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः[13] ।

---

अस्यैवेति निषण्णोरुत्वं तथा त्र्यश्रत्वं द्वयोः सूचयति । आसमन्ताल्लीढा स्पृष्टा भूमिर्येनेत्यालीढम् । संफेटः सङ्घर्षः ।

आलीढपरिवर्त इतीयदेव लक्षणं पूर्वमुक्तं त्वितिकर्तव्यतास्पष्टकरणार्थम् । कुञ्चितमिति प्रसारणविपरीतं भूय उत्तानाकुञ्चितोऽत्र पादः । ननु प्रयोक्तृभिः शस्त्रविमोक्षः कार्य इत्युक्तम् । तस्य प्रयोक्तृभिः न्यायानामित्यादि

---

1 द - तालं 2 भ - आलीढस्थानमेतत्तु विज्ञेयं नाट्यकर्मणि 3 म - रौद्रवीर 4 म - समुद्भवः न - कृताश्रयः 5 न - संस्फोटः 6 न - तथाविद्रवणं ज - तथा विद्रावणं म - तथा विद्रवणं चैव शस्त्राणां च विमोक्षणम् 7 जझयोः— अञ्चितं प - वामं पादं 8 म - परिवर्तं यः प्रत्यालीढं तु तत् स्मृतम् द - प्रत्यालीढ इति स्मृतः 9 न - आलीढे सन्धितं म - आलीढसन्धितं ढ - आलीढसहितं 10 म - मोचयेत् 11 म - कार्यो व्यायामयोगतः 12 च - न्यायाश्चैव प्रयोक्तव्या ढ - न्यायाश्चैव हि 13 द - कौशिकः म - वार्षगण्यः सकैशिकः ।

भारते तु[1] कटिच्छेद्यं[2] [3]पादच्छेद्यं तु सात्वते ॥ ७३
[4]वक्षसो वार्षगण्ये तु शिरश्छेद्यं तु कैशिके ।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः[5] ॥ ७४
[6]प्रविचाराः [7]प्रयोक्तव्या नानाशस्त्रविमोक्षणे ।
[8]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ॥ ७५
[9]यस्माद्युद्धानि वर्तन्ते तस्मान्न्यायाः प्रवर्तिताः ।
वामहस्ते विनिक्षिप्य[10] खेटकं दक्षिणेन च ॥ ७६
शस्त्रमादाय हस्तेन प्रविचारमथाचरेत्[11] ।
[12]प्रसार्य च करौ सम्यक् पुनराक्षिप्य चैव हि[13] ॥ ७७
खेटकं भ्रामयेत्पश्चा[14]त्पार्श्वात्पार्श्वमथापि च ।
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ॥ ७८
[15]कपोलस्यान्तरे वापि[16] शस्त्रस्योद्घट्टनं तथा[17] ।

न्यायामाच्चेति नामानुसारादेषां वृत्तिविभागे परिशेषता। आरभट्या वार्षगण्यः। कटिच्छेद्यमिति भावे कृत्यं। कटीस्थानादिषु परस्य हन्तव्येष्वतिक्रमेण चत्वारः। एभिरिति एभिर्न्यायैरुपलक्षिताः शस्त्रमोक्षणविषयाः प्रविचाराः प्रकृष्टाः विचित्रा गतिविशेषाः परिश्रान्तिशब्दाश्चारीन्यायामखण्डमण्डलात्मकाः कार्याः। न्यायशब्दस्यार्थं दर्शयति न्यायेनाङ्गौचित्येन यान्यङ्गोदाहर-

1 छ - च   2 ढ - कटिच्छेदं   3 ड पादे   4 म - वार्षगण्ये क्षुरश्छेद्यं 5 द - न्याये नानाचारीसमन्विते ।   6 म - प्रविचारः   ड - प्रविचार्य   न - प्रविचार   7 म - प्रयोक्तव्यः सर्वं   ड - प्रयोक्तव्यो   न - प्रयोक्तव्यो नानाशस्त्रप्रमोक्षणे   8 म - न्याय्याश्रितैरङ्गहारैर्न्याय्याच्चैव   ड - न्यायंश्रितैः   9 न - तस्मात् म - न्याय्याः प्रकीर्तिता   ड - वामहस्तेन

10द - वामहस्ते विनिक्षिप्य खेटकं शस्त्रफेटकम् ।
दक्षिणे च करे शस्त्रं प्रविचारमथाचरेत् ॥

11 म - प्रविचारं प्रयोजयेत्   न - प्रविचारमथारभेत्   12 द - करौ प्रसारितौ कृत्वा   झ - प्रचार्य   13 म - आक्षिप्य तदनन्तरम्   14 प - वामपार्श्वं   15 च - कपोलां   16 ड चापि   म - चैव   17 म - भवेत् ।

[1]पुनश्च [2]खड्गहस्तेन ललितोद्वेष्टितेन च ॥ ७९

खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ।

एवं [3]विचारः कर्तव्यो भारते शस्त्रमोक्षणे ॥ ८०

[4]सात्वते च[5] प्रवक्ष्यामि प्रविचारं यथाविधि ।

[6]स एवं प्रविचारस्तु शस्त्रखेटकयोः स्मृतः ॥ ८१

केवलं पृष्ठतः [7]शस्त्रं [8]कर्तव्यं खलु सात्वते ।

गतिश्च वार्षगण्येऽपि[9] सात्वतेन क्रमेण तु[10] ॥ ८२

[11]शस्त्रखेटकयोश्चापि[12] भ्रमणं संविधीयते[13] ।

[14]शिरःपरिगमस्तद्वच्छस्त्रस्येह भवेत्तथा[15] ॥ ८३

उरस्युद्वेष्टनं कार्यं शस्त्रस्यांसेऽथवा पुनः[16] ।

भारते प्रविचारो यः[17] कर्तव्यस्स तु[18] कैशिके ॥ ८४

[19]विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।

---

णादि न्यायादेव च परबन्धनस्वभावितामिरूपात् प्रवर्तितानि तैः यत एतयोः क्रिया अतो न्यायाख्याः । अथापि चेत्यनन्तरं चेत्यर्थः । परिवेष्टनेन गमनं नयनं परिगमः । मणिबन्धोद्वेष्टनेन शस्त्रस्योद्वेष्टनं उद्वेल्लितेनेत्युद्वेष्टितेन । पृष्ठत इति कायस्य पश्चाद्भागे । युद्धप्रसङ्गेन सर्वं प्रयोज्यमापततीत्याशङ्क्याह—

---

1 भ - तथा शृङ्गारहस्तेन 2 द - शृङ्ग झ - खण्ड 3 ड - प्रचारः भ - कार्यः प्रविचारो 4 भ - सात्त्वते तु प्रविचारं व्याख्यास्याम्यनुपूर्वशः 5 डन - तु 6 भ - य एवं द - एवमेव न - स एव 7 ड - खड्ग 8 भ - नेतव्यं तत्र 9 द - वार्षगण्ये हि 10 द - च 11 च - खड्ग 12 दभ - कार्यं 13 भ - द्विजसत्तमाः झ - संनिधीयते 14 ड - शिरः परिगमादंसेस्तस्य शस्त्रस्य केवलम् 15 भ - भवेदिह 16 न - अंशेन चात्मनः ड - अङ्गेन वा पुनः द - शस्त्रस्यादिषु वा पुनः 17 ड - चारोऽयं 18 द - हि

19 भमयोः सार्धश्लोकस्य पाठान्तरम्—

केवलं विभ्रमय्यास्त्रं शिरोदेशे प्रयोजयेत् ।
एवमेते प्रविचाराः प्रयोज्यास्त्वङ्गलीलया ।
शस्त्रे धनुषि वज्रे च नानाविधविमोक्षणे ।

प्रविचाराः प्रयोक्तव्या[1] ह्येवमेतेऽङ्गलीलया[2] ॥ ८५
[3]धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं [4]नापि च च्छेद्यं न चापि रुधिरस्रुतिः[5] ॥ ८६
रङ्गे [6]प्रहरणे कार्यो[7] न चापि व्यक्तघातनम्[8] ।
संज्ञामात्रेण कर्तव्यं[9] शस्त्राणां मोक्षणं बुधैः ॥ ८७
[10]अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।
[11]अङ्गसौष्ठवसम्पन्नैरङ्गहारैर्विभूषितम् ॥ ८८
व्यायामं कारयेत्सम्यग्लयतालसमन्वितम्[12] ।
[13]सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामवेदिभिः[14] ॥ ८९
[15]सौष्ठवं लक्षणं [16]प्रोक्तं वर्तनाक्रमयोजितम् ।
शोभा सर्वैव नित्यं हि[17] सौष्ठवं समुपाश्रिता ॥ ९०
न हि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः[18] ।

---

न भेद्यमिति भावे प्रत्ययः । संज्ञामात्रेणेति यथा परो जानाति युध्येते इमाविति एवं त्विमावित्यादिविषयं निधाय नाटकादौ संज्ञामात्रेणापि तेन नानुचितमिति दर्शयति । अथवेति व्यवस्थितविकल्पः । अङ्गसौष्ठवं यदुक्तं तस्य सिद्ध्ये परिकरमाह व्यायाममिति । व्यायमोऽङ्गशिक्षाभ्यामङ्गयोग्यकालमेव

---

1 ङ - च कर्तव्याः द - प्रकर्तव्या 2 द - अङ्गनालये 3 ङ - धनुर्वज्रादि 4 म - नैव ङ - नापि तु 5 नमद - स्रवः 6 म - प्रहरणैः 7 न - कार्यं म - कार्ये 8 न - पातनम् 9 द - योक्तव्यं म - मात्रे प्रयोक्तव्यं 10 न - अथ त्वभिनयोपेतं ङ - अथवाभिनयोपेतं 11 म - अङ्गसौष्ठवसंयुक्तं ङ - अङ्गैः सौष्ठवसंयुक्तैः 12 ङ - समन्वितः 13 ङ - सौष्ठवे तु न - सौष्ठवेऽतिप्रयत्नस्तु म - प्रयत्नः सौष्ठवे कार्यो बुधैर्व्यायामयोगतः 14 ङ - सेविभिः 15 अयं श्लोकः जझढढनपभादिष्वादर्शेषु नास्ति चम - सौष्ठवे 16 च - प्रोक्तवर्त्मना 17 म - च 18 म - नाटके शोभते नरः ।

अचञ्चलमकुब्जं[1] च सन्नगात्रं तथैव च[2] ॥ ९१
[3]नात्युच्चं चलपादं च [4]सौष्ठवाङ्गं प्रयोजयेत् ।
[5]कटी कर्णसमा यत्र कूर्परांसशिरस्तथा ॥ ९२
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ।
[6]अत्र नित्यं प्रयत्नो हि विधेयो मध्यमोत्तमैः ॥ ९३
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ।
[7]कटीनाभिचरौ हस्तौ वक्षश्चैव समुन्नतम् ॥ ९४
[8]वैष्णवं स्थानमित्यङ्गं[9] चतुरश्रमुदाहृतम् ।
[10]परिमार्जनमादानं [11]सन्धानं मोक्षणं तथा ॥ ९५
[12]धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ।
[13]प्रमार्जनं[14] परामर्श आदानं ग्रहणक्रिया ॥ ९६

---

एवं द्रुतादेः चच्चत्पुटादेश्चानुसन्धेरङ्गमात्मीकृतन्तालाख्यं पठ्यते । सन्नं स्वविश्रान्तिपरिणतं गात्रं यस्य । कूर्परांसशिर इति प्राण्यङ्गत्वादेकवद्भावः । तथेति साम्येनेत्यर्थः । अधमानामत्र स्वातन्त्र्यं दर्शयति मध्यमोत्तमैरिति । सौष्ठवं यदर्थं तत्सर्वसामान्यभूतं चातुरश्रचमाह—कटिनाभिचराविति क्रमेण यौगपद्येन च । खड्गयुद्धे यथान्यायास्तथा धनुर्युद्धेऽपि कर्माणि सन्तीति दर्शयति । प्रमार्जनमिति प्रथमं धनुषो मार्जनं ततोऽपि बाणेन ग्रहस्ततोऽपि शरस्य सन्धानं ततो मोक्षः । व्यायामे प्रस्तुते तदुपयोगि सौष्ठवं तत्प्रसङ्गागतं च धनुः-

---

1 द - आकुञ्जं  2 ङ - अथापि च  3 न - नात्युच्चं न निपातं च  प - नात्युच्चतलपातं  ढ - नात्युच्चं च निपातं च  4 म - सोष्ठवेऽङ्गं  झ - सौष्ठवे तं  5 म - कटीकर्णसमौ यत्र कूर्परावंसके शिरः ।  6 च - आदर्श एव दृश्यते  7 म - कटिवक्षश्चरौ डद - कटिनाभिचरौ 8 म - वैष्णवं च तथा स्थानमङ्गैस्तु चतरं भवेत् ।  9 च - इत्यङ्गचतुरश्रं  10 द - परिमार्जनमातानं  11 ङ - बन्धनं  12 म - धनुषः संविधातव्यं  ङ - धनुषस्तु प्रकर्तव्यं  13 अयं श्लोकः कचदभ - आदर्शेषु न वर्तते  14 ङ - संमार्जनं ।

[1]संधानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ।
तैलाभ्यक्तेन गात्रेण [2]यवागूमृदितेन च ॥ ९७
व्यायामं कारयेद्धीमान् भित्तावाकाशिके तथा[3] ।
[4]योग्यायां मातृका भित्तिस्तस्माद्भित्तिं[5] समाश्रयेत् ॥ ९८
[6]भित्तौ प्रसारिताङ्गं तु व्यायामं कारयेन्नरम् ।
[7]बलार्थं च निषेवेत नस्यं वस्तिविधिं[8] तथा ॥ ९९
[9]स्निग्धान्यन्नानि च तथा रसकं पानकं तथा[10] ।
[11]आहाराधिष्ठिताः प्राणाः [12]प्राणे योग्याः प्रतिष्ठिताः ॥
तस्माद्योग्या [13]प्रसिद्ध्यर्थमाहारे यत्नवान् भवेत् ।
अशुद्धकायं[14] प्रक्लान्तमतीव क्षुत्पिपासितम् ॥ १०१

कर्माभिधाय प्रयोगमेव व्यायाममाह—तैलाभ्यक्तेनेति । तैलमत्र तिलतैलम् । यवागूर्यवान्नम् । योगाय विद्याविशेषसंबन्धाय प्रभवतीति योग्या गुणनिका । तस्य वस्तिविधिश्च तैलघृतादिभिः यथादेशकालप्रकृतीति मन्तव्यमायुर्वेदात् । रसकमिति मांसरसं सेवेतेति संबन्धः । पानकानि च स्निग्धानीति संबन्धः । योग्या वा किमनेनेत्याशङ्क्याह—आहाराधिष्ठिता इति । अशुद्धकायमित्यनेन वमनविरेचनविशुद्धगात्रस्य व्यायामेऽधिकार इति दर्शयति । अशुद्धगात्रत्वं

1 झ - बन्धनं 2 ङ - यवाश्चाखेदितेन ढ - यवाग्वास्वेदितेन म - यवागूत्स्वेदितेन न - यवागूखदितेन 3 - म - आकाशिकेऽपि वा ङ - हितावाकाशिके तथा द - आकाशके तथा 4 ङ-योग्यतायां य - योग्याय 5 द - भित्यां 6 छ - भित्तिप्रसारिताङ्गस्तु म - भित्यामृजुकृताङ्गस्तु व्यायामे शोभते नरः ङ - भित्तौ प्रसारिताङ्गस्तु 7 ङ - कारयेद्बुधः द - कारयेन्नरम् 8 म - बलार्थस्तु 9 न - वार्तिविधिं ङ - च त्रिविधं द - वस्तिविधिस्तथा 10 न - स्निग्धान्यन्नान्यभीष्टानि द - स्निग्धान्यन्यान्यश्नानि 6 दम - पानकानि च 11 ढ - आहारे 12 - न - प्राणयोग्याश्च 13 द - प्रतिष्ठार्थं 14 द - प्रश्रान्तं.

[1]अतिपीतं तथा भुक्तं [2]व्यायामं नैव कारयेत्।
अचलैर्मधुरैर्गात्रैश्चतुरश्रेण वक्षसा ॥ १०२
व्यायामं कारयेद्धीमान्नरमङ्गक्रियार्थिनम्[3] ।
एवं व्यायामसंयोगे[4]कार्यश्चारीकृतो[5] विधिः ॥ १०३
अत ऊर्ध्वं[6] प्रवक्ष्यामि मण्डलानां विकल्पनम्[7] ॥

इति [8]भारतीये नाट्यशास्त्रे
चरीविधानो[9] नाम
[10]दशमोऽध्यायः ॥

---

चाजीर्णयोगेऽपि । प्रक्लान्तमिति अध्वश्रमादिना । अचलैरिति यत्र यत्र क्रियायां योज्यते तत्र तत्रैव प्राप्तपरिणतिभिरित्यर्थः । मधुरैरिति ललितैः । अङ्गक्रिया अङ्गसिद्धिः । एवमित्युपसंहरन्नध्यायान्तरमासूत्रयति । (विकल्पनं) विचित्रतया कल्यन्ते येन प्रकारेण तं वक्ष्यामीति सूत्रयन्नङ्गानुसारायात-चारीपरम्परात्मनां मण्डलात्मनामसङ्ख्येयत्वं सूत्रयन्नुदाहरणमात्रार्थमध्या-यान्तरमिति निरूपयतीति शिवम् ।

इत्थं दशममध्यायं व्याचष्टे च समासतः ।
शिवस्मृतिकृतार्थोऽपि परार्थं [1]दुःखलात्मजः ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
[2]नाट्यवेदविवृतावभिनवभारत्यां चारी-
विकल्पो नाम दशमोऽध्यायः ॥
॥ श्रीः ॥

---

1 न - अति भुक्तं तथा पीतं 2 ड - व्यायामे 3 ड - क्रियात्मकम् 4 म - संपत्तौ 5 म - गतो 6 म - परं 7 भ - खण्डमण्डललक्षणम् 8 द श्रीभारतीये 9 ड - चारीविधानं द - चारीविकल्पनं नामैकादशोऽध्यायः (श्लो—९२— आदितः १८२२) भम - अध्यायो दशमः 10 - (जादि- बान्तेष्वादर्शेषु "एकादशोऽध्यायः".

1 दुस्सलात्मजः 2 नाट्यवेदवृत्तौ.

श्रीः

# नाट्यशास्त्रम्

## एकादशोऽध्यायः

एताश्चार्यो [1]मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह[2] मण्डलानि निबोधत ॥ १
अतिक्रान्तं विचित्रं च तथा ललितसंचरम् ।
सूचीविद्धं दण्डपादं विहृतालातके तथा[3] ॥ २
वामविद्धं[4] सललितं क्रान्तं चाकाशगानि तु[5] ।
[[6]मण्डलानि द्विजश्रेष्ठा भूमिगानि निबोधत ॥] ३
[7]भ्रमरास्कन्दिते ख्यातामावर्तं च [8]ततः परम् ।
[9]समोत्सरितमप्याहुरेडकाक्रीडितं[10] तथा ॥ ४

---

गतिमण्डलवैचित्र्यमासूत्रयति या सदा ।
तथा [1]नेदिष्ठनिर्मात्रीं शक्तिं वन्दे महेशितुः ॥
स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽप्यध्यायो मया यतः ।
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत्प्रसङ्गतः ॥

शस्त्रमोक्षणे मण्डलानीति संबन्धः । इहेत्यस्मिन्नध्याये श्रुते श्रुततद्दिशान्यान्यपि निबोधय, एषामियत् सामान्यलक्षणं चारीसंयोगजानीति । आका-

---

1 दम - यथान्यायं मयोक्ताः 2 द संयोजनानीह 3 म - विह्वतालातसंश्रिते
4 ड - वामबन्धं म - वावबन्धं च 5 न - आकाशगानिह ड - च 6 भमयोरेव
7 न - भ्रमरास्पन्दिते 8 ड - तथा 9 च - समोसरित ड - समाक्रन्दित
न - समोत्सारितामत्याहुः 10 ड - एलकाक्रीडितं ढ - एलकाक्रीडिते ।

---

1 नेदिष्ठनिर्मात्रीं ।

अड्डितं शकटास्यं च तथाध्यर्धकमेव च[1]।
[2]पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः॥ ५
[3]एतान्यपि दशोक्तानि भूमिगानीह नामतः।
[4]अतःपरं प्रवक्ष्यामि लक्षणानि यथाक्रमम्॥ ६
[5]आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत्।
[6]अलातं वामकं चैव [7]पार्श्वक्रान्तं च दक्षिणम्॥ ७
[*सूचीवामं पुनश्चैव पार्श्वक्रान्तं च दक्षिणम्।
[8]सूचीं वामक्रमं दद्यादपक्रान्तं च दक्षिणम्॥] ८
सूचीं वामं पुनश्चैव त्रिकं च परिवर्तयेत्।
तथा दक्षिणमुद्वृत्तमलातं चैव वामकम्॥ ९
परिच्छिन्नं तु[9] कर्तव्यं बाह्यभ्रमरकेण हि[10]।
अतिक्रान्तं पुनर्वामं [11]दण्डपादं च दक्षिणम्॥ १०
विज्ञेयमेतद्व्यायामे त्वतिक्रान्तं[12] तु मण्डलम्।

---

शगतनां युद्धपरिक्रमेषु प्राधान्यात्पूर्वमुद्देशः आकाशभूचारीप्राचुर्यान्मण्डलेषु तथात्वम्। आद्यमिति दक्षिणम्। उद्वाहितमिति लक्षणैकदेशेन शकटास्यां सूचयति। एवमन्यत्र। त्रिकन्त्विति भ्रमरीमाह। बाह्यभ्रमरकं वामपादेन

---

1 द - अध्यर्धमिति स्मृतम् म - अध्यर्धिकमेव च 2 नम - पृष्ठकुट्टं 3 ड - भूमिका मण्डलाह्येते (न्येते?) लक्षणं च निबोधत 4 भमयोरेव 5 ड - आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत् 6 द - आत्मानं 7 म - पार्श्वक्रान्तं तु 8 छ - सूचीवामपदं 9 छ - च 10 न - तु 11 न - मन्दपादं 12 न - व्यायामेष्वतिक्रान्तं झ - व्यतिक्रान्तं।

* न प्रक्षिप्तोऽयं श्लोकः किं तु मतान्तरानुसार्येव। मण्डलगतानां चारीणामभ्यावृत्तौ न्यूनाधिकता न दोषाय।

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम्[1] ॥ ११
[2]आस्पन्दितं तु[3] वामेन [4]पार्श्वक्रान्तं च दक्षिणम् ।
[5]वामं सूचीपदं दद्यादपक्रान्तं च दक्षिणम् ॥ १२
भुजङ्गत्रासितं[6] वाममतिक्रान्तं च दक्षिणम् ।
[7]उद्वृत्तं दक्षिणं चैव ह्यलातं चैव वामकम् ॥ १३
[8]पार्श्वक्रान्तं पुनः सव्यं सूची वामक्रमं तथा ।
विक्षेपो दक्षिणस्य[9] स्यादपक्रान्तश्च वामकः[10] ॥ १४
[बाह्यभ्रमरकं चैव विक्षेपं चैव योजयेत् । ]*
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ॥ १५
कृत्वोर्ध्वजानु[11] चरणमाद्यं सूचीं[12] प्रयोजयेत् ।
[13]अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् ॥ १६
[14]वामं सूचीं पुनर्दद्यात्त्रिकं च परिवर्तयेत् ।
[15]पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् ॥ १७
[16]सूचीमाद्यक्रमं [17]कृत्वा ह्यपक्रान्तं च वामकम् ।
[18]पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् ॥ १८

---

1 ढ - निकुट्टकम् 2 जादि मान्तेषु आस्कन्दितं (आस्पन्दितस्थाने) न - आस्कन्दिकं 3 म - च 4 म - पार्श्वाक्रान्तं 5 छभम - एव वर्तते 6 ढ - सव्यं 7 म - उद्वृत्तो दक्षिणश्चैव अलातश्चैव वामकः 8 म - पार्श्वाक्रान्तं 9 ड - दाक्षिणश्च 10 म - वामतः 11 च - वाम 12 म - सूचीमाद्यं 13 म - अपक्रान्तं पुनर्वाममाद्यं पार्श्वगतं तथा ड - अपक्रान्तं पुनर्वाममाद्यं 14 ड - वामसूचीं ढ - वामः सूचीं 15 म - पार्श्वाक्रान्तः पुनश्चाद्यस्त्वभिक्रान्तश्च वामकः 16 न - आदर्शे श्लोकार्धो न वर्तते 17 म - दद्यादतिक्रान्तं 18 म - पार्श्वक्रान्तं

* श्लोकार्धोऽयं प्रक्षिप्तः, चछदभ - आदर्शेषु न वर्तते । शास्त्रकारैरपि वामचरणस्य भ्रमरीविक्षेपौ नात्र सूचितौ ।

[1]परिच्छिन्नं च कर्तव्यं [2]बाह्यभ्रमरकेण च[3] ।
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरे ॥ १९

[4]सूचीं वामपदं दद्यात्त्रिकं च परिवर्तयेत् ।
[5]पार्श्वक्रान्तः पुनश्चाद्यो[6] वामोऽतिक्रान्त एव च ॥ २०
सूचीमाद्यं[7] पुनर्दद्यादपक्रान्तं च वामकम् ।
[8]पार्श्वक्रान्तं पुनश्चाद्यं[9] सूचीविद्धे तु मण्डले ॥ २१

[10]आद्यस्तु जनितो भूत्वा स च दण्डक्रमो भवेत् ।
[11]वामं सूचीं पूनर्दद्यात्त्रिकं च[12] परिवर्तयेत् ॥ २२
[13]उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः[14] ।
[15]पार्श्वक्रान्तः [16]पुनश्चाद्यो [17]भुजङ्गत्रासितस्तथा ॥ २३
अतिक्रान्तः पुनर्वामो दण्डपादस्तु दक्षिणः ।
[18]वामः सूचीत्रिकावर्तो[19] दण्डपादे [20]तु मण्डले ॥ २४

---

आस्पन्दितमिति स्पन्दितां चारीमाह, तामेवान्ये अस्कन्दितेत्याहुः । दण्डक्रम इति दण्डपादा चारी त्रिकावर्तादि अन्ते पठितत्वात् परिसमाप्तिस्थानगतामेव

---

1 म - पार्श्वाक्रान्तं ड - पार्श्वक्रान्तः पुनश्चान्यो वामोऽतिक्रान्त एव च प - सूचीमाद्यक्रमं कृत्वा 2 मद - बाहु 3 म - तु ड - हि 4 ड - सूचीवामपदं विद्यात् विद्यात् प - सूचीमाद्यक्रमं 5 द - पार्श्वाक्रान्तः म - पादाक्रान्तः 6 ड - पुनश्चान्यो झ - पार्श्वक्रान्तं पुनश्चाद्यं 7 छ - सूची वामं 8 म - पार्श्वाक्रान्तं 9 ड - पुनश्चान्यं 10 न - आद्यं तु जनितं कृत्वा म - आद्यं तु जनितं कुर्यात्ततो दण्डक्रमं बुधः 11 मद - वामसूची 12 द - तु 13 ड - उद्वृत्तौ 14 झ - अलातं चैव वामकम् 15 म - पार्श्वाक्रान्तः 16 ड - पुनश्चान्यो 17 म - भुजङ्गत्रासितं 18 ड - वामसूची 19 झ - त्रिकावृत्तो 20 ड - दण्डपाते ।

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम्[1] ।
[2]आस्कन्दितं च वामेन [3]ह्युद्वृत्तं दक्षिणेन च[4] ॥ २५

[5]अलातं वामकं पादं[6] सूचीं दद्यात्तु[7] दक्षिणम् ।
[8]पार्श्वक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ॥ २६

[9]समावर्त्य त्रिकं चैव दण्डपादं प्रसारयेत् ।
[10]सूचीं वामपदं दद्यात्त्रिकं [11]तु परिवर्तयेत्[12] ॥ २७

भुजङ्गत्रासितश्चाद्यो[13] वामोऽतिक्रान्त एव च ।
एष [14]चारीप्रयोगस्तु [15]विहृते मण्डले भवेत् ॥ २८

[16]सूचीमाद्यक्रमं दद्यादपक्रान्तं च वामकम् ।
[17]पार्श्वक्रान्तः [18]पुनश्चाद्यो ह्यलातश्चैव वामकः ॥ २९

[19]भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
षट्संख्यं [20]सप्तसंख्यं वा ललितैः पादविक्रमैः[21] ॥ ३०

भ्रमरीमाश्रित्य यन्मण्डलं दण्डपादाख्यं तत्रेति संबन्धः । निकुट्टकमित्यनेन तलसञ्चरपादो लक्ष्यते । उद्वृत्तमूरूद्वृत्तादिकां चारीम् । समावर्तनं सम्यगावर्तनं सव्यापसव्यभ्रमरकद्वयेन । एताभिश्चारीभिः पर्यायेण षट्कृत्वः सप्तकृत्वो वा प्रयुक्ताभिः परिमण्डले चतुर्दिकं भ्रान्त्वान्तरालिकैः पादक्षेपैरिदमिदं

1 ङ - निकुट्टनम् 2 प - आस्पन्दितं म - वामेनास्कन्दितं कुर्यादुद्वृत्तं 3 ज - उद्वृत्तं 4 द - तु 5 - अलाते 6 म - वामपादं च 7 न - सूची पादं तु म - दद्याच्च 8 म - पार्श्वाक्रान्तः ङ - पार्श्वक्रान्तः पुनर्वामं 9 म - परिवर्तत्रिकं पश्चाद्दण्डपादं न - झ परिवृत्तत्रिकश्चैव मन्दपादं ङजपतढ - परिवृत्य 10 ङ - सूची 11 न - च 12 न - परिवर्जयेत् 13 ज - अन्यो 14 म - चारीप्रचारस्तु 15 च - विवृत्ते छ - विहिते 16 ढ - सूचीमाद्यं क्रमं कृत्वा अपक्रान्तं प - सूचीमाद्यक्रमं कृत्वा ह्यति क्रान्तं 17 न - श्लोकार्धो न वर्तते द - पार्श्वक्रान्तं 18 ङ - ततश्चान्योऽप्यलातः म - ततश्चाद्यस्त्वलातः 19 म - एताभिश्चारिभिर्भ्रान्त्वा 20 न - पञ्चसंख्यं 21 द - विभ्रमैः

[[1]आद्यं कुर्यादपक्रान्तमभिक्रान्तं च वामकम् ]
[2]अपक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ॥ ३१
[3]पादभ्रमरकश्च स्यादलाते [4]खलु मण्डले ।
सूचीमाद्यक्रमं कृत्वा [5]ह्यपक्रान्तं च वामकम् ॥ ३२
आद्यो दण्डक्रमश्चैव सूचीकार्यस्तु[6] वामकः ।
कार्यस्त्रिकविवर्तश्च पार्श्वक्रान्तश्च दक्षिणः ॥ ३३
आक्षिप्तं वामकं कुर्याद्दण्डपादं तु[7] दक्षिणम् ।
ऊरूद्वृत्तं [8]च तेनैव कर्तव्यं दक्षिणेन तु[9] ॥ ३४
सूचीवामक्रमं कृत्वा[10] त्रिकं च परिवर्तयेत् ।
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च[11] दक्षिणः ॥ ३५
अतिक्रान्तः पुनर्वामो [12]वामबन्धे तु मण्डले ।
सूचीमाद्यक्रमं [13]दद्यादपक्रान्तं च वामकम् ॥ ३६
पार्श्वक्रान्तः[14] पुनश्चाद्यो[15] भुजङ्गत्रासितः स च[16] ।
*अतिक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ॥ ३७
[17]अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तस्तथैव च[18] ।

---

1 भ्रमयोरेव 2 द - अतिक्रान्तः 3 न - वामो भ्रमरकश्च द - पादो 4 म - चारी 5 न - ह्यतिक्रान्तश्च वामकः 6 ड - पादस्तु 7 न - च 8 झ - तु 9 झ - च 10 ड - वामकरं चैव न - क्रमं चैव 11 म - पार्श्वाक्रान्तस्तु 12 म - वामविद्धे 13 ड - कृत्वा अपक्रान्तं 14 मद - पार्श्वक्रान्तः 15 ड - अन्यो 16 ड - तथा 17 झ - अतिक्रान्तं पुनर्वामं 18 ढ - ऊरूद्वृत्तः स एव च झ - स एव तु.

* मतान्तरानुसारेण

अतिक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।
अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तस्तथैव च ।

इति चारीचरणव्यतिक्रमो द्रष्टव्यः

अलातश्च [1]पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ॥ ३८
[2]सूचीवामं पुनर्दद्यादपक्रान्तश्च दक्षिणः ।
[3]अतिक्रान्तः पुनर्वामः कार्यो ललितसंचरः[4] ॥ ३९
एष पादप्रचारस्तु[5] ललिते मण्डले भवेत् ।

सूचीमा क्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ ४०
पार्श्वक्रान्तं पुनश्चाद्यं[6] [7]वामं पार्श्व मं तथा* ।
[8]भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम्[9] ॥ ४१
[10]वामं सूचीं ततो [11]दद्यादपक्रान्तं च दक्षिणम् ।
स्वभावगमने ह्येतन्मण्डलं संविधीयते ॥ ४२
क्रान्तमेतत्तु[12] विज्ञेयं नामतो[13] नाट्ययोक्तृभिः ।

एतान्याकाशगानीह[14] ज्ञेयान्येवं दशैव तु[15] ॥ ४३
अतः परं प्रवक्ष्यामि भौमानामपि [16]लक्षणम् ।
आद्यस्तु जनितः कार्यो वामश्चास्पन्दितो [17]भवेत् ॥ ४४
शकटास्यः पुनश्चाद्यो[18] वामश्चापि[19] प्रसारितः ।

---

कुर्यादिति सङ्गतिः । संख्याशब्देनाभ्यावृत्तिर्लक्ष्यते । अतिक्रान्तस्यैव विशेषणं ललितं सञ्चरतीत्यत एव मण्डलस्येदमेव नाम । स चेति । स एवेत्यर्थः ।

---

1 झ - भवेद्वामः 2 कादि चान्तेषु न दृश्यते । ग्रन्थपातः स्यात् 3 झ - अपक्रान्तः 4 ड - संज्ञकः 5 ड - प्रसारस्तु 6 ड - अन्यं 7 ड - वामपार्श्वक्रमं द - वामपार्श्वाक्रमस्तथा 8 न - एताभिश्चारिभिर्भ्रान्त्वा म - एताभिः पादचारीभिः 9 म - पर्यायान्मण्डलं तथा 10 ड - वामसूचीं 11 न - विद्यात् 12 च - क्रान्तमेव च 13 म - मण्डलं 14 च - आकाशगामीनि 15 म - दश ज्ञेयानि योक्तृभिः 16 ड - इह 17 ड - आस्कन्दितो 18 ड - अन्यो 19 ड - वामश्चैव.
* पार्श्वक्रम इति पार्श्वक्रान्तचरणः.

आद्यो भ्रमरकः कार्यस्त्रिकं च[1] परिवर्तयेत् ॥ ४५
आस्पन्दितः[2] पुनर्वामः शकटास्यश्च दक्षिणः।
वामः [3]पृष्ठापसर्पी च दद्याद्भ्रमरकं तथा[4] ॥ ४६
स एवास्पन्दितः[5] कार्यस्त्वेतद्भ्रमरमण्डलम्।

आद्यो भ्रमरकः कार्यो वामश्चैवाञ्चितो भवेत् ॥ ४७
कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः।
ऊरूद्वृत्तः स एव स्याद्वामश्चैवापसर्पितः ॥ ४८
कार्यस्त्रिकविवर्तश्च दक्षिणः स्पन्दितो[6] भवेत्।
शकटास्यो भवेद्वामस्तदेवास्फोटनं [7]भवेत् ॥ ४९
एतदास्पन्दितं[8] नाम व्यायामे युद्धमण्डलम्।

[9]आद्यन्तु जनितं कृत्वा वामेन तु निकुट्टकम्[10] ॥ ५०
शकटास्यः पुनश्चाद्य[11] ऊरूद्वृत्त स एव तु[12]।
[13]पृष्ठापसर्पी वामश्च स च चाषगतिर्भवेत्[14] ॥ ५१
[15]आस्पन्दितः पुनः सव्यः शकटास्यश्च वामकः[16]।
आद्यो भ्रमरकश्चैव[17] त्रिकं तु[18] परिवर्तयेत् ॥ ५२

---

1 म - तु 2 म - आस्कन्दितः 3 न - पृष्ठावसर्पी 4 म - कार्यो भ्रमरकस्तथा 5 ड - आस्कन्दितः 6 ड - स्कन्दितो 7 ड - तेनैवास्फोटनं 8 ड - आस्कन्दितं 9 म - आद्यस्तु जनितः 10 ज - वामेंचैव निकुट्टकम् ड - निकुट्टनम् 11 ड - श्चान्यः ढ - शकटास्यं पुनश्चान्यं 12 ड - च 13 न - पृष्ठावसर्पी 14 झ - गतिस्तु वा 15 ड - आस्कन्दितः 16 न - शकटास्यं च वामकम् 17 म - भ्रमरकः कार्यः 18 ड - च।

[1]पृष्ठापसर्पी [2]वामश्चेत्यावर्तै मण्डले भवेत् ।
[3]कृत्वादौ समपादं तु स्थानं हस्तौ प्रसारयेत्[4] ॥ ५३
[5]निरन्तरा [ऊ]र्ध्वतलावावेष्ट्योद्वेष्ट्य चैव हि[6] ।
कटीतटे विनिक्षिप्य [7]चाद्यमावर्तयेत्क्रमात्[8] ॥ ५४
[9]यथाक्रमं पुनर्वाममावर्तेन प्रसारयेत् ।
चार्यानया च[10] भ्रान्त्वा तु पर्यायेणाथ मण्डलम्[11] ॥
[12]समोसरितमेतच्च [13]ज्ञेयं व्यायाममण्डलम् ।
पादैस्तु भूमिसंयुक्तैः [14]सूचीविद्धैस्तथैव च ॥ ५६
एलकाक्रीडितैश्चैव [15]चूर्णैस्त्रिकविवर्तनैः[16] ।
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम्[17] ॥ ५७
एलकाक्रीडितं [18]विद्यात्खण्डमण्डलसंज्ञितम्[19] ।
सव्यमुद्घट्टितं कृत्वा तेनैवावर्तमाचरेत्[20] ॥ ५८
तेनैवास्कन्दितः कार्यः [21]शकटास्यश्च वामकः ।
आद्यः पृष्ठापसर्पी च [22]स च चाषगतिर्भवेत् ॥ ५९
अड्डितश्च पुनर्वाम आद्यश्चैवापसर्पितः ।
वामो भ्रमरकः कार्य आद्य आस्कन्दितो भवेत् ॥ ६०

---

1 झ - पृष्ठापसर्पि 2 द - वामश्च आवर्तै म - वामश्च आवर्ताख्ये तु मण्डले 3 ड - समपादं बुधः कृत्वा झ - समपादं पुनः कृत्वा 4 द - प्रयोजयेत् 5 झ - निरन्तरादूर्ध्वतलैः द - निरन्तरादूर्ध्वतलात् ढ - निरन्तरानूर्ध्वतलैः 6 म - तौ पुनः 7 ड - आद्यं 8 न - क्रमम् 9 ड - तथाक्रमं 10 न तु द-अथ 11 म - पर्यायान्मण्डलं भ्रमेत् 12 ड - समोत्सारितमेतत्तु न - समोत्सारितं 13 ड - कार्यं 14 द-सूच्याविद्धैः 15 ड - पूर्णैः प - तूर्णैः 16 ड - विवर्जितैः न-विवर्तकैः 17 म - पर्यायान्मण्डलं पुनः 18 म - नाम ड - दद्यात् 19 म - मण्डलमुच्यते 20 म - आदिशेत् 21 म - आस्कन्दितं कुर्यात् 22 प - सम.

तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम्।
आद्यं तु जनितं कृत्वा [1]तेनैव च [2]निकुट्टकम् ॥ ६१
स एव शकटास्यश्च वामश्चास्कन्दितो[3] भवेत्।
[4]पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ॥ ६२
[5]विज्ञेयं शकटास्यं तु व्यायामे युद्धमण्डलम्।

आद्यस्तु जनितो भूत्वा स एवास्कन्दितो[6] भवेत् ॥ ६३
[7]अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथमण्डलम्[8] ॥ ६४
अध्यर्धमेतद्विज्ञेयं [9]नियुद्धे [10]चापि मण्डलम्।

[11]सूचीमाद्यक्रमं कृत्वा [12]ह्यपक्रान्तं च वामकम् ॥ ६५
[13]भुजङ्गत्रासितश्चाद्य एवमेव च वामकः[14]।
[15]भुजङ्गत्रासितैर्भ्रान्त्वा पादैरपि च मण्डलम् ॥ ६६
[16]पिष्टकुट्टं च विज्ञेयं चारीभिर्मण्डलं बुधैः[17]।

सर्वैश्चापगतैः पादैः परिक्रम्य च मण्डलम्[18] ॥ ६७
एतच्चापगतं विद्यान्नियुद्धे [19]चापि मण्डलम्।

---

आस्फोटनमिति पादतलेन भूमिताडनं युद्धेष्वास्फालनमिति प्रसिद्धम्। चशब्दोऽप्यर्थे। अतः परमपि मण्डलानि योजयते। कथमित्याहुः। समाः

---

1 न - तथैव 2 ज - निकुट्टनम् 3 प - आस्पन्दितो 4 म - शकटास्यस्थितैः पादैः भ्रमेत्पर्यायशः पुनः 5 म - शकटास्यं च विज्ञेयं 6 प - आस्पन्दितो 7 ड - अवसर्पी 8 म - पर्यायान्मण्डलं भ्रमेत् 9 द - व्यायामे चारिमण्डलम् 10 ड - चारिमण्डलम् 11 द - धीरमाद्यक्रमं 12 दजझ व्यपक्रान्तं 13 द - आदर्शे श्लोकार्धो न वर्तते 14 ड - एष एव तु वामकः 15 म - भुजङ्गत्रासितैः पादैर्भ्रमेदपि च मण्डलम् 16 प - पृष्ठकुट्टं च 17 ड - नियुद्धे चारिमण्डलम् 18 म - मण्डलं तु परिभ्रमेत् 19 ड - चारिमण्डलम् -

नानाचारीसमुत्थानि मण्डलानि समासतः ॥ ६८

उक्तान्यतः परं चैव [1]समचारीं नियोजयेत् ।
समचारीप्रयोगो [2]यस्तत्समं नाम मण्डलम् ॥ ६९

आचार्यबुद्धया [3]तानीह कर्तव्यानि प्रयोक्तृभिः[4] ।
एतानि खण्डानि समण्डलानि
युद्धे नियुद्धे च[5] परिक्रमे च[6] ।
लीलाङ्गमाधुर्यपुरस्कृतानि
कार्याणि [7]वाद्यानुगतानि तज्ज्ञैः ॥ ७०

इति श्रीभारतीये नाट्यशास्त्रे मण्डलविकल्पनं[8]
नामैकादशोऽध्यायः[9] ।

---

परस्परे योजनोचिताश्चार्यो यत्र तत्रोहनेऽप्युदाहरणं दर्शयति समचारीप्रयोग इति । समानां भौमत्वेनाकाशीयत्वेन च चारीणां प्रयोगो यत्र ।

एवमनया दिशा बहूनि कल्पयेदित्याह आचार्यबुद्ध्योपलभ्यो भागः प्रयोगयोग्यो भवतीति । खण्डानां प्राधान्यमपि दर्शयति खण्डानीति । वाद्येनानुगतानीति "गत्या वाद्यानुसारिण्या" (अ ४-२८२) इति नृत्तविषयतुर्याध्यायाद्धि वैपरीत्येन नाट्ये गतौ प्राधान्यमाहेति शिवम् ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यां
मण्डलाध्याय एकादशः
समाप्तः ।

---

1 म - समां चारीं 2 म - प्रचारो 3 ड - कर्तव्यानीह तानि 4 ढ - प्रयोगतः 5 म - तु 6 च - परिचंक्रमे च 7 झ - बाह्यानुगतानि 8 ड - मण्डलविधानं न - मण्डलविधानो 9 जादिबान्तेषु द्वादशोऽध्यायः द - श्लोकाः ६८ - आहत्य १९३९ ।

श्रीः

# नाट्यशास्त्रम्

## द्वादशोऽध्यायः

एवं व्यायामसंयोगे[1] कार्यं मण्डलकल्पनम् ।
अतःपरं प्रवक्ष्यामि [2]गतीस्तु प्रकृतास्थिताः ॥ 1
तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।

श्रुत्यन्तविश्रान्तविधिर्या गतिः परमात्मनः ।
तां महानन्दसन्दोहतत्त्वमूर्तिं[1] स्तुमः सदा ॥

प्रकरणसंगतये [2]प्रकृतानुपूर्वकं निरूपयिष्यमाणं प्रतिजानीते एवमिति । व्यायामानामन्योन्य[3]संमीलनयोग्यानां चारीणां [4]संहत्या योगे मिश्रीभावे सति मण्डलानां कल्पनमनुक्तमपि कर्तुं शक्यं बुद्ध्येति तत उपरम्यते । [5]तत्राङ्गिकस्य रसभावयोर्विनियोगशो (विभागशो ?) विनियोगस्य कृतत्वाद्यद्यपि तन्मिश्रणेऽपि पृथग्विनियोगेन वक्तव्यं, तथापि शिष्यहितप्रतिपन्नो मुनिर्दिशं दर्शयितुं शिरःप्रभृतिपादान्ते (यानि) [6]अङ्गसंधेयानि कर्माण्युक्तानि तन्मेलनबलेन यो [7]देहसंनिवेशो गतौ वा स्थितौ [8]प्रकाराभावात्तस्य विनियोगं [9]प्रकटयिष्यन् चारीमण्डल[10]प्रसंगस्याचित्तवृत्तित्वाद्गतिविनियोगमेव प्रतिजानीते । गतिश्च प्रकृतिं रसमवस्था देशं कालं चापेक्ष्य वक्तव्या । प्रतिपुरुषमभिधानात् । तत्र प्रक्रिया पूर्वमुच्यते, [11]तदेतत्तुशब्देन यावच्छब्दपर्यायवाचिना क्रमार्थेन काकाक्षिवदुभयतो धावता द्योतितम् । तत्रामविष्टस्य का गतिरिति [12]प्रयोगोपक्रमं सूचयति तत्रोपवहनमिति । [13]यदङ्गानुसारालाप

1 म - संजातं 2 प - गतिं तु प्रकृतिस्थिताम्

1 संदोहि सत्त्वमूर्तिं 2 वर्णितानुपूर्वकं 3 संकलन 4 संगत्या 5 तत्राङ्गिकसाभागयोर्विनियोगशो 6 अङ्गकर्मसंयोगानि 7 भेदसंनिवेशो 8 प्रकारस्वभावात् 9 प्रकटयिष्यामः 10 प्रसङ्गस्याचित्रवृत्तित्वात् 11 तदेतादृक्छब्देन यादृक्छब्दपर्याय क - तदेतद्विक्छब्देन 12 प्रवेशोपक्रमं 13 यदङ्गानुसारालापं ।

यथामार्गरसोपेतं[1] प्रकृतीनां प्रवेशने[2] ॥ २

ध्रुवायां संप्रवृत्तायां पटे चैवापकर्षिते[3] ।

कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ॥ ३

---

इति [1]प्रसिद्धं तमालापं कृत्वा [2]ध्रुवायां सम्यक् प्रवृत्तायां, कथं?, भाण्डवाद्यपुरस्कृतत्वादि[3] रूपत्रययुक्तं [4]कृत्वेति, [5]त्रीण्यपि क्रियाविशेषणानि । तन्त्रीभाण्डं वाद्यमानं पुष्करवाद्यम् । मार्गो देशः, रसः स्थायिचित्तवृत्तिः, वीप्सायामव्ययीभावः । यो यः कश्चिद्वृद्योद्याननिर्देशः, [6]रत्यादिश्चित्तवृत्तिविशेषः, तेनोपेतं कृत्वा, [7]या ध्रुवा तथा उत्तमादिप्रकृतीनां यस्यावेशनं बुद्धौ प्रवेशो यत्र तथा कृत्वा । एतदुक्तं भवति—हंसाद्युपमानमुखेन प्रकृतिविशेषः, चित्तवृत्तिविशेषः, उद्यानादिविशेषश्चावश्यं ध्रुवासूपनिबन्धनीयः । एवं ध्रुवायां प्रवृत्तायामेवं सत्यां । पटेऽपकर्षिते यवनिकायामपसारितायां[8] तदा सामाजिकानां नेपथ्यगृहादयमागत इति नटी निवर्त्यते । चकारात्तत्काले पुनरुपोहनम्[9] । ध्रुवाप्रवेशो[10] लये मध्ये[11] [12]वलितया—[13]वलनिकेति कोहलेन प्रयोगवलनाव्यपदिष्टं—शुष्काक्षरगानं कृत्वा, प्रवेश एव तथा समुचितस्थानकदृष्टिमुखरागादियुक्तः कर्तव्यो [14]यथा सामाजिकानां झडित्येवान्विताभिधाननयेन [15]मुख्यरसव्याप्तिरुदयते । प्रगीतं गीयमानग्रामरागाग्रगतैकगमकाकर्णने समग्रग्रामतत्त्वसंवेदनवशः ।

अन्ये तु यथामार्गकलोपेतमिति पठन्ति । उभयतः शेषत्वेन व्याचक्षते—मार्गेषु चित्रादिषु याः कला द्विमात्राचतुर्मात्राष्टमात्रेति ग्रामेषूच्यन्ते चालिप्तकादिषु कला वाद्याक्षराणीति । यद्यपि पात्राणामध्रुवा अपि प्रवेशा

---

1 प - मार्गकलोपेतं 2 ड -प्रवेशनम् 3 ड - अवघट्टिते ढ - अवघर्षिते न - अवकर्षिते प - अपघट्टिते 4 म - कार्यमुत्तमे ।

---

1 प्रसिद्धः क्रमालापं 2 ध्रुवादिभ्यः 3 पुरस्कृतादि 4 उक्तं 5 नित्यविक्रिया 6 रत्यादे 7 यद्वद्वृहं 8 प्रसारितायां 9 उपोहनात् 10 प्रदेशः 11 क - पर्येन्मध्ये ख - पलयेन्मध्ये 12 चलितया 13 वलितेति 14 यः 15 मुख्यःसव्याधिरुदयते ।

स्थानं तु वैष्णवं [1]कृत्वा ह्युत्तमे मध्यमे तथा।
समुन्नतं समं चैव चतुरश्रमुरस्तथा॥ ४
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च[2] कारयेत्।
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः॥ ५
[3]कर्णादष्टाङ्गुलस्थे च[4] बाहुशीर्षे प्रयोजयेत्।
[5]उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम्[6]॥ ६
हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ[7]।
दक्षिणो नाभिसंस्थस्तु वामः कटितटे स्थितः॥ ७
पादयोरन्तरं कार्यं द्वौतालावर्धमेव च।
[8]पादोत्क्षेपस्तु कर्तव्यः स्वप्रमाणविनिर्मितः॥ ८

---

वक्ष्यन्ते तथापि संभवमात्राभिधान[1]मेतदुत्तममध्यमयोर्वा प्रस्तावादेवमुक्तम्। तयोर्हि ता ध्रुवाः प्रवेशास्तेऽपि वा चकारेण संगृहीता एव। एकः समोऽन्यः पक्षः। स्थानमिति त्र्यश्रेऽर्धाद्विकतालभागिति वैष्णवं स्वप्रवेश एव सन्ने अचले प्रसन्ने, [2]नात्युक्षिप्ते [3]अधो वा अधोगामित्वं [4]यत्नेन परिहार्यमिति श्लोकार्थमेव शिक्षयितुं स्फुटमुपायमाह ग्रीवाप्रदेश इत्यादिना सार्धेन श्लोकद्वयेन। स्वस्थ-मयूरवदञ्चितं सुरूपं शिरो यत्र। नाभिसंस्थ इति चातुरश्यप्रस्तावः खटका-मुखः, वाम इत्यर्धचन्द्रः। न चेदमुपविष्टस्थानकमपि तु गत्यानन्तर्यौचित्यात्तु स्थितस्थानकमेवेति दर्शयितुमाह पादयोरन्तरमिति। "द्वौतालावर्धं च पादयो-रन्तर"मिति (११०-५२) यत्स्थानकलक्षणं सूचितं तदेव कार्यं नान्यदुपवेश-नादित्यर्थः। तत्र स्थानकानन्तरं गतिमुपक्षिपति[5] पादोत्क्षेप इति स युक्तस्तेन

---

1 म - कार्यमुत्तमे 2 म - न 3 म - कर्णाभ्यां बाहुशिरसी स्यातामष्टाङ्गुल-स्थिते। 4 ड - अङ्गुलिस्थैव 5 भ - उरसश्चापि देशाच्च चिबुकं चतुरङ्गुलम् 6 द - संमितम् 7 म - कटिं नाभिं तु संस्थितौ 8 ढ - पादोत्क्षपश्च।

---

1 मात्राविधानं 2 तान्युत्क्षिप्ते 3 इत्येतो 4 यत्तेन 5 आक्षिपति।

चतुस्तालो [1]द्वितालश्चाप्येकतालस्तथैव च[2] ।
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ॥ ९
द्वितालश्चैव मध्यानां तालः स्त्रीनीचलिङ्गिनाम्[3] ।
चतुष्कलोऽथ द्विकलस्तथा ह्येककलः पुनः ॥ १०
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः पातो नीचानां संप्रकीर्तितः ॥ ११

भाविलक्षणेन देशकालपरिच्छेदेन च[1] कर्तव्यः । स्वकरमानेन च तालः पात्रस्येत्यर्थः ।

तत्र देशपरिच्छेदं तावदाह एकताल इति । तालः प्रसारितमध्यमाङ्गुष्ठान्तरं "तालः स्मृतो मध्यमया" इति । संख्याक्रमेणाभिधाय स्थायिस्थानभूतोत्तमप्रकृतिविश्रान्तत्वात्प्रयोगजातस्य तदुपक्रमं विनियोगमाह चतुस्तालस्त्विति । तु शब्दोऽप्यर्थे कदाचिदन्यथापि भावात् । तथाशब्दो राज्ञां देवसदृशगत्यसंभवसंभावनापसारणद्योतकः । स्त्रीणां नीचानां साहचर्यादधमानामिति मन्तव्यम् । तेषां हि लिङ्गित्वादधमत्वं किंचिन्न संभावयेत । यथाशोभमिति नाट्यधर्मीकाममित्यर्थः ।

देशनियममुक्त्वा कालनियममप्यौत्सर्गिकं तावदाह चतुष्कलो हीति । तथा चेति तेनोत्क्षेपेण यत्पादस्य पतनं तदुत्तमानां चतसृभिः कलाभिः यस्मात्तदर्धार्धक्रमेण मध्यमाधमयोः परिभाषित इत्युत्सर्गतयेति भावः ।

1 द - द्वितीयश्च 2 म - तथा स्यादेकतालकः 3 द - स्त्रीणां च लिङ्गिनाम् इतः प्रभृत्यध्यायान्तं—भम - संज्ञकादर्शयोः श्लोकानां पौर्वापर्यविपर्ययाद्विषयस्यापि न्यूनाधिकतया च पाठक्रम एव महान्व्युत्क्रमो दृश्यते । पाठभेदानां बहुलतया विशीर्णतया पाठभेदसूचनात्परं लघीयोऽध्यायमेव समग्रं तत्पाठक्रमानुसारि दर्शयितुमिति तथैवास्याध्यायस्यान्ते योजितम् ।

1 परिच्छेदेनैव ।

[1]स्थितं मध्यं [2]द्रुतं चैव समवेक्ष्य लयं बुधः[3]।
यथाप्रकृति नाट्यज्ञो गतिमेवं[4] प्रयोजयेत्॥ १२

तत्र गीतिचतुष्टयं मागध्यादि वक्ष्यते यत्तत्रार्धमागध्यादौ क्रमेण चित्रादित्रयविनियोगात्[1] । "निमेषाः पञ्च मात्रा स्यात्" इति कलासामान्यलक्षणलब्ध औत्सर्गिकः सर्वत्र ध्रुवकमार्गो मन्तव्यः। विशेषादभिधाने तेन ध्रुवकमानेन चतुष्कलः पादपातः, तथा चोत्तमपरिग्रहे [2]द्विपदी कोहलेनोक्ता—

"स्यादुत्तमानां द्विपदी चतुर्गुरुसमन्विता ।
तत्रोत्क्षेपनिपाताभ्यां यस्मात्पादद्वयं भवेत् ॥" इति

[3]लक्ष्यश्च इत्थमेव धिक्डिधिं इति द्विपदीभागेन पादेन पादपातः। अत्र ध्रुवके चतस्रः कला भवन्ति धिगडाधिङ् इत्यस्य हि कालः[4] कखगघङ, नहि व्यञ्जनकालः स्वरकालात्पृथक्,तानि गुरोश्च[5] प्रचलत्वं [6]खडतलचडस्तद्विद्वित्रिपुटमेवावधार्यते(?)। तत्र हि [7]"तागडुधिं—इत्येवंरूपं [8]लघु कला तस्यास्तिस्रो मात्राश्चतुर्थे गर्वक्षरे (द्वे) मात्रे इति [9]च मात्राः। सर्वत्र [10]चैवं प्रकारः समनन्तरग्रहणे विश्रान्त्यभावेन दुष्करः प्रयोग इति स्थानचेष्टाविश्रान्तिप्रक्लृप्तये मध्यगता विरामरूपैका[11] मात्रा लक्ष्यविद्भिः [12]प्रकल्पिता, तद्वशादुक्ता तादृशी चतुर्भिर्वा द्रुताः कलायां प्रतिभासन्त इत्यास्तां तावत्। इह चित्रमार्गेण चतुष्कलपादपतनमिति न्याय (नायं?) लक्ष्यलक्षणशोभाबाह्यत्वादपेक्ष्यते च[13] ।

अथ लयकालनियमशेषमाह[14] स्थितमिति विलम्बितम् । समवेक्ष्येति प्रकृत्यादि भेदविभागेनेत्याह तमेव दर्शयति धैर्यस्थैर्यविलम्बितलयमध्यसंमतं संवेदनं यथार्थमिथ्यागोन(गौण?)गतधैर्यगाम्भीर्यादिकृतं मन्तव्यम् । (यथाप्रकृतीति)

- 1 भ - स्थिरं 2 द - समं 3 ड - लयत्रयम् 4 ड - गतिमेव।

1 विनियोगम् 2 द्विचारी 3 लक्ष्यतेऽर्थमेव दलति हि द्विपादीभागेन 4 इत्यस्य कालः 5 पृथक्ता त्रिगुरोश्च 6 क - खडतलचेड्लः ख - खडकलयेद्धः 7 भडा गिडुद्धीम् 8 रूपा लघुकला 9 प 10 चैषां 11 मध्यगतापि समरूपैका 12 प्रकल्पितेतद्वशात् 13 अपेक्ष्यत्वमेष 14 शेषमेवाह

[1]धैर्योपपन्ना गतिरुत्तमानां
मध्या गतिर्मध्यमसंमतानाम्[2]।
द्रुता गतिश्च [3]प्रचुराधमानां
लयत्रयं सत्त्ववशेन योज्यम् ॥ १३

एष एव तु विज्ञेयः कलाताललये विधिः।
[4]पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः॥ १४

[1]न तु जातिकालादिकृतं विदूषकस्य द्विजत्वेऽपि [2]अविमलात्केवल-मुत्तमघोषणायैव रचितं जात्यादि योजनीयम्। उत्तमस्याप्यन्यथाभावे कथं-चिदुत्तमं[3] सदप्यविद्यमानाया इति प्रचुरेति लोकप्रसिद्धमेवेदमुक्तमित्यर्थः। न केवलं प्रकृतितोऽवयवभेदो यावच्चित्तवृत्तिभेदेनाभिप्रेत्याह सत्त्वबलेन च लयत्रयं योज्यम्। सत्त्वं चित्तवृत्तिः तेन [4]संग्रामादावुत्तमस्यापि द्रुतं, शोका-दावधमस्यापि विलम्बितम्। अथैतदनुसारिणो गत्युपयोगिन्यां[5] ध्रुवायां विधि-रिति दर्शयति एष एव त्विति। अत्र गत्यनुसारी तालविधिः[6], अन्ये त्वन्य-थेत्युक्तं ताले। यस्तालल्यः कलासहितः स कलातालल्यः इति मध्यमपद-लोपी समासः। तेनायमर्थः—ध्रुवातालेऽपि गत्यनुसार्येव कलाविधिर्लय-विधिश्च। अत एवैतदनुसारेण भट्टलोल्लटगोपालादिभिर्भङ्गोपभङ्गविभङ्गविषये तालदीपिकादौ चिरन्तनसंमतो ध्रुवातालानां विनियोगः प्रपञ्चतो दूषितः। तत्तु ध्रुवाध्याये* विचारयिष्याम इत्यास्ताम्।

एवं देशकालनियमसुक्तं प्रकृते योजयति पुनर्गतिप्रचारस्येति गतिषु प्रचारो वैचित्र्यं प्रयोगं पुनः शृणुतेति संबन्धः। संघटना ह्युक्तेति भावः।

1 प - स्थैर्योपपन्ना 2 प - संस्थितानाम् 3 न - प्रकृताधमानां

1 न भुजानि कुटिलानि 2 अवमलात् 3 उक्तं 4 संभ्रमादौ 5 योगिभ्यां 6 नत्यनुसारितालविधिः 6 भङ्गसर्वभङ्गसव्ये 7 देशकालादिनियमं।
* द्वात्रिंशेऽध्याये।

[1]स्वभावे तूत्तमगतौ [2]कार्यं जानु कटीसमम्।
[3]युद्धचारीप्रयोगेषु [4]पुनः स्तनसमं न्यसेत्॥ १५
पार्श्वक्रान्तैः सललितैः पादैर्वाद्यान्वितैरथ।
रङ्गकोणोन्मुखं[5] गच्छेत्सम्यक्पञ्चपदानि तु॥ १६
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च[6]।
परिवृत्य द्वितीयं तु[7] गच्छेत्कोणं ततः परम्॥ १७
तत्रापि वामवेधस्तु विक्षेपो दक्षिणेन च[8]।
ततो भाण्डोन्मुखो गच्छेत्तान्येव तु पदानि च[9]॥ १८
एवं गतागतैर्गत्वा पदानामेकविंशतिम्[10]।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च[11]॥ १९

---

स्वभावे त्विति। [1]तुना विशेषद्योतकेन मन्थरगतौ चतुस्तालत्वमुक्तं, स्वभावगतौ तु त्रितालत्वं, दीप्तगतौ तु पञ्चतालत्वमपि कार्यमिति दर्शयति। तां गतिप्रचारघटनामाह पार्श्वक्रान्तैरित्यादि।

"कुञ्चितं पादमुत्क्षिप्य पार्श्वोत्थानोत्थितं न्यसेत्।
उद्धट्टितेन पादेन पार्श्वक्रान्ता" (१०-३२)

इति पार्श्वक्रान्ता चारी। रङ्गकोणं पूर्वोत्तरं द्वितीयकोणमित्युत्तरपश्चिममेवमिति। अन्यस्मिन्निति कोणद्वयेऽतिदिशति। पूर्वरङ्गे चैषा पञ्चपदी व्याख्याता (अ ५ ७३)। वेधः पार्ष्णिक्षेत्रे सूचीपादनिपातः। वामवेधमिति [2]अन्तराविद्धमुखं (तत्) प्राप्तिसिद्धौ कोणैर्गत्वा ब्रह्मस्थानस्थानुल्लंघ्यतामाह। एतच्च

---

1 ड - स्वभावैरुत्तम प - स्वभावे चोत्तम 2 न - कार्या 3 क - युद्धवीर 4 ड - जानु 5 ड - उन्मुखो 6 ड - तु 7 ढ - च 8 ड - दक्षिणस्य च 9 न - तु 10 न - एकविंशतिः 11 ढ - दक्षिणेन च।

1 कृतात् 2 पुनरपिसंमुखं।

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः।
त्र्यश्रस्त्रिकोणे चतुरश्ररङ्गे गतिप्रचारश्चतुरश्र एव ॥
यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः।
चतुष्कलोऽथ द्विकलस्तथैवैककलः[1] पुनः॥ २१
अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः[2]।
[3]चतुष्कलमथार्धं च तथा चैककलं पुनः॥ २२
[4]दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम्।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः॥ २३
दिवौकसां तु सर्वेषां[5] मध्यमा गतिरिष्यते।
तत्रापि चोद्धता ये तु[6] तेषां देवैः समा गतिः॥ २४

पञ्चपदीगमनं सर्वत्रौत्सर्गिकम्। विशेषमप्याह रङ्गे विकृष्ट इति। भरतशब्देन उपचारतस्तद्विद्यायोनिसंबन्धः सूच्यते। गतागतैरिति परिमितायां दिशि पञ्चपदी गतागतेन [1]नियमः एकत्रैव स्थाने द्वौ [2]पादविक्षेपाविति मन्तव्यम्। विकृष्टायां च भूयो भूयः पञ्चपदी।

अत्रैव विषये विविधप्रमाणा पातरीतिः,[3] तद्द्विलयद्विभङ्गचतुर्भङ्गादयः प्राधान्येन। व्यामिश्रगतेरपि विशेषं व्याचिख्यासुः समगतिमुपसंहरति यः समैरिति। तथैवेति साम्येनेत्यर्थः। मिश्रगतिमाह अथेति। परिवारित इत्युत्तमत्वेन विवक्षित इत्यर्थः। तेन [4]देवादि साध्वाश्रीयमानमुत्तमप्रकृतावपि(?)नायं विधिरन्यस्यैव तत्र प्राधान्यात्। तदोत्तमपादपाते मध्यमस्यद्वौ नीचादे(रेकः, उत्तम)स्य चत्वारः। अत्रैव च चतुस्तालादिविभागे निश्चयार्थं प्रश्नमुत्थापयितुमुपसंहारमुत्तम[5]विशेषाभिधानसहितमाह दैत्यदानवेत्यादि। सर्वेषामिति देवदूतादीनाम्। उद्धता ये त्विति मातलिप्रभृतयः।

1 ङ - भवेदेककलः 2 प - गच्छेत्संपरिवारितः 3 ङ - चतुष्कलमथोर्ध्वं च
4 ङ - देव 5 प - शेषाणां 6 ङ - चोर्ध्वपाले तु जढ - चोर्ध्वतालेतु।

1 निर्वमा 2 पादौ 3 निशी (?) 4 क - दैवादिसाध्यानियमानां ख - देवादिसाध्वसाध्वाश्रीयमानां 5 इकविशेष।

ऋषय ऊचुः[1]

यदा मनुष्या राजानस्तेषां देवगतिः[2] कथम् ।
अत्रोच्यते कथं नैषा गती[3] राज्ञां भविष्यति ॥ २५
अथ दिव्याः प्रकृतयो दिव्यमानुष्य[4] एव च ।
मानुष्य[5] इति विज्ञेया[6] नाट्यवृत्तिक्रियां[7] प्रति ॥ २६
[8]देवानां प्रकृतिर्दिव्या [9]राज्ञां वै दिव्यमानुषी ।
[10]या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ॥ २७
देवांशजास्तु राजानो वेदाध्यात्मसु कीर्तिताः[11] ।
एवं देवानुकरणे[12] दोषो ह्यत्र न विद्यते ॥ २८
अयं विधिस्तु[13] कर्तव्यः स्वच्छन्दगमनं प्रति ।
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते ॥ २९
सर्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया ।
[14]उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥ ३०

---

देवांशजा इति लोकपालांशविनिर्माणा राजानः । वेदेषु तथाध्यात्मशास्त्रेषु वेदान्तेषु, येषामनेन प्राधान्यमुक्तम् । (अनुकरणं) देवादीनां वर्णनात्, उक्तं च विराजाविद्धराजगुह्यमिति (?) देवानुकरणे नाल्पत्वमित्यर्थः । अयमिति चतुष्कल इत्यादिः । स्वच्छन्दगमनं स्वस्था गतिः । संभ्रम आवेगः उत्पातोऽन्नोन्मादादिः । [उक्त] प्रमाणमिति उक्तरूपमित्यर्थः । एतदेवास्य दूषयति [1]चतुरर्धं द्वे उत्तमस्य, एका मध्यमस्य, अर्धं नीचस्य ; अवस्थान्तरबलात् सर्वासां

---

1 ड - अत्राह 2 ड - तया दैवगतिः 3 न - गते 4 ड - दिव्यामानुष 5 ड - मानुषा 6 ड - विज्ञेयो 7 ज . नाट्यस्य प्रक्रियां ड नाट्यवृत्तक्रियां 8 प दैवी ब - देवा हि 9 प - राजानो वै 10 छ - यात्वन्यलोक 11 ड - प्रकीर्तिताः 12 ड - देवानुसरणे 13 ड - विधेयः 14 प - मध्योत्तमाधमानाम् ।

---

1 चतुरर्थत्वे ।

18

[1]चतुरर्धकलं वा [2]स्यात्तदर्धकलमेव च।
[3]अवस्थान्तरमासाद्य कुर्याद्गतिविचेष्टितम्॥ ३१
[4]ज्येष्ठे चतुष्कलं यत्र मध्यमे द्विकलं भवेत्।
[5]द्विकला चोत्तमे यत्र [6]मध्ये त्वेककला भवेत्॥ ३२
[7]कलिकं मध्यमे यत्र नीचेष्वर्धकलं भवेत्।
एवमर्धार्धहीनं तु जडानां संप्रयोजयेत्॥ ३३
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते।
[8]विस्मये चावहित्थे च तथौत्सुक्यसमन्विते॥ ३४
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा।
[9]गतिः स्थितलया कार्याधिकलान्तरपातिता॥ ३५

(प्रकृतीनां, गतिरिति कलालयतालाश्रिता)। सर्वमेतदिति तु युक्तम्। (नीचेष्वर्धकलं भवेदिति) अनेन कलातुर्यभागो भरतमुनिना सूचितोऽयं लक्षणविदो वृत्ताकारं द्रुतमाहुः, यद्यथा पञ्चमांश उक्तनीत्या श्वासादिविश्रान्ति-पूर्वक इति चतुर्धा स एव द्रुतो युक्तः। चतुष्कलादप्याधिक्यमस्तीति दर्शयति। ज्वरार्त इत्यादि। भयेन योऽन्वितो जातोरुस्तम्भः,अन्यथा ह्यस्य त्वरिततरा गतिर्वक्ष्यते। विस्मय इति तत्कृतस्तम्भ इत्यर्थः। अवहित्थ इति कृतकधैर्याणां कृतकं हि नः सुश्लिष्टं कर्तुं पार्यत इति। तत्राधिक्यमेव भवति तत एव हि कुशलाः कृतकतां विदुः। अत्यादरवदौत्सुक्येन सम्यगन्वितो य एव। शृङ्गारभेदस्तत्रैव विप्रलम्भ इति यावत्। स्वच्छन्दगमन इति कार्येण विना क्रीडाचङ्क्रमणे[1]। अधिकले इत्यधिशब्दोऽधिकार्थः। अधिकलामिति केचित्। आधिक्यं प्रकर्षेण[2] चतुःस्वरूपेण संख्या चैतत्[3] प्लुतस्य विरामस्य च स्वरू-

1 ड - चतुर्थैककलं ढ - चतुर्थ्यैकक 2 ड - स्यात्तथापिकलं 3 ड - अथवान्तरं 4 चछ यांद्वौ श्लोकौ न विद्येते 5 ड - विकला 6 न - मध्यमे कलिकं 7 श्लोकार्धं भमयोरेव वर्तते 8 ड - विक्षते 9 चछ योरेव।

1 चंक्रमेण 2 प्रकर्षौ 3 क - चेतनप्लुतस्य ख - चैतदप्लुतस्य।

[1]पुनश्चिन्तान्विते चैव गतिः कार्या चतुष्कला ।
[2]अस्वस्थकामिते चैव [3]भये वित्रासिते तथा ॥ ३६
आवेगे चैव हर्षे च कार्ये यच्च त्वरान्वितम्[4] ।
अनिष्टश्रवणे चैव [5]क्षेपे चाद्भुतदर्शने ॥ ३७
अपि चात्ययिके कार्ये दुःखिते शत्रुमार्गणे ।
[6]अपराद्धानुसरणे श्वापदानुगतौ तथा ॥ ३८

पाधिक्ये तालबोधः संख्याधिक्येन षडष्टकलादेर्विकृष्टमधिकृतं कलान्तरं परिमाणं यथा तथाभूतः पादपातो यस्याम् । अत एवैतदापानप्रसङ्गविचारणाद्वक्ष्यति—

[1]षट्कलन्तु न कर्तव्यं तथाष्टकलमेव च ।
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत् स्त्रियाः ॥ (१२-१७२) इति ।

चतुरर्धैककलमिति वचसा सप्तकस्य च निषेधेन च त्रिकलपञ्चकलादीनामभावं सूचयति । विषमाणां सपरिमाणोत्क्षेपणनिपातनात् योगात्तालविदां हि साम्यमुपनिषक्तं तच्चात्र स्फुटयति ।

एवमेतेषु षट्कलादप्यधिकं मानं, तथा च तपःशान्तानां परिक्रमे यच्चूल्ल(स)नाख्योलयः कोहलादिभिरुक्तो [2]यस्यातिविलम्बितः कालावधौ। एवं कलाधिक्यमभिधाय न्यूनत्वमप्यस्तीत्याह अस्वस्थकामितमित्यादि । अस्वस्थे प्रच्छन्नकामिते हि त्वरातिशयः, अनिष्टं यदा बान्धवादेः श्रुतं तदा [3]तदन्तिकं द्रुतगमनं, अद्भुतदर्शनविषये यदा क्षेपः प्रक्षिप्तता[4], पुनरेतन्न दुष्यत इति। अत्ययोऽतिक्रमणं शीघ्रसंपादनं प्रयोजनमस्य । यच्चाभिरुचितमवश्यकर्तव्यं च तत्त्वरया क्रियते, त्वरयान्वितं सुकार्यं अभिरुचितमेवेति विशेषः त्वरान्वित-

1 चछ योर्न विद्यतेऽर्धश्लोकः   2 न - अस्वस्थे   3 ड - भया   ढ - भय
4 ड - यच्चतुरान्विते   5 ड - कोपेर्ष्याद्भुतदर्शने   6 प - अवरुद्धानुकरणे   न - अपराद्धानुकरणे ।

I षट्कलस्तु   2 यस्यातिविलम्बिताकालापधामाधिक्यं विधाय   3 तद्न्त्रिकं
4 क्षिपता   5 अभिकुपितम् ।

[1]एतेष्वेवं गतिं प्राज्ञो [2]विकलां संप्रयोजयेत्।
[3]उत्तमानां गतिर्या तु न तां मध्येषु योजयेत्॥ ३९
[4]या गतिर्मध्यमानां तु न तां नीचेषु योजयेत्[5]।

---

मिति। इयता यद्यपि सर्वं लभ्यते तथापि कविनटव्युत्पादनाय प्रपञ्चः। अपराधोऽभिनेयः शलोरन्य एव, यद्वा यस्यापराधः कृतो गुर्वादेस्ततश्च रुषा गतः सोऽपराद्धः। एतेष्विति एवंप्रकारेष्वन्येषु मदादिष्वपीत्यर्थः। विकलामिति विकलः कलापरिमाणं यस्याः कला अर्धकला तुर्या सा यद्यपि तत्र नादरणीयं तत्त्रिभागषड्भागादिरपि तत्र भवति। अत एव संभ्रमोत्पातरोषेषु चतुरर्धकलमित्यनेन पौनरुक्त्यं तस्याविषयत्वादस्य तु विषमभागविषयत्वात्। तथाहि मत्तगतौ शेखरकस्य खण्डकप्रयोगे हि 'गहिदुं धि' इत्येवंरूपे मात्रा तृतीये तृतीयस्य नामात्र धं धग् इत्येकः पातः, त्सुक इति द्वितीयो, धि इति तृतीयो नचैषां साम्यम्। एतेन च कलानां साम्यं न्यूनाधिकतानिरूपणेन समविषमकलाभाग*भङ्गाभिधानेन गुरुलघुद्रुतप्लुतानां स्वीकारात्तद्वैचित्र्यम्। इयमपि (भङ्गोपभङ्गविभङ्ग)प्रकारप्रस्तारसंगृहीता लक्ष्यसिद्धा भङ्गलयव्यवस्था प्रतिपाद्याक्षरतदर्थादिरूपा च धाराबन्धादिविषयाघातमार्गशब्देन प्रसिद्धा व्यवस्था स्फुटमेव दर्शिता। माभूदेवं कालप्रमाण(कलापरिमाण?)नियमाभिधानं गजस्नानीभूतमित्याह उत्तमानां गतिर्या त्विति। तुरेवार्थे [1]अन्यक्रममनेनैवेत्यर्थः। एतदुक्तं भवति—अनियमेन निदर्शितेन नियमो विप्लुतः, तथापि कलाधिक्ये षट्कलतोत्तमस्य तत्र मध्यमस्य चतुष्कलता, अधमस्य द्विक-

---

1 न - एतेष्वेव 2 ड - द्विकलां 3 अयं श्लोको जादि बान्तेषु "ज्वरार्तै" इति श्लोकात्पूर्वमेव वर्तते 4 ड - मध्यमानां गतिर्या तु 5 नं - कारयेत्।

---

1 अन्यक्रमेणैवेति

* भङ्गा द्वादश — चच्चत्पुटः, चाचपुटः, षट्पितापुत्रकः, संपक्वेष्टकः, हेला, त्रिगता, नर्कुटः, नर्कुटी, खञ्जकः, खञ्जिका, आक्रीडिता, विलम्बिता च। उपभङ्गाः षट्— कुटिला, आक्षिप्तिका, त्र्यश्रा, चतुरश्रा, चटुला, संयुक्तिका च। विभङ्गाः विशेषः, माला, सुभद्रं, संगतं च। लयतालानां भङ्गप्रस्तारद्वारेण यद्यवधिर्न स्यात्, तेषां ध्रुवातालेतिप्रसिद्धाश्चत्वारिंशत् कोहलोक्ता गतिपरिक्रमे विनियुज्यन्ते। ध्रुवातालानामुदाहरणानि विक्रमोर्वश्यादौ द्रष्टव्यानि, तुम्बुरुदत्तानि तालाध्यायमुद्रणावसरे सूचयिष्यामः।

गतिः शृङ्गारिणी कार्या [1]स्वस्थकामितसंभवा ॥ ४०
दूतीदर्शनमार्गस्तु[2] प्रविशेत्पूर्वमण्डलम् ।
[3]सूचया चाप्यभिनयं कुर्यादर्थसमाश्रयम्[4] ॥ ४१
[5]हृद्यैर्वस्त्रैस्तथा गन्धैर्धूपैश्चूर्णैश्च भूषितः[6] ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ४२
गच्छेत्सललितैः पादैरतिक्रान्तस्थितैस्तथा[7] ।
तथा सौष्ठवसंयुक्तैर्लयताळवशानुगैः[8] ॥ ४३
पादयोरनुगौ [9]चापि हस्तौ कार्यौ प्रयोक्तृभिः ।
[[10]उत्क्षिप्य हस्तं पातेन पादयोश्च विपर्ययात् ॥] ४४

लता । यत्र न्यूनकलमुक्तं तत्राप्युत्तमस्य कला, मध्यमस्यार्धकला, अधमस्य कलातुर्यभाग इति कथं विप्लवः ।

एवं [1]प्रकृतिभेदेन गतिमभिधाय रसविपर्येण दर्शयितुं प्रथमं पुरुषार्थोपयोगिरसविषयाणि निरूपयन् प्राधान्याच्च शृङ्गारे तावदाह गतिः शृङ्गारिणीत्यादि । स्वस्थकामितमप्रच्छन्नम् । अर्थसमाश्रये[2] सिद्धे सूचायाः पुनर्वचनं, हृद्यस्य पदार्थस्य पर्यालोचनं सातिशयं चमत्कारकारीति निरूपयितुं तत्र चर्वितचर्वणवस्तुनः पुनः कंचिदपि भागमत्यजन् सूचां[3] शृङ्गारे कुर्यादिति दर्शयति । [4]युद्धवीरादौ हि प्रधानानुसंधानमेवोचितं[5] तन्मध्यपतितानां कार्यान्तराणामपर्यालोचनीयत्वात्[6], पर्यालोचने आचार्यं मातुलान् भ्रातॄन् स्वजनमित्याद्यापत्तेः, येऽपि चान्तरमार्गा इत्यतत्त्यान् [7]नृत्ते सूच्यान् परिहर्तुमित्यर्थस-

1 ज - स्वस्थाकामित प - स्वस्थकामित्व 2 प - मार्गेण 3 छ - सूचया चाभिनयनं प - सूचया चाभिगमनं 4 न - अर्थस्य संश्रयम् ढ - समाश्रयाम् 5 ड - हृद्यैर्गन्धैस्तथा वस्त्रैरलंकारैश्च भूषितः 6 ढ - भूषितम् प - योजितः 7 क - अतिक्रान्तैः स्थितैस्तथा न - उत्थितैरथ 8 ज - समन्वितै 9 ड - हस्तौ नित्यं कार्यं ढ - हस्तौ नित्यं कार्यौ 10 ड - उत्क्षिप्तः सह पादने पतनेनविपर्ययः

1 प्रकृतेर्भेदेन 2 अर्थसमाश्रयत्वे 3 सूच्या 4 अर्थवीरादौ 5 मोहोचितं 6 अपर्यालोचितत्वात् 7 नृत्तसूचाम् ।

प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ।
[1]विसर्जितजनः त्रस्तस्तथा दूतीसहायवान् ॥ ४५
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः[2] ।
वेलासदृशवस्त्रैश्च[3] सह[4] दूत्या शनैस्तथा[5] ॥ ४६
व्रजेत्प्रच्छन्नकामस्तु पादैर्निःशब्दमन्दगैः ।
[6]शब्दशङ्क्युत्सुकश्च स्यादवलोकनतत्परः ॥ ४७
वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ।

---

माश्रयमित्यसत् । सापि हि निरर्थिका सूचैव हि कथं स्यात् । सूचातोऽपि चानन्तरमस्य प्रकृतां गतिमाह । नृत्तकन्यादि शोभनो गन्धः सुगन्धः नानापुष्पैः सहायानामिति समासान्ताभावः । सललितैः सविलासैः । सौष्ठवेनाङ्गचातुरश्रयेण युक्तैः, लयो विलम्बितं तालं चतुरश्रादि भूयः पुनः सामान्येन युक्ताप्युत्तमगतिः पुनर्विशेषतां निरूप्यत इति भावः । प्रच्छन्नं कृत्वा कामितं यत्र शृङ्गारे सागरिकादाविव वत्सराजादेः, तदन्यो वा सीतादाविव पौलस्त्यप्रभृतेस्तु, वेपमानदेहः । स्खलन्नित्यादिकलातुर्यांशानुत्सुक इत्यादिना कार्ये निर्वाणदीपः शब्दाशङ्कीत्यादिना खण्डितां कलां सूचयन् मिश्रप्रयोगं गतिमत्राह । अथैवंविधकामिविषयमेव *सुभद्राभिधानं ध्रुवातालमाहुः कोहलाद्याः । तस्य हि प्रस्तारो द्रुतलघुमिश्रः । वेलातुल्यवस्त्रा इति तथा चन्द्रालोके सितवस्त्रावगुण्ठितो घनसारपरागपुञ्जमञ्जुगात्रो मुक्ताप्रायप्रचुराभरणो वस्त्राद्युपलक्षणम् । विप्रलम्भे तु शृङ्गारिण्येत्र करुणव्यामिश्रा गतिर्व्यभि-

---

1 ज - विसर्जितगतिस्तत्र तथा दूतसहायवान् 2 ज - विभूषितैः 3 ड - वस्त्रं च 4 ज - तथा 5 ढ - सहायवान् 6 ड शब्दशक्त्युत्सुकश्च ।

---

* सुभद्रमित्युपभङ्गविशेषः । तल्लक्षणं तु कोहलमते "—नवमः पञ्चमश्चैव षष्ठः पुनरिहेष्यते । शेषास्तु गुरवः सप्त सुभद्रं रौद्रवीरयोः । त्रिमात्रान्ते प्रभावत्यां टक्करागस्य भाषया" ॥ इति त्रिमात्रान्तविरामं प्रभावतीनामकद्विपदीच्छन्दः प्रयुक्तं च सुभद्रम् ।

रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति ॥ ४८

एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।

नेपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ॥ ४९

तथा [1]स्वभावजश्चैव त्रिधा रौद्रः प्रकल्पितः[2] ।

रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ॥ ५०

तथा पिशितहस्तश्च [3]रौद्रो नेपथ्यजस्तु सः ।

बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ॥ ५१

स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः ।

रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः ॥ ५२

रूक्षो निर्भर्त्सनपरो रौद्रे सोऽथ स्वभावजः ।

चतुस्तालान्तरोत्क्षिप्तैः [4]पादैस्त्वन्तरपातितैः ॥ ५३

---

चारिसंवादिन्यभिप्रेत्य पृथङ्नोक्ता। एवं विषयाभिलाषे प्राणे शृङ्गारेऽभिधाय तद्रूप एव रौद्रे गतिं निरूपयति रौद्रे रसे त्विति । दैत्यादिप्रयुक्तं यदुक्तं तत्केनाशयेनेति शङ्काशमनायाह एक एवेति। ननु किं तेषां क्रोधेन विनापि रौद्रता, ओमिति ब्रूमः । कथमिति चेत् रसाध्यायोक्तन्यायेनानु रसयितुमाह नेपथ्यरौद्र इत्यादि स्वभाव इत्यन्तम् । एवमेक एव रसस्तेषामिति कथितं, रसाध्याये चैतत्प्रपञ्चितम् । चतुस्तालान्तरोत्क्षिप्तैरिति तालान्तरपातित्वं द्वितीयतालान्तरालापेक्षयेति केचित्। उपाध्यायास्तु—तालशब्देनात्र कालमानमुक्तं न तु देशमानं, तेन यावता कालेनोत्क्षेपस्ततो न्यूनेन पतनं—इति । एतदनु

---

1 छ - स्वभावतः प - स्वभावजश्चेति 2 ड - प्रकीर्तितः 3 ड - रौद्रनेपथ्यजस्तु 4 न - पादैस्त्वन्तरपातितैः ।

गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः ॥ ५४

[1]अहृद्या तु मही यत्र श्मशानरणकश्मला ।
गतिं तत्र प्रयुञ्जीत [2]बीभत्साभिनयं प्रति ॥ ५५
क्वचिदासन्नपतितै[3]र्विकृष्टपतितैः क्वचित् ।
एलकाक्रीडितैः पादैरुपर्युपरिपातितैः ॥ ५६
तेषामेवानुगैर्हस्तैर्बीभत्से गतिरुच्यते[4] ।
अथ वीरे च कर्तव्या[5] [6]पादविक्षेपसंयुता ॥ ५७

---

प्रकृतिसन्धिसंरम्भत्वं चाभिदधता विषमगतित्वमेषामनुज्ञातम् । तथा च कोहलमुखाः कलातदर्धद्वयलक्षणेन *नर्तनकोत्फुल्लकादिना रौद्रादौ परिक्रममाहुः । तद्विधा इति भीमसेनादयः अनेन युद्धवीरेऽप्येषैव गतिरिति सूचयति ।

अथ रौद्रप्राणोभयविवक्षामध्ये[1] पुरुषार्थप्राणायातबीभत्साश्रयां गतिमाह अहृद्यात्विति । श्मशानरूपा युद्धपतितकबन्धप्रभृतिविराचिता[2] अत एव रणेन कश्मला जुगुप्सिता । आसन्नपतितत्वेन कलार्धतुर्यांशत्वादि, विकृष्टपतितत्वेन कलासार्धकलादि सूचयति ।

अथ वीरगतिमाह अथ वीरे चेति । विस्तारेण क्षेप इति स्यन्दितापस्यन्दितादेर्ग्रहणम् । तत्र च कलयार्धकलादि च प्रयोगः । तत एवोल्लासनिकाख्यं §

---

1 न - आहीर्णा 2 ढ - बीभत्सानुजयं 3 न - चकितैः 4 ङ - इष्यते
5 ङ - प्रकर्तव्या 6 ङ - पद ।

---

1 विवक्षयमर्थे 2 बन्धविहृतिपरिचिता

* नर्तनकस्य लक्षणं तिस्रोऽथ यतयः कार्या विरामोऽन्ते द्रुतैस्त्रिभिः । लयो नर्तनकः प्रोक्तः सोऽस्यात्र द्विपदी भवेत् । विजयारम्भहर्षेषु मत्तोन्मत्तप्रमत्तके । नर्तनकः प्रयोक्तव्यष्टक्करागस्य भाषया॥ इति । उत्फुल्लकस्य तु द्वौ द्रुतौ लघुरेकश्च चतस्रो यतयः स्मृताः । छिन्नकस्य विरामोऽन्ते लयमुत्फुल्लकं विदुः । उत्तमाधममध्यानां कामोन्मादविलासयोः । परिक्रमे पञ्चमेन तोटकं सचतुष्टयम् । मध्यमोत्तमपात्राणां प्रफुल्लकमिहेष्यते । छन्दश्चानुष्पदा चात्र गुरुमध्यविवर्जिता ॥

§ उल्लासनाख्यलयतालस्य लक्षणं कोहलमते—तोटकस्यैव यः पादः द्रुतद्वयलयत्रयः । मालिनी द्विपदा चात्र टक्करागस्य भाषया । अन्योन्यकार्ये संसर्गे मदे गर्वे प्रहर्षिते । उल्लसना प्रयोक्तव्या सर्वदा लयवेदिभिः ॥

[1]द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ।
पार्श्वक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च ॥ ५७
कलाकालगतैः पादैरावेगे योजयेद्गतिम् ।
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ॥ ५८
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ।
विस्मये चैव हर्षे च विक्षिप्तपदविक्रमा ॥ ५९
आसाद्य तु रसं हास्यमेतच्चान्यं च[2] योजयेत् ।

---

तालमतबाहुर्लक्ष्यविदः । द्रुतेन प्रचारेणाधिष्ठानं गन्तव्ये देशे यस्यामिति । मल्लु-घटीत्र्यश्रादि विकृष्टपतितत्वे कलासार्धलघुद्रुतप्रचारं सूचितमनेन वीरे रौद्रे वा प्रवेगस्य स्पर्शभावत्वात् । तत्र गतिमाह कलाकालगतैरिति । पादैरिति बहुवचनेन त्रयः पादपाता गृह्यन्ते[1] । तेन कलया कालेन च सन्निधानात् तालगतैव-गतिरिति लघुपातनं येषा, अथ वैको लघुपातो द्वावन्योन्यद्रुतपातौ कलामात्रं च विराममित्येवम् । उत्फुल्लकपरिक्रमः स चोभयोर्वीररौद्रयोः क्रमः । उत्तमाना-मिति । [2]ननु बीभत्सस्यैवोत्तमविषयतैवं? केनैतदुपदिष्टं भवतः ? । पुरुषार्थसाधनो बीभत्सः उत्तमेष्वेवैतदभिहितरसविषयव्यभिचारियोगे तु[3] । मध्यमानां गतिमाह विस्मये चेति । चकारादावेगादौ व्यभिचार्यन्तरेष्वपि । विक्षिप्तः इतस्ततो गतो व्याकुलप्रायो लघुद्रुतबहुलः परिक्रमो यस्य । तथा विस्मय एव व्यभिचारिरूपे स्थायिनि अद्भुतरसरूपे मध्यमानाम् । पुनरेवामिति पुनर्ग्रहणा-दुत्तमानामद्भुतेऽपि स्वच्छन्दगतिरेव पूर्वोक्तेति दर्शयति । केवलं तत्र [4]विस्मयो वदन उत्पाद्यो मुखरागे[5] । एतच्चेति परं हास्यं स्मिताद्यतिहसितपर्यन्तं, यदोत्त मानां स्वस्थगतिरेव तदा मध्याधमानान्तु अपहसितातिहसितयोर्विक्षिप्तगतित्व-

---

1 ढ - द्रुता प्रहरणाविद्धा   2 ज - एताश्चान्याश्च ।

---

1 दृश्यन्ते   2 न तु बीभत्सस्य नोत्तम   3 योगिगत   4 विस्मयोचितं
5 मुख्यानि ।

पुनश्च करुणे कार्या गतिः [1]स्थितपदैरथ ॥ ६०
[2]बाष्पाम्बुरुद्धनयनः सन्नगात्रस्तथैव च ।
उत्क्षिप्तपातितकरस्तथा [3]सस्वनरोदनः ॥ ६१
गच्छेत्तथाध्यर्धिकया[4] [5]प्रत्यग्राप्रियसंश्रये ।
एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव च ॥ ६२
उत्तमानां तु कर्तव्या [6]सधैर्या भाष्पसंगता ।
निःश्वासैरायतोत्सृष्टै[7]स्तथैवोर्ध्वनिरीक्षितैः ॥ ६३
न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ।
[8]मध्यानामपि सत्त्वज्ञा गतिर्योज्या विधानतः ॥ ६४
[9]उरःपातहतोत्साहः शोकव्यामूढचेतनः[10] ।

मेव। अन्यच्चेति तावद्विदूषकगतौ वक्ष्यमाणम्, एवं प्रसङ्गाद् द्रुतहास्ययोग्यगतिरभिहिता[1]। करुणे तूच्यते पुनश्च करुण इति । "ज्वरार्ते चे"त्यादिश्लोकेन [2]यद्यपि-स्तोकगतिरुक्ता तथापि यद्वक्ष्यत इति पुनश्शब्दार्थः । स्थितपदैः विलम्बितैः। आयतं दीर्घं कृत्वा उत्सृष्टैस्त्यक्तैः। ऊर्ध्वनिरीक्षणैःदेवोपालम्भसूचकैः। न प्रमाणं तथाविधमिति नात्र सर्वथा प्रमाणाभावःअपि त्वनियन्त्रितमेव पातात्मकं प्रमाणम् । अत एवात्र विलम्बितलयेन लघुत्रयेण द्रुतलयेन गुरुप्लुतमात्रेण च विरामेण जम्भटिकाख्यो* लयः कोहलेन दर्शितः । उरसः पात आभुग्नत्वात् ।

1 ड - स्थिरपदैः 2 ज - बाष्पाम्बुनद्ध 3 ड - सस्वर 4 ड - तथाविद्धः कया 5 ड - प्रत्यग्रगति न - प्रत्यग्राप्रिय 6 ड - सधैर्यं 7 ड - उत्कृष्टैः 8 नडजझ - आदर्शेषु श्लोकार्धं न वर्तते 9 ज - नतः पाद ड - उरःपाद 10 ज - शोकव्याकुलचेतसः ड - शोकव्याकुलचेतनः ।

1 धृतहास्यत्रिभिरभिहिता 2 राजार्कैति 3 यद्यस्तोक ।

* जम्भटिकालक्षणमुक्तं तुम्बुरुणा—आदावृजुद्वयं कृत्वा द्विद्रुतान्तविरामिकम् । पुनरप्येवमेव स्याज्जम्भटी नाम कीर्तिता । करुणारसपात्रेषु जम्भटीं संप्रयोजयेत् ॥ तदेव कोहलमते—"लघुद्वयं विधायाथ द्वौ द्रुतौ सविरामकौ। पुनरप्येवमेव स्याज्जम्भटीपात इष्यते । मरणे पतने चैवाप्रियस्य श्रवणे तथा । जम्भेटिका सदा कार्या ह्युत्तमाधममध्यमैः । गुरुद्वया चतुर्मात्रा गुरुरन्ते व्यवस्थितः । ककुभेन प्रयोक्तव्या जम्भटी लयकोविदैः ॥" जम्भटी, जम्भेटी, जम्भटिका, जम्भेटिका च पर्यायवाचकाः.

नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ॥ ६५
गाढप्रहारे [1]कार्या च [2]शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिश्चूर्णपदैरथ ॥ ६६
शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य च[3] ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥ ६७
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य [4]कुब्जीभूतस्तथैव च ॥ ६८
दन्तोष्ठस्फुरणं चैव चिबुकस्य [5]प्रकम्पनम् ।
कार्यं शनैश्च[6] कर्तव्यं शीताभिनयने गतौ ॥ ६९
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ ७०

---

करुणप्रसङ्गात्प्रहारे गतिमाह । चूर्णानि परिमितोत्क्षिप्तानि अधिकपतितानि पादानि, [1]तेनाध्यर्धिकातोऽल्यान्तरंस्यात् । करुणे रसे दारिद्र्यप्रभिभवस्त्वत्र [2]शीतः वर्षभवः संभाव्यत इति । नावगतिमाह शीतेन चेति । अथेत्यनेन मध्यमोत्तमानामनुभावन्यूनभावेन [3]शीतादिगतिं सूचयति । तेषामिति पिण्डीकृतानां गात्राणां, चकारेण कम्पनं सङ्कोचनं समुच्चीयते । एवकारेण सौष्ठव चातुरश्र्यादि निरस्यते । कराविति कटिपातरूपावित्यर्थः । गात्राणि पिण्डीकृत्य करौ वक्षसि च कृत्वा या गतिः लोके तस्याभिगमने [4]योऽयं शीताभिनयस्तत्र कर्तव्यः । प्रयोक्तृभिर्नटैर्गात्रकम्पनं[5] कुब्जीभूतो देह इत्यादि कार्यमिति पदसङ्गतिः । एवंकरुणे तत्प्रसङ्गेन चान्यत्रापि गतिमभिधाय भयानके कथयति येचान्य इति । येषामुत्तमत्वं [6]कुलाद्यौचित्यात् । अथ सत्त्वविहीनाः ।

---

1 ड - कार्यै 2 ड - शिथिलांस 3 ड - गतिर्घूर्णपदैः 4 ड - अभिहतस्य
5 द - कुब्जीभूतः 6 ड - तु कम्पनम् न - च कम्पनम् 7 न - शनैस्तु ।

1 तेनाध्यर्द्धिकातो 2 शीतभावः 3 गीतादि 4 यो भावः क्रियते शीताभिनयः 5 नात्र कम्पनम् 6 क - कलाद्यौचित्यात् ख - कुलायौचित्यात् ।

विस्फारिते चले नेत्रे विधुतं[1] च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकितैः[2] ॥ ७१
द्रुतैश्चूर्णपदैश्चैव[3] बध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठः स्खलितं व्रजेत् ॥ ७२
एषानुसरणे[4] कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं रवम्[5] ॥ ७३
एषा स्त्रीणां प्रयोक्तव्या[6] नृणामाक्षिप्तविक्रमा[7] ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ ७४
एलकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् ॥ ७५
वणिजां सचिवानां च गतिः कार्या स्वभावजा ।

[1]तद्यथा— विराटपुत्र उत्तरः । द्रुतैरित्यनेन *धारालयादिः कोहलोक्तः सूचितः । अनुसरण इति शत्रोः पृष्ठतः आगमनमित्यर्थः । नृणां पुनराक्षिप्तविक्रमं यत्तनोपाहृतं मध्येमध्ये कृतधैर्यं यस्यामित्यर्थः । तेन मध्ये गुरुलघुपादपाता अपि । तदाह—क्वचिदासन्नपतितैरित्यादि ।

अथ शान्तरसेगतिर्वक्तव्या । सत्त्वप्राधान्येन तथा प्रयोगसौन्दर्यमावहति, अतोऽन्तस्संस्काररूपता येषां वणिक्प्रभृतीनामस्ति "वीरप्रशान्ता वणिज" इति वचनाद्यतिप्रभृतयोऽपि च शान्तरसप्रधानाः ये नाटकादौ प्रसक्ताः भवन्ति तेषामुभयेषामपि गतिमाह वणिजामित्यादिना । सचिवाः अमात्याः । स्वभावशब्देन तत्र तत्रानाविष्टमेव रूपमाह । नैष्ठिका-

1 ङ - विधातं 2 ङ - विलोकनैः 3 घूर्णपदैश्चैव 4 ङ - अनुकरणे 5 ढ - विकृतस्वरम् न - विकृतं रवम् 6 ङ - प्रकर्तव्या 7 नृणांच ।

1 ख - सत्त्ववादिना 2 क - अनाविष्टं भावाविष्टमेव ।

* धारालक्षणं कोहलमते आदावष्टौ द्रुता ज्ञेया अन्ते चापि द्रुताष्टकम् । विरामरहिता धारा अधमेषु द्रुते लये ।

[कृत्वा नाभितटे [1]हस्तमुत्तानं खटकामुखम् ॥ ७६
आद्यं चारालमुत्तानं[2] कुर्यात्पार्श्वे [3]स्तनान्तरे ।
न निषण्णं न च स्तब्धं न चापि [4]परिवाहितम् ॥ ७७
कृत्वा गात्रं [5]तथा गच्छेत्तेन चैव क्रमेण तु । ]
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ७८
यतीनां[6] श्रमणानां च ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्ये तु नैष्ठिकं व्रतमास्थिताः ॥ ७९
[7]अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः[8] ।
[9]उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥ ८०
अचञ्चलमनाश्चैव [10]यथावल्लिङ्गमाश्रितः ।
विनीतवेषश्च भवेत्काषायवसनस्तथा ॥ ८१
प्रथमं समपादेन स्थित्वा [11]स्थानेन वै बुधः[12] ।
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत्[13] ॥ ८२
[14]प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगम्[15] ।
[16]अनिषण्णेन गात्रेण गतिं गच्छेद्व्यतिक्रमात्[17] ॥ ८३

---

नाभिमिति ब्रह्मचर्यादेव प्रवर्तिता इत्यर्थः । युगं [1]चतुरहस्तम् । उपस्थिता झटिति संस्कारप्रबोधप्रभवा स्मृतिर्यस्य । शान्तत्वादेव हि हृदयं नियम्यमेषां[2] वणिगमात्ययतिप्रभृतीनां[3] निर्जने विषयेति सन्धिबन्धमेव नित्यनिरूपणपरं यस्य ।

---

1 द - हस्तमुक्ताङ्गे 2 ङ - मुक्तानां 3 ङ - तथान्तरे 4 न - चैव 5 न - ततो 6 द - श्रवणानां न - श्रमणानां ज - श्रमणीनां 7 द - आलोल 8 न - मात्रावलोकनः 9 च - उपस्थितगतिः 10 ङ - तथालिङ्गसमाश्रितः 11 द - कृत्वा 12 ङ - बुधैः 13 ङ - प्रयोजनम् 14 न - प्रसन्नवदनं 15 द - वशानुगः 16 न - सुनिषण्णेन 17 द - गच्छेदतिक्रमात् ।

---

1 क - चतुर्हस्तं 2 क - निर्गमवेलायां 3 क - निर्गम ।

उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ८४
तथा[1] व्रतानुगावस्था अन्येषां लिङ्गिनामपि।
विभ्रान्ता चाप्युदात्ता वा विभ्रान्ता निभृतापि वा ॥
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च।
कार्या पाशुपतानां च गतिरुद्धतगामिनी ॥ ८६
अन्धकारेऽथ याने च[2] गतिः कार्या प्रयोक्तृभिः।
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः ॥ ८७

लिङ्गं जपभस्मकौपीनादि। अन्येष्विति नाममात्रवृत्तिषु तत्र तु विपर्यासो यथोचितं द्रष्टव्यः। तद्यथा, लोलं चक्षुः मनश्च, लिङ्गं पुनर्जटादि भवति, एवमन्यदुत्प्रेक्ष्यम्। व्रतानुगत्वं स्फुटयति विभ्रान्ता चेति। [1]उन्मत्तादिव्रतं हि श्रूयते आगमेषु [2]तत्तदुचितैरित्येवमेव गतिरित्यर्थः। [3]क्रमणादुत्क्रान्तं कृत्वा गतिः पाशुपतानां परमेश्वरव्रतधारिणां गतिरत्युदात्तेत्यर्थः। यदि वा परमयोग्यवस्थायां [4]नाकुलदर्शनप्रतिपन्नानामुन्मत्तव्रतमप्यस्ति, तद्विषयमेवोद्भ्रान्तत्वं गतो। एवं रसान्तरसङ्गतिरुक्ता। [5]यच्चान्यैः रौद्रानन्तरं शान्तरसाभिप्रायेण पठितं।

"[6]"रूपादित्वनिराशंसः परोपायविचिन्तकः।
चतुष्कलैर्द्विपातैश्च पादैर्भ्रान्तगतिं व्रजेत्" इति।

[7]तदनर्थमेव, एतद्ग्रन्थे[8] पुनरुक्तमपुष्कलार्थं, पुस्तके कथं दृष्टमिति स्वकल्पितमेवेत्युपेक्ष्यम्[9]" ॥

एवं रसानुसारेण गतिमुक्त्वा देशानुसारेणाप्याह। अन्धकार इति अन्धत्वेन गमन इति[10]। विसर्पितैरपक्षेपणशून्यैः। मार्गप्रदर्शिभिः मार्गान्वेषण-

1 ङ - व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः 2 ङ - अन्धयानेन।

1 क - उत्तमादि 2 क - तत्र तदुचितैरेवं 3 क - भ्रमणात् 4 कख - नाकुटिल 5 क - यस्त्वन्यैर्वीररौद्रान्तरं 6 क - रूपाद्रिसत्त्व 7 ख - तदानवमेन 8 क - तद्ग्रन्थस्य 9 ख - उत्प्रेक्ष्यम 10 ङ - इत्यर्थः।

[1]रथस्थस्यापि कर्तव्या गतिश्चूर्णपदैरथ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत्॥ ८८
धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम्।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः[2]॥ ८९
वाहनानि विचित्राणि कर्तव्यानि विभागशः।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले[3]॥ ९०
विमानस्थस्य कर्तव्या ह्येषैव स्यन्दनी गतिः।
[4]आरोढुमुद्वहेद्गात्रं किंचित्स्यादुन्मुखस्थितम्[5]॥ ९१
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम्।

चरैरित्यर्थः। कर्तव्या गतिरिति च्छेदः [1]तदाह चूर्णपदैः। समपादेन स्थानकेन [2]रथेन गतिः यस्मिन् देशे तं व्रजेत्, रथविशिष्टा वा गतिः, सामान्यके अकर्मकरभासिका शास्त्र इतिवत्। चूर्णपदैरित्यनेन *खण्डधारालयं द्रुतबहुलं गुर्वन्तं कोहलोक्तं सूचयति। कूबरं युगन्धरं, प्रतोदः प्रेषणकः, प्रग्रहो वल्गा, रथ्यानि वाहनानि तानि, प्रकृतिविभागौचित्येन विचित्राणि तुरगबलीवर्दखरोष्ट्रकानि चित्राणि लिखितानि अस्य सूतस्यैव कर्तव्यानि तच्चित्रपटं सूतस्यैव हस्ते वर्जयेदिति यावत्। चूर्णपादानां लयविशेषनिरूपणाय पुनर्ग्रहणं द्रुतैरिति[3]। रङ्गमण्डल इत्यनेनेदमाह- भवस्तुतोऽसौ[4] रथ्यामण्डल एव गतिक्रियां करोति तथात्र सर्वं तच्चित्रं[5] तद्रथाकृति कर्तव्यं तत्त्वनुगतपदमात्रमेव, येन रथो यातीति प्रतीयते। एवं सर्वत्र, अत एवाह विमानस्थस्यापीति। दिव्यस्याकाशगामिनोऽपि पुष्पकादेरित्यर्थः। अथ रथप्रसङ्गादुद्धृतं क्रियान्तरमप्याह आरोढुमिति। उद्वहेदूर्ध्वं प्रापयेत्। वैपरीत्येन अधोमुखत्वेन गात्राधोनयनेन

1 ड - अधरस्थस्यापि 2 ड - प्रग्रहाकुलम् 3 न - रङ्गमण्डलम् 4 ड - आरूढं 5 ड - स्थितः।

1 क - तामाह 2 ख - अक्रमेन 3 ख - पुनर्ग्रहद्युरिति 4 ख - रथ्या 5 ख - तच्छत्रम्।

* खण्डधाराया लक्षणं—"वेदस्त्रिदाः खण्डधारा"

अधोऽवलोकनैश्चैव मण्डलावर्तनेन च ॥ ९२

आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः ।

स्थानेन समपादेन तथा चूर्णपदैरपि ॥ ९३

व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद्गतिम् ।

ऋज्वायतोन्नतनतैः कुटिलावर्तितैरथ ॥ ९४

भ्रश्यतश्च तथाकाशादपविद्धभुजा गतिः ।

विकीर्णवसना[1] चैव तथा भूगतलोचना ॥ ९५

प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ।

आरोहणावतरणं कार्यमर्थवशात्तथा[2] ॥ ९६

प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।

उद्वाह्य गात्रं पादं च न्यसेत्सोपानपङ्क्तिषु[3] ॥ ९७

[4]तथावतरणं चैव गात्रमस्यैव कारयेत्[5] ।

प्रासादे [6]यन्मया प्रोक्तः प्रतारः केवलो भवेत् ॥ ९८

---

चेत्यर्थः । अथाकाशगतिं विमानप्रसङ्गादाह - अधोऽवलोकनेनेति। मण्डलावर्तं-परिवर्तुलगतिरितिकेचित् । आकाशीयानां चारीमण्डलानां पुनःपुनरावर्तनेनेति तूपाध्यायाः। एतामिति वक्ष्यमाणां कारयेन्नाट्याचार्यो नटैः। ऋजुभिः सरळ-ललितजङ्घैः। अत एवायतैरुत्क्षिप्तपातितैः, कुटिलया गत्या आवर्तितैः भ्रमितैः। उन्नतनतैरित्यन्ये पठन्ति, उत्क्षेपकाले उन्नतैः पातनकाले तु नतैरिति व्याच-क्षते । [2]भ्रश्यत इत्यबुद्धिपूर्वकं पतत इत्यर्थः । अपविद्धौ त्वरितडोलाकारपातौ भुजौ यस्याम्। अर्थवशादिति स्फुटयति प्रतार इति । तटादवतीर्य ततः शरीरं

---

1 ढ - वदना 2 ङ - वशाद्बुधैः 3 ङ - सोपाने निक्षिपेन्नरः 4 ङ - अथा-वतरणं 5 न - गात्रमानस्य रेचयेत 6 ङ - या मया प्रोक्ता प्रतारे केवलं भवेत् ।

---

1 ख - नाट्याचार्यो......सरल 2 ख - दृश्यतः ।

जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ।
तोयेऽल्पे वसनोत्कर्षः[1] प्राज्ये पाणिविकर्षणैः ॥ ९९
किंचिन्नताग्रकाया तु प्रतारे गतिरिष्यते ।
प्रसार्य बाहुमेकैकं मुहुर्वारिविकर्षणैः[2] ॥ १००
तिर्यक्प्रसारिता चैव ह्रियमाणा च वारिणा[3] ।
अशेषाङ्गाकुला[4] धूतवदना गतिरिष्यते ॥ १०१
नौस्थस्यापि प्रयोक्तव्या द्रुतैश्चूर्णपदैर्गतिः[5] ।
अतिक्रान्तेन पादेन द्वितीयोनञ्चितेन च ॥ १०२
प्रासादारोहणे यत्तु तदेवाद्रिषु कारयेत् ।
केवलं [6]तच्च विक्षेपमङ्घ्रिष्वङ्गं[7] भवेदथ ॥ १०३
द्रुमे चारोहणं कार्यमतिक्रान्तैः स्थितैः[8] पदैः ।

---

प्रयोगेन तारयेत् । प्रतारणमिति [1] एतत्प्रकारं व्याचष्टे । जलप्रमाणापेक्षा त्विति । एतत्स्फुटयति तोयेऽल्प इति । उत्कर्षः ऊर्ध्वं नयनं,प्राज्ये भूयसि जले यः प्रचारस्तत्र पाणिविचित्रकर्षणेन पताकसर्पशीर्षकादिनोपलक्षितगतिरिति संबन्धः । अबुद्धिपूर्वकन्तु जलेन नीयमानस्य गतिमाह प्रसार्येति । एकैकमिति पर्यायेणेत्यर्थः । अशेषेऽङ्गे आकुलत्वं यस्यां गतौ तथा आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तुलयत्, अस्वतन्त्रत्वाच्चैवं भवति । कैश्चित्तु पर्यायशः पार्श्वत्व-मुक्तं, तदसत् । परिवाहितं ह्येतत् बुद्धिपूर्वके च जलप्रतरणे तत्स्यात्, नत्विह । जलप्रसङ्गात् नौगतिमाह—नौस्थस्येति । एवं प्रसङ्गान्नौगतिमुक्त्वा प्रकृतमेवा-रोहणमनुसन्धत्ते । प्रासादारोहणमिति । ननु वृक्षप्रासादादि तत्र किं रङ्गमण्डले

---

1 न - उत्कर्षैः 2 ड - बाहुविकर्षणैः 3 ढ - वारिणः 4 ड - पूर 5 च - द्रुतैस्तूर्णैः पदैर्गतैः 6 ड - तूर्ध्वं 7 न - अङ्गे 8 ड - अतिक्रान्तोत्थितैः ।

---

1 ख - एत्वप्रकारं क - एत्चप्रचार ।

सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥ १०४
एतदेवावतरणं सरित्स्वपि[1] नियोजयेत् । *
अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् ॥ १०५
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ।
[2]कस्मान्मृत इति प्रोक्ते किं मर्तव्यं प्रयोक्तृभिः ॥
अङ्कुशग्रहणान्नागं खलीनग्रहणाद्धयम् ।
[3]प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि ॥ १०७
[4]अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
तथा चूर्णपदैश्चित्रैरुपर्युपरि पातितैः ॥ १०८
[5]पन्नगानां गतिः कार्या पादैः स्वस्तिकसंयुतैः[6] ।
पार्श्वक्रान्तपदं कृत्वा[7] स्वस्तिकं रेचयेदिह[8] ॥ १०९

रथचित्रपटादिन्यायेन दर्शनीयं, नेत्याह संज्ञामात्रेणेति । संज्ञा उक्तरूपारोहणाद्यभिनयः ।

प्रसङ्गादन्यत्राप्यभिनयं दर्शयति । अङ्कुशग्रहणादित्यादि । तेन चित्रपटादिवियोगेऽपि रथगमनाद्यभिनयनं न युक्तम् । सौकर्यात्तु तत्करणमपि भवत्विति भावः । स्वस्तिकसंयुतैरित्युक्तमेव विभजति पार्श्वक्रान्तमिति । एवं देशापेक्षया गतिरुक्ता । नागादिप्रसङ्गात्तु सर्पगतिरपि ।

1 न - सरस्स्वपि

* "अतिक्रान्तेन......नियोजयेत्" (१०२-४) इति त्रयः श्लोकाः जादिवान्तेष्वादर्शेषु "तथाऽवतरणं चैव" (९७) इति श्लोकार्धस्य पश्चात् "प्रासादे यन्मया" इति श्लोकार्धस्य पूर्वं वर्तन्ते ।

2 च - तस्मान्मृत इति 3 न - प्रतोदग्रहणाद्यानं 4 द - आदर्शेऽयं श्लोको न विद्यते 5 द - अन्तस्थानां 6 च - संश्रितैः 7 ड - कुर्यात् 8 न - योजयेदिह ।

विटस्यापि च कर्तव्या गतिर्ललितविभ्रमा[1] ।
पादैराकुञ्चितैः[2] [3]किंचित्तालाभ्यन्तरपातितैः ॥ ११०
स्वसौष्ठवसमायुक्तौ[4] तथा [5]हस्तौ पदानुगौ ।
खटकावर्धमानौ तु[6] कृत्वा विटगतिं व्रजेत् ॥ १११
कञ्चुकीयस्य कर्तव्या वयोऽवस्थाविशेषतः ।
[7]अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् ॥ ११२
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तथा ।
[8]समुद्वहन्निवाङ्गानि पङ्कलग्न इव व्रजेत्[9] ॥ ११३
अथ वृद्धस्य कर्तव्या [10]गतिः कम्पितदेहिका[11] ।
[12]विष्कम्भनकृतप्राणा[13] मन्दोत्क्षिप्तपदक्रमा ॥ ११४

अथावस्थाभेदेन गतिं निरूपयन् विटावस्थायां तावदाह विटस्यापि चेति । स्वं प्रकृत्युचितं यत्सौष्ठवम् । कञ्चुकमिति तन्नेपथ्योचिता वृत्तिः तदिच्छत्यात्मन इति "क्यचि च" कञ्चुकीयः । वयोऽवस्थाविशेषत इति यदुक्तं तद्विभजत्येवामिति वक्ष्यमाणक्रमेण । विष्कम्भः स्थैर्यं तद्येषामिति मत्वर्थीयोऽकारः। समुद्वहन्निति यत्नेनाकर्षन् ।

एतदेव दृष्टान्तेन शिक्षयति पङ्कलग्न इवेति । अत एव * खञ्जकहेलाविलम्बितलघुमयस्य कोहलोक्तस्य सङ्ग्रहः । विष्कंभने यष्ट्यादिके कृतं सम-

1 ङ - विक्रमा 2 न - आकुञ्चिता 3 ङ केचित् ढ - कैश्चित् 4 ङ - पदायुक्तौ 5 न - हस्त 6 द - च 7 ढ - आवृद्धस्य 8 ङ - समुद्वहन्स्तथाङ्गानि न - समुद्वहंश्च गात्राणि 9 ढ - व्रजन् 10 न - द्रुतः 11 न - देहिता 12 ङ - विष्टम्भन 13 ढ - कृताप्राण ।

* खञ्जकस्य लक्षणं तुम्बुरुणोक्तं यथा—प्रथमं कुटिलं कृत्वा घनमेकं द्रुतद्वयम् - गुर्वन्तं खञ्जकं नाम शम्यातालो निरन्तरः॥ हेलायास्तु तेनैव—चत्वारोऽथ नखाः पूर्वं द्विवक्रं तदनन्तरम्। पुनरप्येवमेव स्याच्छम्यातालो निरन्तरः । पादैर्द्वादशाभिर्युक्तः । कार्याः शेषाश्चतुर्गुणम्। चच्चत्पुटस्य भेदोऽयं हेलाया विधिरुच्यते । वेश्याद्विजवधूनां च क्रीडारम्यकुटुम्बिनाम् । भवनप्रतिहाराणां योजयेत्तत्परिक्रमे॥ कोहलमते तु तस्याः

[1]कृशस्यापि हि कर्तव्या गतिर्मन्दपरिक्रमा ।
[2]व्याधिग्रस्ते ज्वरार्ते च तपःश्रान्ते क्षुधान्विते ॥ ११५
[3]विष्कम्भनकृतप्राणः[4] कृशः क्षामोदरस्तथा ।
[5]क्षामस्वरकपोलश्च दीननेत्रस्तथैव च ॥ ११६
शनैरुत्क्षेपणं चैव कर्तव्यं हस्तपादयोः ।
कम्पनं चैव गात्राणां [6]क्लेशनं च तथैव हि[7] ॥ ११७
[8]दूराध्वानं गतस्यापि गतिर्मन्दपरिक्रमा ।
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम् ॥ ११८
स्थूलस्यापि हि[9] कर्तव्या गतिर्देहानुकर्षिणी ।
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा ॥ ११९
[10]विष्कम्भगामी च भवेन्निश्वासबहुलस्तथा ।
श्रमस्वेदाभिभूतश्च व्रजेच्चूर्णपदैस्तथा ॥ १२०
मत्तानां तु गतिः कार्या मदे[11] तरुणमध्यमे ।

---

न्वितं प्राणो बलं येन । विकूणनं सङ्कोचनं विमर्दनमिति मिश्रपरिहारार्थम् । स्थूलस्येति महाकायस्य श्रमकृत्स्वेदः ।

---

1 प - कृशस्याप्यभिनेयावै 2 द - व्याधिग्रस्तस्य च तथा तपःशान्तस्य चैवहि 3 द - विष्टम्भन 4 न - कृतःप्राणः 5 द - क्षामस्वरश्चैवभवेत् 6 द - क्लेशेन च 7 ड - च 8 द - दूताध्वगस्यापि गतिःशनैः 9 ड - तु 10 द - विष्टम्भ 11 द - पदे ड - मन्दे ।

---

"चत्वारो लघवः पूर्वमन्ते च गुरुणी तथा । पुनरप्येवमेव स्यान्मात्रा ह्यधमजातिषु । प्रयोक्तव्याध्रुव हेला तालश्चचत्पुटस्य च ॥ उद्यानभवनक्रीडादीपिकालोकने तथा । भविष्यन्नायके चैव कन्यानां टक्करागतः । मालववेसरिकाख्यो रागोऽत्र विहितः सदा॥ इति । विलम्बितालक्षणं तु कोहलेन- "लघुनी गुरुणीचैव लघू आद्यन्तयोर्गुरू विलम्बिता ध्रुवा ज्ञेया षट्पितापुत्रभङ्गकृत् । सर्वासामेव नारीणामभिसारपरिक्रमे । सौम्या तु क्षिप्तिकाचात्र गेया मालवकैशिके ॥" इति ।

वामदक्षिणपादाभ्यां [1]घूर्णमानाऽपसर्पणैः ॥ १२१

[2]अवकृष्टे मदे चैव ह्यनवस्थितपादिका ।
विघूर्णितशरीरा च [3]करैः [4]प्रस्खलितैस्तथा[5] ॥ १२२

उन्मत्तस्यापि कर्तव्या [6]गतिस्त्वनियतक्रमा ।
[7]बहुचारीसमायुक्ता [8]लोकानुकरणाश्रया ॥ १२३

[9]रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥ १२४

गायत्यकस्माद्धसति [10]सङ्गेचापि न सज्जते[11] ।
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः ॥ १२५

कदाचिद्धावति जवात्कदाचिदवतिष्ठते[12] ।
कदाचिदुपविष्टस्तु[13] [14]शयानः स्यात्कदाचन ॥ १२६

नानाचीरधरश्चैव रथ्यास्वनियतालयः ।
उन्मत्तो भवति ह्येवं[15] तस्यैतां[16] कारयेद्गतिम् ॥ १२७

स्थित्वा नूपरपादेन दण्डपादं प्रसारयेत् ।
[17]बद्धां चारीं तथा चैवं कृत्वा स्वस्तिकमेव च ॥ १२८

अनेन चारीयोगेन [18]परिभ्राम्य तु मण्डलम् ।
बाह्यभ्रमरकं चैव [19]रङ्गकोणे प्रसारयेत् ॥ १२९

---

1 ड - घूर्णमानोऽपसर्पणैः 2 ड - अपकृष्टे 3 ड - पदैः 4 द - प्रचलितैः 5 द - अथ 6 न - गतिस्तु नियत ड - गतिश्च ।नेयत द - गतिस्त्वभिनयक्रमा 7 द - बाहु 8 द - लोकार्थं 9 न - रूक्षस्फन्दित ड - रूक्षस्फटिक प - रूक्ष-स्फुरित 10 न - रुदतीह तथा पुनः 11 द - संइते 12 ड - अवतिष्ठति 13 प - उपतिष्ठति 14 ड - शयितः स्यात् 15 ड - एष 16 प - तस्य तां 17 ज - बध्वा 18 ड - परिक्रम्य चतुर्दिशम् 19 द - रङ्गकोणं तु योजयेत् ।

त्रिकं सुवलितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पद्भ्यां सह गतिर्भवेत् ॥ १३०
[1]त्रिविधा तु गतिः कार्या खञ्जपङ्गुकवामनैः ।
विकलाङ्गप्रयोगेण [2]कुहकाभिनयं प्रति ॥ १३१
[3]एकः खञ्जगतो [4]नित्यं स्तब्धो वै चरणो भवेत् ।
तथा द्वितीयः कार्यस्तु पादोऽग्रतलसंचरः ॥ १३२
[5]स्तब्धेनोत्थापनं कार्यमङ्गस्य चरणेन तु ।
[6]गमनेन निषण्णः[7] स्यादन्येन चरणे न तु ॥ १३३
इतरेण [8]निषीदेच्च क्रमेणानेन वै व्रजेत् ।
एषा [9]खञ्जगतिः कार्या तलशल्यक्षतेषु[10] च ॥ १३४
[11]पादेनाग्रतलस्थेन गतिः कार्याश्रितेन तु[12] ।
निषण्णदेहा पङ्गोस्तु[13] [14]नतजङ्घा तथैव च[15] ॥ १३५

पद्भ्यां सह विपर्ययगतैरिति पादचेष्टा तथा करकर्मण्यनुवर्तनीयेति । कुहकाः अधमा लिङ्गिन इति केचित् । कुहकशब्देन हास्यरस इत्येतत् । तले पादतले [1]शल्यादिक्षतमस्य तस्मिन् गतिमाह पादेनाग्रतलस्थेनेति * नर्कुटः ।

1 ड - विविधानुगतिः 2 द - कुहना 3 ड - एतत् 4 द - नित्यस्तब्धो 5 न - स्तब्धेनोद्वाहनं द - स्वयैनोत्थापनं (?) 6 द - आदर्शे - श्लोकार्धं न दृश्यते 7 ड - विषण्णः 8 ड - विषीदेत् 9 न - खण्डप्रयोगेषु 10 न - कृतेषु 11 न - पुनरग्रतले गम्ये 12 ड - अश्रितेन व्रजेत्तथा 13 न - कार्या तु प - कर्तव्या 14 द - नते जङ्घे 15 ड - तु ।

1 कस्यादि

* नर्कुटस्य लक्षणं यथा—"गुरुणी लघुनी गद्विद्विरभ्यस्ते प्रयोजयेत् । तद्ध्रुवा नर्कुटं प्रोक्तमेतदर्धेन नर्कुटी ॥ शकारेण प्रयोक्तव्यं हास्ये विटविदूषकैः ! नर्कुटं नर्कुटे वृत्ते हिन्दोलस्य तु भाषया ॥" इति । तुम्बुरुणापि "वेश्याचेटविटप्रेष्यस्त्रीविधानां नियोजयेत्" इति नर्कुटीनर्कुटयोर्विनियोग उक्तः ॥

सर्वसंकुचिताङ्गा च [1]वामने गतिरिष्यते ।
न तस्य विक्रमः कार्यो विक्षेपश्चरणस्य च ॥ १३६
सोद्वाहिता चूर्णपदे सा कार्या कुहकात्मिका ।
विदूषकस्यापि गतिर्हास्यत्रयविभूषिता[2] ॥ १३७
अङ्गकाव्यकृतं [3]हास्यं हास्यं नेपथ्यजं[4] स्मृतम् ।
दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ॥ १३८
[5]यदीदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत्[6] ।
[7]यदा तु बकवद्गच्छेदुल्लोकितविलोकितैः ॥ १३९
[8]अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्तु सः ।
काव्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणैः[9] ॥ १४०
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषणैः ।
[10]चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डितः[11] ॥ १४१
यस्तादृशो भवेद्विप्रा हास्यो नेपथ्यजस्तु सः ।
तस्मात्तु [12]प्रकृतिं ज्ञात्वा भावं कार्यं च तत्त्वतः॥ १४२
[13]गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम् ।

---

[1]प्रवेश इति यद्यस्मादीदृशः प्रवेश्यमानः पात्रविशेषः रङ्गे भवति ततोऽङ्गहास्यमिति। प्रवेशपदेन नाट्य एव रसो न लोक इति दर्शयति। असंबद्धं निरर्थमनुचितं च, तद्व्याचष्टे अनर्थकैरश्लीलैश्चेति, अश्रियमशोभां रातीति रेफस्य लत्वम् । तस्मादिति त्रिप्रकारं हास्यमाश्रित्य क्वचिदेकः प्रकारः क्वचित् द्वौ

---

1 ढ - वामेन 2 ड - समन्विता 3 ड - वाक्यकृतं 4 ड - नैपथ्यजं 5 ड - च ईदृशः न - यदीदृशो भवेद्विप्राः अङ्गहास्यं तु तत्स्मृतम् 6 ढ - तत्स्मृतम् 7 द - अयं श्लोकः "काव्यहास्य"मिति श्लोकस्यानन्तरं नेपथ्यहास्यलक्षणामिति दृश्यते लेखकप्रमादात् । 8 द - आयतत्वाश्वतत्वाच्च (?) हास्यं नेपथ्यजं तु तत् 9 ड - असंबन्धप्रभाषणात् 10 द आदर्शे अयं श्लोको न वर्तते 11 प - गैरिकादिविभूषणैः 12 ड - प्रकृतीर्ज्ञात्वा 13 प - गतिं ।

---

1 पङ्क इतीयमन्यस्मात् ।

[1]स्वभावजायां विन्यस्य कुटिलं वामके करे ॥ १४३
तथा दक्षिणहस्ते च[2] कुर्याच्चतुरकं पुनः[3] ।
पार्श्वमेकं शिरश्चैव हस्तोऽथ चरणस्तथा ॥ १४४
[4]पर्यायशः [5]संनमयेल्लयतालवशानुगः ।
[6]स्वभावजा तु तस्यैषा गतिरन्या विकारजा ॥ १४५
[7]अलाभलाभाद्भुक्तस्य[8] स्तब्धा तस्य गतिर्भवेत् ।
[9]कार्या चैव हि नीचानां चेटादीनां परिक्रमात् ॥ १४६
अधमा इति ये ख्याता नानाशीलाश्च ते पुनः ।
पार्श्वमेकं शिरश्चैव करः सचरणस्तथा ॥ १२७
[10]शकारस्यापि कर्तव्या गतिश्चञ्चलदेहिका ।

क्वचित्सर्व इत्यनेन क्रमेण विदूषकः स्वामिनः प्रकृतिं राजामात्यश्रेष्ठि[1]प्रकाति-भावं चित्तवृत्तिं करणीयं ज्ञात्वा विभागः कार्यः । [2]न च राजनि संनिवृत्तेऽश्लीलभाषणं समुचितम् । एवं सर्वत्रोह्यम् ।

गत्युपयोगिनं वृत्तान्तमस्याभिधाय गतिमाह—स्वभावजायामिति । अनावेशे सति [3]बकवद्गमनस्योक्तत्वात् । लयो विलम्बितः, तालः प्लुतलघुगुरुप्राय इह स्वीकृतः । [4]अन्या द्रुतलयत्वेन प्लुतकालमानाद्बाहुल्येन [5]शोकादिः स्वभावजा । गर्वात्मकोऽपि विकारो भवतीत्याशयेनाह अलाभलाभादिति । अलाभः लाभपूर्वकाल्लाभात् । भुक्तं वस्त्राद्युपलक्षयति । भयादौ तु [6]परित एवास्य

ड - सभावजाया 2 ड - हस्तं च ढ - हस्तं तु ड - ततः ढ - तथा 4 ड - पर्यायतः 5 न - संनमेत्तत् ड - संनमेत प - स्वभावजाता 7 ड - अलभ्य 8 ड - भक्षस्य द - उत्कस्य 9 द - मातृकायामयं श्लोको न वर्तते 10 ड - इदं श्लोकार्धं नसंज्ञकादर्शेऽत्रैव वर्तते । प - मातृकायां तु "अलाभलाभा"दिति श्लोकार्धानन्तरमेव । जझढडत मातृकासु तु न विद्यते ।

1 प्रभृति 2 स हि 3 वक्रत्वं गमनस्य 4 न्यायतरं चरत्वेन प्लुतकालः 5 अद्यशोकादिः क - अन्यरोकादिः 6 प्रोक्तं न प्राक्.

गतौ नमेत चेटानां दृष्टिश्चार्थविचारिणी[1] ॥ १४८
[2]वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितैः ।
[3]गात्रैर्विकारविक्षिप्तैर्लम्बवस्त्रस्रजा तथा ॥ १४९
[4]सगर्विता चूर्णपदा शकारस्य गतिर्भवेत् ।
[5]जात्या नीचेषु योक्तव्या[6] विलोकनपरा गतिः॥ १५०

---

क्रमः । (शकारस्यापीति) शकारबहुला यस्य भाषा स शकारः । शकारोपलक्षितशकादिजनपदवासीत्यन्ये, यद्वक्ष्यते 'शकाराभीरचण्डाल' (अध्या १७—६०) इत्यादि । हीनाशय उत्तमपदेऽभिरोपितः शकार इत्यन्ये । [1]अध्वहारस्य श्लोकः—

प्राकृतेऽपि शकारस्य विभूतिर्न प्रसिद्ध्ये ।
तद्विभूतिरपभ्रंशे तापस्येव प्रकाशिता[2] (?) ॥

ममापि चात्रार्थे श्लोकः—

लब्धापशब्दघटना विधुतश्च धर्मः
स्वार्थप्रतीतिकलनां प्रति का कथैव ।
[3]मूर्धन्यतां गमयता भवता शकारः
शक्नोति यत्र न विधे हृदि किं न्यधायि ॥

तथा—

सकलजनतालभ्यः सोऽयं शकार इति स्फुटं
विरचयति यन्मूर्धन्यत्वं विश्रुहतलक्षणा ।
हततनुरियं लोके जातापशब्दपरम्परा
परिचयमयी वार्ता कीर्तिं निकृत्य निकर्तनी ॥ इति

प्रतिज्ञाचाणक्ये तन्महाकविना भीमेन राजापि विन्ध्यकेतुः शकार इति भूयसा व्यवहृतः । वस्त्राभरणसंस्पर्शालोकनगर्वयोगोऽत्र पक्षे क्लिष्ट-

---

1 न - अर्धनिमेषिणी 2 न - वज्राभरणसंस्पर्शैः 3 द - मातृकायां श्लोकार्धं नास्ति 4 ड - गर्विता चूर्णपादस्य 5 श्लोकोऽयं द मातृकायां न वर्तते 6 ज - कर्तव्या ।

---

1 अथ हासस्य 2 प्रकाशिका 3 मूर्धन्यतोऽङ्कममता ।

असंस्पर्शाच्च लोकस्य [1]स्वाङ्गानि विनिगूह्य च ।
म्लेच्छानां जातयो यास्तु पुलिन्दशबरादयः[2]॥ १५१
तेषां देशानुरूपेण[3] कार्यं गतिविचेष्टितम्[4] ।
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः ॥ १५२
स्वस्वजातिसमुत्थेन स्वभावेन गतिर्भवेत्[5] ।
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः॥ १५३
या कृता नरसिंहेन विष्णुना प्रभविष्णुना ।
[6]आलीढं स्थानकं कृत्वा गात्रं तस्यैव चानुगम्॥ १५४
जानूपरि करं [7]ह्येकमपरं [8]वक्षसि स्थितम् ।
[9]अवलोक्य दिशः[10] सर्वाश्चिबुकं बाहुमस्तके ॥ १५५
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः ।
[11]नियुद्धसमये चैव रङ्गावतरणे तथा ॥ १५६
सिंहादीनां प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः ।
शेषाणामर्थयोगेन गतिं स्थानं च योजयेत्॥ १५७

---

तरः न चार्यदेशजातिः शकारः कश्चित्प्रसिद्धः, म्लेच्छजातीनां पृथगेव निर्वक्ष्यते "म्लेच्छानां जतयो यास्तु" इत्यादिना, तस्मादिहायमीदृश एव शकार इति युक्तम् ।

प्रभविष्णुनेति वचनादिदं सूचयत्यसाववतरणप्राधान्येन, ये ऋक्षवानरादयो जाम्बवत्सुग्रीवाङ्गदहनूमत्प्राया:, तेषामेवेयं गतिः । अन्येषां तु स्वजात्यानुरूप्येणैव । तस्यैवेत्यालीढस्यानुगतं गात्रं वामभागगमनमित्यर्थः ।

---

1 ड - अङ्गानि 2 द - पुलिन्दाद्या द्विजोत्तमाः 3 ड - गतिविचारेण 4 द - विचेष्टितैः 5 द - प्रतियोजयेत् 6 ड - आलीढस्थानकं 7 ड - चैकं 8 न - चोपरि द - चैव स्वास्थितम् 9 द - विलोलितं शिरः कृत्वा न - विलोकितं शिरः कृत्वा 10 ड - दृशः 11 श्लोकोऽयं दसंज्ञके नास्ति ।

वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ।
एवमेताः प्रयोक्तव्या नराणां गतयो बुधैः ॥ १५८
[1]नोक्ता या या मया ह्यत्र ग्राह्यास्तास्ताश्च[2] लोकतः ।
[3]अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥ १५९
स्त्रीणां स्थानानि कार्याणि गतिष्वाभाषणेषु च[4] ।
आयतं चावहित्थं च अश्वक्रान्तमथापि च[5] ॥ १६०
[6][स्थानान्येतानि नारीणामथ लक्षणमुच्यते] ।
[7]वामः स्वभावतो यत्र पादो विरचितः समः ॥ १६१
तालमात्रान्तरे न्यस्तस्त्र्यश्रः पक्षस्थितोऽपरः ।
प्रसन्नमाननमुरः समं यत्र समुन्नतम् ॥ १६२
लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदायतम्* ।
[दक्षिणस्तु समः पादस्त्र्यश्रः पक्षस्थितोऽपरः ॥ १६३
वामः समुन्नतकटिश्चायते स्थानके भवेत् ।
आवाहने विसर्गे च तथा निर्वर्णनेषु च[8] ॥ १६४
चिन्तायां चावहित्थे च स्थानमेतत्प्रयोजयेत्]
[9]रङ्गावतरणारम्भः पुष्पाञ्जलिविसर्जनम् ॥ १६५

1 ङ - नोक्ताश्च 2 ङ - ताश्चापि 3 द - आदर्शे श्लोकस्यार्धं न वर्तते 4 ङ - आभरणेषु च 5 द - वा 6 द - आदर्श एव दृश्यते 7 ढ - स्थानकत्रयलक्षणविनियोगपाठः कखगघचभम - आदर्शेषु समान एव। कुण्डलीकृतस्तु पाठो तदन्येष्वादर्शेषु दृश्यते। जायसेनापतिशार्ङ्गदेवकुम्भकर्णैः पूर्वः पाठ एव गृहीतः, भोजदेवेन त्वपर इति ज्ञायते। 8 ढ - निर्वहणेषु च - द निर्वलेषु च 9 द आदर्शे श्लोकद्वयं न वर्तते। ङ - आदर्शे वर्तते.

* आयतं स्त्रीणामेव स्थानकमिति केचित्, रङ्गावतरणारम्भे पुरुषाणामपीति परे ॥

मन्मथेर्ष्योद्भवं कोपं तर्जन्यङ्गुलिमोटनम् ।
निषेधगर्वगाम्भीर्यमौनं मानावलम्बनम् ॥ १६६
स्थानेऽस्मिन् संविधातव्यं दिगन्तरनिरूपणम् ।
[[1]समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितोऽपरः ॥
समुन्नतकटिर्वामस्त्ववहित्थं तु तद्भवेत् ] ।
[2]पुरो विचालितस्त्र्यश्रस्तदन्योऽपसृतः समः ॥ १६८
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम् ।
पाणिर्लताख्यो यत्रैकस्तदन्यस्तु नितम्बगः ॥ १६९
अवहित्थं समाख्यातं स्थानमागमभूषणैः ।
[3]विलासलीलाबिब्बोक[4]शृङ्गारात्मनिरूपणे[5] ॥ १७०
स्थानमेतत्प्रयोक्तव्यं [6]भर्तृमार्गावलोकने ।
[स्त्रीणामेतत्स्मृतं[7] स्थानं संलापे तु स्वभावजे ॥ १७१
निश्चये परितोषे च वितर्के [8]लज्जिते तथा] ।
पादः [9]समस्थितश्चैक एकश्चाग्रतलाञ्चितः ॥ १७२
सूचीविद्धमविद्धं वा [10]तदश्वक्रान्तमुच्यते ।
[11]स्खलितं घूर्णितं चैव गलिताम्बरधारणम् ॥ १७३
कुसुमस्तबकादानं परिरक्षणमेव च ।
वित्रासनं सललितं तरुशाखावलम्बनम् ॥ १७४

1 द - समस्थितो वामपादस्त्र्यश्रस्तालान्तरोऽपरः 2 ड - श्लोकद्वयं—कादि चान्तेषुभमयो श्च वर्तते, नान्येषु । 3 ड - अयं कखगघचछडभम - आदर्शेष्वेव ड - विवाहलीलालावण्ये 4 ड - शृङ्गारादि 5 क - निरूपणैः 6 ड - तथा 7 द - स्थितं 8 ड - चिन्तने 9 ड - समुत्थितः द - समस्थितस्त्वकः 10 द - ह्यश्वक्रान्तं तदुच्यते 11 दनजझठप - मातृकासु श्लोकद्वयं न दृश्यते ।

स्थानेऽस्मिन्संविधानीयं स्त्रीणामेतत्प्रयोक्तृभिः ।
[2][शाखावलम्बने कार्यं स्तवकग्रहणे[1] तथा ॥ १७५
विश्रामेष्वथ नीचानां[3] नराणां चार्थयोगतः[4]]
[5]स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ॥ १७६
[6]भग्नं च स्थानकं नृत्ते चारी चेत्समुपस्थिता ।
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ॥ १७७
[7]पुनश्चासां प्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ।
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम्[8] ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ।
ततः सललितं पादं तालमात्रसमुत्थितम्[9] ॥ १७९
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् ।
तेनैव समकालं च [10]लताख्यं वामकं भुजम्[11] ॥
दक्षिणं विनमेत्पार्श्वे न्यसेन्नाभितटे ततः[12] ।
नितम्बे दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् ॥ १८१

---

स्खलितमिति पदम्। [1]तथा विशेषेण च्युत इत्यर्थः। प्रकृतिसंस्थितामित्यविशेषोक्ता प्राधान्यात्प्राथम्यात् [2]तदस्ति(?)गतिरित्युच्यते । [3]कृत्वावहित्थमित्यादि । वामश्चेति । [4]लताख्यं बाह्यपार्श्वे कनिष्ठाङ्गुलिदेशे ।

---

1 न - ग्रहणं 2 श्लोकोऽयं कादिचान्तासु मातृकासु न वर्तते 3 ङ - देवानां 4 द - नराणामर्थयोगतः 5 श्लोकोऽयं कादिछान्तेष्वेव वर्तते 6 छ - भग्नेऽवस्थानके 7 श्लोकार्धमिदं कखगचछेषु न वर्तते 8 ङ - करम् 9 द तालमात्रं समुत्क्षिपेत् 10 ढ - तालाख्यं 11 द - वामपादकम् 12 द - पुनः ।

---

1 क - पदं [illegible] क - तमस्ति 3 क - कुलावहित्थामिति ख - तूलावहित्थमिति 4 ख - लतास्यं ।

ततो वामपदं दद्याल्लताहस्तं[1] च दक्षिणम् ।
लीलयोद्वाहितेनाथ [2]शिरसानुगतेन च ॥ १८२
[3]किंचिन्नतेन[4] गात्रेण गच्छेत्पञ्चपदीं ततः ।
यो विधिः पुरुषाणां तु[5] रङ्गपीठपरिक्रमे ॥ १८३
स एव प्रमदानां वै कर्तव्यो नाट्ययोक्तृभिः ।
षट्कलं तु न कर्तव्यं[6] तथाष्टकलमेव च ॥ १८४
पादस्य पतनं तज्ज्ञैः खेदनं[7] तद्भवेत्स्त्रियाः ।
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ॥ १८५
[8]स्थानीया याः स्त्रियस्तासां संप्रवक्ष्याम्यहं गतिम् ।
कृत्वावहित्थं स्थानं तु वामं न्यस्य कटीतटे ॥ १८६
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ॥

---

यो विधिरिति वामवेधं ततः कुर्यादिति। अतिदेशेन चेदं दर्शयति यावती काचिद्रसप्रकृतिदेशकालापेक्षा नृणां गतिरुक्ता सा सर्वैवोक्तविलासरूपप्रकारानुविद्धा[1] स्त्रीणामपि विवक्षिता । [2]दिक्कलापरिमाणत्वं यत्र शोभोदात्तं तत्र विशेषमाह । एतत्प्रागेव व्याख्यातं चतुष्कलादभ्यधिको न स्त्रीणां मानविधिरिति। अष्टकलग्रहणं तदप्यधिकं मानं पुरुषेष्वपि नास्तीति सूचयति । अन्यथा षट्कले निषिद्धे [3]काष्टकलस्य संगतिस्तन्निषेधेन। स्थानीया मध्यमवयसः, अत एव मध्यमप्रकृतित्वमनूद्यम् । [4]आद्यं दक्षिणम् । परिवाहितमिति

---

1 ड - पादं 2 ड - शिरसोऽनुगतेन द - शिरसात्र 3 सार्धं एकः श्लोकः फखडढ - मातृकास्वेव 4 द - नमत 5 द - हि 6 द - षट्कलं तत्तु कर्तव्यं न - न प्रयोक्तव्यं 7 द - खेदने 8 ड - स्थवीयसीनामेतासां ।

---

1 ख - रूपानुविद्धा 2 क - दिक्कालपरिमाणत्वं ख - दिक्काल 3 क - काष्ठकलास एकत्रिकः ख - काष्ठकलासंकेतिकं तन्निषेधेन 4 ख - अथ ।

कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ।
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ॥ १८८
[1]किंचिदुन्नमितैर्गात्रैराविद्ध भुजविक्रमा ।
स्थानं कृत्वावहित्थं च[2] वामं चाधोमुखं भुजम् ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ।
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ॥
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ।
या पूर्वमेवाभिहिता [3]ह्युत्तमानां गतिर्मया ॥ १९१
स्त्रीणां कापुरुषाणां च [4]ततोऽर्धार्धं तु[5] योजयेत् ।
मध्यमोत्तमनीचानां नृणां यद्गतिचेष्टितम् ॥ १९२
स्त्रीणां तदेव कर्तव्यं ललितैः पदविक्रमैः ।

---

सविभागमधमानां गतिमाह प्रेष्याणामित्यादि । उद्भ्रान्तगामिनीति समद-विकारा, आविद्धो वर्तनाबहुलो बाहुजानां [1]विक्रमस्य नार्या अर्धमिति नपुंसक-लक्षणा तृतीयप्रकृतिरुच्यते, [2]समप्रविभागविवक्षया चार्धनपुंसकमिति समासः [3]उदात्तत्वं पुरुषाणां लालित्यं योषितां गतौ । गतिरेति चतुस्ताला चतुष्क-ला च, अनुत्तमस्त्रीणां द्विताला द्विकलेति ततोऽप्यर्धा कापुरुषाणां, तत्कर्म-कराणामेकताला [4]एककला चेति । किमुत्तमानामेवेयं स्थाने दर्शयति मध्य-मोत्तमानां नृणां [5]अपुंसां यद्गतिचेष्टितं तदेव तदोदात्तमध्यमोत्तमनीचानां स्त्रीणां तथा तत्कर्मकराणां कुर्यादित्युत्तमग्रहणम् ।

---

1 ङ - कश्चित् 2 च - तु 3 द - पूर्वमेव विहिता 4 द - तदर्धेन तु
5 ङ - च ।

---

1 क - विक्रमः स्यात् 2 क - संप्रति विभाग 3 क - उदारत्वं 4 क - द्विकला
5 ख - अयं सा ।

बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा[1] ॥ १९३
न तस्यां[2] सौष्ठवं कार्यं प्रमाणं न प्रयोक्तृभिः ।
[3][तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका ॥ १९४
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ]
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसकैः[4] ॥ १९५
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ।
[5]व्याजेन क्रीडया वापि तथाभूयश्च वञ्चनात् ॥ १९६
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि च ।
[6]धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ॥ १९७
[7]स्त्री पुमांसं त्वभिनयेद्वेष[9]वाक्यविचेष्टितैः ।

सर्वग्राहकं दर्शयितुं यत्रोत्तमादिविभागो नोद्भिन्नः तत्र गतिमाह बालानामपीति । तद्भावगमनादिति । यदेव रूपं यो गृह्णाति तदीयैव तस्य गतिः । विपर्ययपरिग्रहे च विशिष्टार्थं [1]कारणमाह व्याजेनेति । व्याजः कस्यचित्कार्यस्य साधनाय, यथा विदूषकस्य संकेतस्थाने चेटिकावस्त्रधारणम् । क्रीडा-यथा इष्टजनस्याकृतौ नायिकानाम् । वञ्चनादिति यथा विदूषकं वञ्चयितुं चेटकस्य स्त्रीवेषकरणम् ।

अपिचेति ग्रहणात् स्त्रीपुंसयोर्नपुंसकेन सह तस्य च ताभ्यां सह विपर्ययं दर्शयति । अत्रैव विपर्यये गतिविपर्ययप्रसङ्गेन व्यभिचारिभावसात्त्विकोपाङ्गाद्यभिनयविपर्ययमप्याह धैर्यौदार्येणेति । [2]धैर्यौदार्ये सामान्याभिनयोक्ते । ताभ्यां भावा उपलक्ष्यन्ते । बुद्ध्येति स्थायित्वम्, सत्त्वेनेति सात्त्विकाः, कर्मणेति [3]स्थानकादिविषयः, वेषेति आहार्यप्रकाराः, वाक्येति वाचिकगतसंस्कृतादिप्रयोगः, चेष्टितैरिति अन्तरालस्थाने त्रिपताकादयः ।

1 ङ - गतिविक्रमा 2 द - तस्य ङ - तस्याः 3 - अयं श्लोकः कादि छान्तेष्वादर्शेषु न वर्तते 4 ढ - नपुंसके 5 न - व्यायामेन क्रीडयापि 6 ङ - धैर्योदारेण 7 ङ - न स्त्रीपुंस 8 प - एष छ - एव ।

1 ख - करणं 2 ख - धैर्यौदार्यो 3 क - सात्त्विकादि ।

स्त्रीवेषभाषितैर्युक्तः [1]प्रेक्षिताप्रेक्षितैस्तथा ॥ १९८
[2]मृदुसन्नगतिश्चैव पुमान्स्त्रीभावमाचरेत्।
[[3]जातिहीनाश्च[4] या नार्यः पुलिन्दशबराङ्गनाः॥ १९९
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः।
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथा पुनः[5]॥ २००
स्वस्थानां चैव नारीणां समपादं प्रयोजयेत्।
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि वा॥२०१
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम्]।
[6]तथासनविधिः कार्यः स्त्रीणां नृणामथापि च[7] ॥ २०२
नानाभावसमायुक्तस्तथैव[8] शयनाश्रयः।
विष्कम्भिताञ्चितौ पादौ [9]त्रिकं किंचित्समुन्नतम् ॥
[10]हस्तौ कटयूरुविन्यस्तौ स्वस्थे स्यादुपवेशने।

---

यथास्थानकगतैः पूर्वपश्चाद्भावि तथोपवेशनात्मकमासनमपीति तद्विधमाह तथासनविधिरिति। तथैवेति गतौ [1]हि शयनमपि पूर्वपश्चाद्भावि शयनाश्रय इति शेषः, विष्कम्भेन वैशाखस्थानकोचितेन विस्तारेणाञ्चितौ विस्तीर्णान्तरौ सुन्दरौ पादौ, न त्वत्राञ्चितपादलक्षणयोगः। स्वस्थे पुंसि यदुपवेशनमासनपीठिकादौ तत्र त्रिकमुन्नतं स्यादिति संबन्धः। "इति शब्देन वाक्यार्थः, स्यादित्यत्र कर्तव्याख्येय" इति स्यादिति। हस्ताविति कर्कटरूपौ

---

1 ङ - प्रेषिताप्रेषितैः 2 ङ - मृदुमन्द द - मृदुसत्त्व 3 श्लोकत्रयं कादिछान्तेषु न दृश्यते 4 ङ - विजातीयास्तु 5 ङ - तथैव च नं - तथापरः 6 छादिसकलादर्शेषु—अथासनविधिः 7 ङ - नृणां स्त्रीणां विशेषतः द - वा 8 ङ - तथा च 9 ब - वक्षः 10 स्वस्थाद्यासनलक्षणविनियोग श्लोकाः नम - मातृकयोः पाठभेदतया दृश्यन्ते। नंमातृकापाठस्तु भमपाठक्रम एव दीयते संवादबाहुल्यात्

---

3 क - गते ख - गतो

पादः प्रसारितः किंचिदेकश्चैवासनाश्रयः ॥ २०४
शिरः [1]पार्श्वानतं चैव सचिन्त उपवेशने ।
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः ॥ २०५
संप्रणष्टेन्द्रियमना भवेच्छोकोपवेशने[2] ।
प्रसार्य बाहू शिथिलौ तथा [3]चापाश्रयाश्रितः ॥ २०६
[4]मूर्छामदश्रमग्लानिविषादेषूपवेशयेत् ।
सर्वपिण्डीकृताङ्गस्तु संयुक्तैः[5] पादजानुभिः ॥ २०७
[6]व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः ।
तथाचोत्कटिकं स्थानं[7] स्फिक्पार्ष्णीनां समागमः ॥
पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमनेऽपि[8] च ।
विष्कम्भितं पुनश्चैव [9]जानु भूमौ निपातयेत् ॥ २०९

---

समाहारद्वन्द्वे । संप्रणष्टशब्देनेन्द्रियमात्र[1] इति पाठः मन इति पाठे प्रोच्यत्वे कृते त्वध्याहृत्य संगतिः कार्या । अपाश्रयन्तीत्यादिकमाश्रितम् । उपवेशयेदिति स्वार्थे णिच आचार्ये वा कर्तृभूतमात्रम्, आचार्यास्तु बाहू प्रसार्यैवासने उपवेशयेत् विश्रामयेदित्याहुः । पिण्डितत्वमङ्गानां जानुविश्लेषादूर्ध्वकायं कुटिलीकरोतीत्युत्कटं [2]संज्ञायां कुटतेः[3] । अत्र च विरलत्वं जानुनोः स्फिग्भ्यां भूमेः परामर्शः[4], पूर्वत्र तु नैतदुभयमपीति विशेषः । पित्र्य इति श्राद्धादौ, निवापसलिल इति पितृतर्पणे प्रतिग्रहार्थं परस्य सलिलदाने तत्प्रतिग्रहे च । सन्ध्याशब्देन तदवसरोचितं जपध्यानादि । विष्कम्भितमिति विस्तारितमेकं

---

1 ङ - पार्श्वगतं छ - पार्श्वोन्नतं 2 ङ - शोकौत्सुक्योपवेशने 3 न - चोपाश्रयाश्रितः 4 प - मोहमूर्छामदग्लानि 5 ढ . संयुक्तः 6 द - व्रीडावाहित्थास्वध्याने 7 छ - उत्कटकस्थान ढ - उत्कुटिकस्थानं 8 च - आचमनेषु 9 ढप - जानुं ।

---

1 क - शब्देन विशेषणेन संप्रणष्टेन्द्रियमात्र 2 क - पुंसंज्ञायां 3 क- कुटेः 4 क - परस्पर्शः ।

[1]प्रियाप्रसादने कार्यं होमादिकरणेषु च ।
[2]महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥ २१०
देवाभिगमने कार्यं[3] रुषितानां प्रसादने[4] ।
शोके [5]चाक्रन्दने तीव्रे [6]मृतानां चैव दर्शने ॥ २११
त्रासने च कुसत्त्वानां नीचानां चैव याचने[7] ।
[8]होमयज्ञक्रियायां च [9]प्रेष्याणां चैव कारयेत् ॥ २१२
मुनीनां नियमेष्वेव भवेदासनजो विधिः ।
*तथासनविधिः कार्यो विविधो नाटकाश्रयः ॥ २१३
स्त्रीणां च पुरुषाणां च बाह्यश्चाभ्यन्तरस्तथा ।
[आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च] २१४
देवानां नृपतीनां च दद्यात् सिंहासनं द्विजाः ।
[10]पुरोधसाममात्यानां [11]भवेद्वेत्रासनं तथा ॥ २१५

भूमौ जानु द्वितीयं यथास्थितं, यन्त्रानिकटढौकगमनशंक्यं सन्तापादिभयात् । तत्र च कार्यं मन्त्रं तदुपलक्षणम् । होमादिकरणेष्विति । अभिगमनं वन्दनम् । शोके चेति नीचानामिति सर्वत्रात्र संबध्यते । नीचानां शोकजनितो यस्तीव्राक्रन्दस्तत्रैव, नीचा यदा मृतमवलोकयन्ति, संबन्धमात्रे षष्ठीत्युभयप्राप्त्यभावान्न नियमः । कुसत्त्वाः शिवादयः यदा नीचानां त्रासयन्ति तदा । नीचा यदा किंचिद्याचन्ते तदा जानुद्वयक्षेपो भूमौ ।

अथासनात्मककालसंनिवेशप्रसङ्गेन तदधिकरणेषु विधिमाह तथासनविधिरिति । बाह्यः सर्वजनविषयः आभ्यन्तरो राजोचितः ।

1 दच - प्रिय 2 द - महीमुखाभ्यां 3 ड - चैव 4 च - च सांत्वने द - च याचने 5 द - चाक्रन्दकामेन 6 ढ - भूतानां 7 ढ - दर्शने 8 द - शेष छ - सोम 9 छ - प्रेक्षाणां चैव योजयेत् 10 न - पुरोधः श्रेष्ठयमात्यानां 11 द - भवेदर्धासनं * सकलेष्वादर्शेषु "अथासनविधिः" इति ।

मुण्डासनं तु[1] दातव्यं सेनानीयुवराजयोः ।
काष्ठासनं ब्राह्मणानां[2] [3]कुमाराणां कुथासनम् ॥ २१६
एवं राजसभां प्राप्य [4]कार्यस्त्वासनजो विधिः ।
स्त्रीणां [5]चैवासनविधिं संप्रवक्ष्याम्यहं पुनः ॥ २१७
सिंहासनं तु राज्ञीनां देवीनां मुण्डमासनम् ।
[6]पुरोधोऽमात्यपत्नीनां दद्याद्वेत्रासनं तथा ॥ २१८
भोगिनीनां [7]तथा चैव वस्त्रं चर्म कुथापि वा ।
[8]ब्राह्मणीतापसीनां च पट्टासनमथापि च ॥ २१९
[9]वेश्यानामपि कर्तव्यमासनं हि[10] मसूरकम्[11] ।
शेषाणां प्रमदानां च भवेद्भूम्यासनं द्विजाः ॥ २२०
एवमाभ्यन्तरो[12] ज्ञेयो [13]बाह्यश्चासनजो विधिः ।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥ २२१

---

[1]मुण्डासनं चातुरी, [2]मसूरकं वस्तुशून्यं, काष्ठासनं [3]पीठकं, वेत्रलताकृतं वेत्रासनं वेत्रासनादन्य एव रूढो वर्णकम्बलखण्डः विस्तारिकेत्यन्ये। राज्ञी राजवंश्या देवी, सेनापतिप्रभृतिपुत्र्यो राज्ञा परिणीता भोगिन्यः [4]संगृहीतकन्याः । भूमिरेवासनं भूम्यासनं । [5]एवमिति नरपतिसंनिधौ । अन्यदात्मस्वेच्छयेति दर्शयति तथा स्वगृहेति । वार्ताशब्देन सेनापतेरमात्यगृहगमन इत्यादि सूच-

---

1 ड - च 2 ड - द्विजातीनां न - द्विजानां च 3 ढ - कुमाराणां द - कुमाराणामथाशुभम् (?) 4 द - कार्यं आसनजो 5 ड - चाप्यासन 6 द - पुरोधसां तपस्वीनां भवेत् 7 द - पुनश्चैव कृत्वा चर्म कथा (कुथा ?) तथा 8 ड - ब्राह्मणीनां यतीनां च द - आदर्शेऽयं श्लोको न दृश्यते 9 न - वेश्यानां च प्रदातव्यं 10 ढ - च 11 ड - मयूरकम् 12 ढ - अन्तःपुरे 13 द - बाह्यश्चासने

---

1 ख - दण्डासनं 2 क - पसूरकं 3 ख - पीठनं 4 ख - संगीतकन्यां 5 क - एष विधिः ख - एष्विति ।

[1]नियमस्थो मुनीनां च भवेदासनजो विधिः।
[2]लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः॥ २२२
[3]ब्रुसीमुण्डासनप्रायं वेत्रासनमथापि वा[4]।
[5]होमे यज्ञक्रियायां च पित्र्यर्थे च प्रयोजयेत्॥ २२३
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः।
तेषामासनसत्कारः [6]कर्तव्य इह पार्थिवैः॥ २२४
समे समासनं दद्यान्मध्यमे मध्यमासनम्।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं भवेत्॥ २२५
उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो[7] बुधैः।
भूम्यासनं तथा कार्यमथवा काष्ठमासनम्॥ २२६
नौनागरथयानेषु भूमिकाष्ठासनेषु च।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः[8]॥ २२७

---

यति। नियमस्थ इति कस्यचिदङ्गविष्टरोऽन्यस्य मृगाजिनम्। लिङ्गिनामिति। यथा शाक्यानां ब्रुसी, शैवानां मुण्डासनं, क्षपणकानां वेत्रवल्कलडिम्बकम्। तदेवाह ब्रुसीत्यादि। स्थानाय हिता वृद्धाः तन्निकटे व्यवस्थादृष्टादृष्टोपयोगि-वृद्धा ये भवन्ति अत एवाह कुलविद्येति। आसनसत्कार इहास्यतामिति।

[1]तत्र विभागमाह सम इति तत्तुल्यजाति[2]विद्यः। सममिति स्वित्वा-स्वासनापेक्षया मध्य इति किंचिदूनेन, मध्यममिति स्वासनात्प्रमाणतोऽप्यूनं हीन इति स्वापेक्षया भूम्या सह भूमिरेव इहास्यतामिति निर्देश्या स एव तस्यासनसत्कारः। काष्ठमिति एकमेव दीर्घं भरसहं पर्यङ्कं दर्शयितुं काष्ठ-मित्युक्तं न तु काष्ठमयमिति।

---

1 ढ - नियमस्थं ड - नियमस्य द - नियमस्थे 2 द - लिङ्गिनां चासनविधिः 3 ढ - दण्डमुण्डब्रुसीप्रायं 4 ड - च 5 श्लोकार्धं द संज्ञके नास्ति 6 न - कर्तव्यो गुरुपार्थिवैः 7 ढ - गुरूणामग्रतो 8 द - उपाध्याये गुरौ नृपे।

1 ख - तत्रविभागं 2 ख - विन्यासक्रममिति।

आकुञ्चितं समं चैव प्रसारितविवर्तने[1]।
उद्वाहितं [2]नतं चैव शयने कर्म कीर्त्यते॥ २२८

[3][सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत्॥ २२९

उत्तानितमुखं चैव [4]प्रत्यङ्मुक्तकरं तथा।
समं नाम प्रसुप्तस्य[5] स्थानकं संविधीयते॥ २३०

एकं भुजमुपाधाय संप्रसारितजानुकम्।
स्थानं प्रसारितं नाम [6]सुखसुप्तस्य कारयेत्॥ २३१

अधोमुखस्थितं चैव [7]विवर्तितमिति स्मृतम्।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत्॥ २३२

[8]अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च।
उद्वाहितं तु विज्ञेयं लीलायां वचने[9] प्रभोः॥ २३३

ईषत्प्रसारिते जङ्घे यत्र [10]स्रष्टौ करावुभौ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते]॥ २३४

---

अथ शयनसंनिवेशनमाहाकुञ्चित(मिति) दिक् या निजशरीरस्य कुटिलीकरणात्सा स्यात्। बाहुमध्यमपसरेण विक्षेपयोगात् पार्श्वे संनिवेशनवशात्[1] पूर्वकायस्यापरकायस्योर्ध्वनयनं[2] नान्यशयनसंनिवेशात्।

---

1 नं - विवर्तिते 2 न - नतं षोढा शय्यास्थानानि निर्दिशेत् द - तथा चैव 3 श्लोकाः षट् आकुञ्चितादिलक्षणविनियोग निरूपकाः कखगघचद मातृकासु न वर्तन्ते 4 ङ - स्रस्तमुक्तकरं 5 ङ - तु सुप्तस्य 6 ङ - खलु 7 ङ - विवर्तनं 8 म - हस्तोपरि 9 ज - वेशने 10 ज - स्रस्त।

---

1 खं - संनिवेशनात्, 2 ख - शयनम्।

गतिप्रचारस्तु मयोदितोऽयं
नोक्तश्च यः सोऽर्थवशेन साध्यः[1] ॥ २३५
[2]अतःपरं रङ्गपरिक्रमस्य
वक्ष्यामि कक्ष्यान्तरसंविधानम्[3] ॥ २३६

इति श्रीभारतीये नाट्यशास्त्रे गतिप्रचारो नाम
द्वादशोऽध्यायः[4] ।

---

अर्थवशेनेति लौकिकेनेत्यर्थः । अथैतदुपसंहृताध्यायानन्तरावकाशं संगतिप्रदर्शनपूर्वकमाह अतःपरमिति । रङ्गे यत्परिक्रमात् परिक्रमणवृत्ते गत्यध्याये निरूपितं तदुपयोगः कक्ष्याविशेषविभाग इति शिवम् ।

यावद्गतिभेद(विधि)प्रकटनमध्यायमिह विवृणुते ।
स्मरमथनचरणसरसिजपरागभूतोऽभिनवगुप्तः ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यां गत्यध्यायो
द्वादशः समाप्तः ।



---

1 द - शाश्वतः 2 द - ज्ञेयं 3 ज - कक्ष्यादिविभागयुक्तम् 4 जादि वान्तेष्वादर्शेषु त्रयोदशोऽध्यायः । दमातृकायामस्मिन्नध्याये श्लोकसंख्या २०९ इति, आदितः २१४९ इति च लिखितम् ।

# भ म मातृकाभिन्नपाठक्रमो द्वादशोऽध्यायः

## गतिप्रचारः ।

---

एवं व्यायामसंजातं कार्यं मण्डलकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥ १

तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।
यथामार्गरसोपेतं प्रकृतीनां प्रवेशनम् ॥ २

ध्रुवायां संप्रवृत्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ॥ ३

स्थानं तु वैष्णवं कार्यमुत्तमे मध्यमे तथा ।
समुन्नतं समं चैव चतुरश्रमुरस्तथा ॥ ४

बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः ॥ ५

कर्णाभ्यां बाहुशिरसी स्यातामष्टाङ्गुलस्थिते ।
[1]उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ॥ ६

हस्तौ तथैव कर्तव्यौ कटीं नाभिं तु संस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वामः कटितटस्थितः ॥ ७

[2]पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
पादोत्क्षेपश्च कर्तव्यः स्वप्रमाणविनिर्मितः ॥ ८

चतुस्तालो द्वितालश्च तथा स्यादेकतालकः ।
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ॥ ९

द्वितालश्चैव मध्यानां तालः स्त्रीनीचलिङ्गिनाम् ।
[[3]चतुष्कलोऽथ द्विकलस्तथा ह्येककलः पुनः ।
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ॥

---

1 भ - ऊरुदेशाच्च 2 श्लोकार्धं भमातृकायां न दृश्यते 3 भ मातृकायां न वर्तते । म संज्ञके तु सार्धं श्लोकद्वयं कुण्डलीकृतम् ।

तथा चैककलः पातो नीचानां संप्रकीर्तितः ।
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयत्रयम् ॥
यथाप्रकृति नाट्यज्ञो गतिमेवं प्रयोजयेत् ।
स्वभावेनोत्तमगतौ जानुं कुर्यात्कटीसमम् ॥ १०

युद्धचारीप्रचारेषु जानु स्तनसमं भवेत् ।
अयं विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ॥ ११

संभ्रमोत्थानरोषेषु प्रमाणं न विधीयते ।
दृप्तानां दैत्ययक्षाणां तथा पन्नगरक्षसाम् ॥ १२

चतुस्तालप्रमाणेन कर्तव्या तु गतिर्बुधैः ।
दिवौकसां तु शेषाणां मध्यमा गतिरुच्यते ॥ १३

तत्रापि चोत्तमा ये तु तेषां देवैः समा गतिः ।
पुलिन्दाः शबराश्चैव शेषा ये म्लेच्छजातयः ॥ १४

तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ।
जलाशयमृगव्यालपशुश्वापदपक्षिणाम् ॥ १५

देशजातिसमुत्थेन गतिं भावेन योजयेत् ।
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधैः ॥ १६

पादयोः पतनं सम्यक्प्रकुर्वीत यथाक्रमम् ।
स्थैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंस्थितानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ १७

चतुष्कलं तूत्तमानां मध्यानां द्विकलं भवेत् ।
तथा चैककलं पातं नीचानां संप्रयोजयेत् ॥ १८

यः समैः संहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलश्च द्विकलस्तथा चैककलः पुनः ॥ १९

अथ मध्यमनीचैस्तु गच्छेत्संपरिवारितः ।
चतुष्कलस्तथार्धं च तथा चैककलो भवेत् ॥ २०

एवमेष तु विज्ञेयः कलानां गमने विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ॥ २१

पार्श्वाक्रान्तैः संललितैः पादैर्वाद्यान्वितैरथ ।
[1]रङ्गकोणोन्मुखो गच्छेत्सम्यक्पञ्चपदानि तु ॥ २२

एवं गतागतैर्गत्वा पदानामेकविंशतिम् ।
वामबन्धं ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ २३

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यश्रस्त्रिकोणे चतुरश्ररङ्गे गतिप्रचारश्चतुरश्र एव ॥ २४

द्रुता गतिस्तु कर्तव्या द्विकलापादपातने ।
ज्येष्ठे चतुष्कला कार्या द्विकला तत्र मध्यमे ॥ २५

द्विकला चोत्तमे यत्र मध्ये त्वेककला भवेत् ।
कलाप्रमाणं मध्ये च नीचे त्वर्धकला ततः ॥ २६

एवमर्धार्धहानिं तु कलानां संप्रयोजयेत् ।
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ॥ २७

या गतिश्चैव मध्यानां न तां नीचेषु योजयेत् ।
उत्तमानां मयोक्ता तु गतिर्विप्रा यथायथम् ॥ २८

मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ।
वणिजां मन्त्रिणां चैव गतिः कार्या स्वभावजा ॥ २९

अतिक्रान्तपदैः सा तु द्वितालान्तरगामिभिः ।
कृत्वा नाभितटे हस्तमुत्थानं कटकामुखम् ॥ ३०

आद्यं चाराळमुत्तानं कुर्यात्पार्श्वस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चैव परिवाहितम् ॥ ३१

कृत्वा गात्रं तथा गच्छेत्तेनै(न?)वाद्यक्रमेण तु ।
हासे त्वथ गतिः कार्या तथा खञ्जनवामने ॥ ३२

द्विकलार्धप्रयोगेषु कुहकाभिनयं प्रति ।
खञ्जे गतिस्तु कर्तव्या स्तब्धैकचरणाश्रया ॥ ३३

तथा द्वितीयः कार्यस्तु पादोऽग्रतलसंचरः ।
स्तब्धेनोन्नमनं कार्यमङ्गस्य चरणेन तु ॥ ३४

1 सार्धश्लोकद्वयं भ संज्ञके न विद्यते ।

गमने च निषण्णः स्यात्तथान्यचरणाश्रये ।
एष खञ्जप्रयोगेषु तलशल्यक्षते तथा ॥ ३५
पादेनाग्रतलेनाथ गतिः कार्याञ्चितेन तु ।
निषण्णदेहा कर्तव्या नतजङ्घा तथैव तु ॥ ३६
सर्वसंकोचिताङ्गी च वामने गतिरिष्यते ।
न तस्यातिक्रमः कार्यो विक्षेपश्चरणस्य तु ॥ ३७
उद्वाहिता चूर्णपदैः सा कार्या कुहकात्मिका ।
विदूषकस्यापि गतिर्हास्यत्रयविभूषिता ॥ ३८
अङ्गहास्यं कार्यहास्यं हास्यं नेपथ्यजं तथा ।
कुब्जः खञ्जोऽथ खलतिर्दन्तुरो विकृताननः ॥ ३९
यत्तादृशो भवेद्विप्रा अङ्गहास्यं तु तद्भवेत् ।
[1]यदा तु बकवद्गच्छेदुल्लोकितविलोकितैः ॥ ४०
अत्यायतपदत्वाच्चाप्यङ्गहास्यो भवेत्तु सः ।
चीरचर्ममषीभस्मगैरिकादिविभूषणैः ॥ ४१
यत्तादृशो भवेद्विप्रा हास्यं नेपथ्यजं तु तत् ।
काव्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणैः ॥ ४२
अनर्थवाक्यैर्विविधैस्तथा चाश्लीलभाषणैः ।
तस्य तु प्रकृतिं ज्ञात्वा तथा भावं विचक्षणः ॥ ४३
गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम् ।
स्वभावजायां विन्यस्य कुटिलं वामके करे ॥ ४४
दक्षिणं चैव हस्तं तु कुर्याच्चतुरकं तथा ।
पार्श्वमेकं शिरश्चापि हस्तं चरणमेव च ॥ ४५
पर्यायतः सन्नमयेल्लयताळवशानुगम् ।
स्वभावजाता तस्यैषा गतिरन्या विकारजा ॥ ४६
लाभे तथा च भुक्तस्य तुष्टे चापि गतिर्भवेत् ।
शकारस्यापि कर्तव्या गतिश्चञ्चलदेहिका ॥ ४७

---

1 अयं श्लोको भ मातृकायां न वर्तते ।

वस्त्राभरणसंस्पर्शं सम्यक्पञ्चपदानि तु ।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च ॥ ४८

परिवृत्य द्वितीयं तु गच्छेत्कोणं ततः परम् ।
तत्रापि वामवेधं तु विक्षेपो दक्षिणेन च ॥ ४९

ततो भाण्डोन्मुखो गच्छेदेतान्येव पदानि तु ।
एवं गतागतैर्गत्वा पदानि त्वेकविंशति ॥ ५०

वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च ।
एषा स्वभावगमने गतिः कार्या प्रयोक्तृभिः ॥ ५१

अवस्थान्तरयोगे तु गतिं समनुबोधत ।
अस्वस्थकाश्चिते(?) चैव भयविलासयोस्तथा ॥ ५२

आवेगे च तथा हर्षे तथानिष्टश्रुतावपि ।
कालातिक्रमणे चैव क्षेपे चाद्भुतदर्शने ॥ ५३

कार्ये आत्ययिके चैव दुःखिते चारिमार्गणे ।
अवरुद्धानुकरणे श्वापदानुगतौ तथा ॥ ५४

गतिमेतेषु भावेषु द्विकलां संप्रयोजयेत् ।
दिव्यानां नृपतीनां च गतिरेवं विधीयते ॥ ५५

अत्रोच्यते कथं देवैः समा राज्ञां गतिर्भवेत् ।
दिव्या तु प्रकृतिर्ज्ञेया तथान्या दिव्यमानुषी ॥ ५६

मानुषी चैव मन्तव्या नाट्यवृत्तिक्रियां प्रति ।
दिव्या तु देवप्रकृती राज्ञां स्याद्दिव्यमानुषी ॥ ५७

अन्या या लोकसंस्था तु मानुषी सा प्रकीर्तिता ।
तस्माद्देवानुकरणे दोषस्तत्र न विद्यते ॥ ५८

गतिः शृङ्गारिणी कार्या स्वस्थकामितसंभवा ।
चतुष्कलाप्रमाणेन सविलासा तथैव च ॥ ५९

दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूच्या चैवाप्यभिनयं प्रकुर्यादर्थसंश्रयम् ॥ ६०

हृद्यैर्वस्त्रैस्तथागन्धैर्धूपैश्चूर्णैश्च योजितैः ।
सुगन्धिभिश्च मालाभिर्विचित्राभिरलंकृतः ॥ ६१
गच्छेत्सललितैः पादैरतिक्रान्तोत्थितैरथ ।
सौष्ठवेन समायुक्तैर्लयताळवशानुगैः ॥ ६२
पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ॥ ६३
विसर्जितजनस्तत्र तथा दूतीसमन्वितः ।
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ॥ ६४
वेलासदृशवस्त्रश्च निवृत्तस्तु शनैः शनैः ।
शब्दशंक्युत्सुकश्चापि पश्चाल्लोकनतत्परः ॥ ६५
वेपमानशरीरश्च प्रस्खलंस्तु मुहुर्मुहुः ।
शङ्कितः पुरुषो गच्छेदिदृक्षुर्वल्लभं जनम् ॥ ६६
उत्तमानामियं कार्या पुरुषाणां गतिर्बुधैः ।
मध्यमानां गतिं चैव संप्रवक्ष्याम्यहं पुनः ॥ ६७
ज्वरार्ते च रुजार्ते च तपःश्रान्ते भयान्विते ।
विक्षते च्छन्नगमने त्ववहित्थे तथैव च ॥ ६८
चिन्तान्विते तथा स्वस्थ औत्सुक्ये संहृते तथा ।
गतिः स्थिरलया कार्या करणाश्रयभाविनी ॥ ६९
भये विलासिते चैव प्रमत्ते शङ्किते तथा ।
व्याधिते हर्षिते क्रोधे कार्यं तु चतुराश्रितम् ॥ ७०
संभ्रमाद्भुतसंदर्शे मुहुर्मुहुरवेक्षणैः ।
कम्पनेन च गात्राणां वस्त्रस्याकर्षणेन च ॥ ७१
सुसन्धिता चूर्णपदा शकारस्य गतिर्भवेत् ।
स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ॥ ७२
समुद्वाहितगात्रा च विलम्बितपदक्रमा ।
विष्कम्भगामिनी चैव निश्वासबहुला तथा ॥ ७३
अतिक्रान्ता च कर्तव्या तथा चूर्णपदैः सदा ।
कार्या चैव तु हीनानां चेट्यादीनां द्विजोत्तमाः ॥ ७४

अधमा इति ये ख्याता नानाशीलाः कुवृत्तयः ।
पार्श्वमेकं शिरश्चैव करं चरणमेव च ॥ ७५
नामयेत्तद्गतौ किंचित्कुजन्मा चेटसंज्ञितः ।
जातिर्नीचेषु कर्तव्या विलोकनपरा गतिः ॥ ७६
विकला बकसंचारा गात्रं सर्वं नियम्य च ।
स्वजातिसदृशी चैव तथा देहानुकर्षिणी ॥ ७७
संभ्रमे चैव हर्षे च विक्षिप्तपदविक्रमा ।
आसाद्य हास्यं तरसमेताश्चान्याश्च योजयेत् ॥ ७८
पुनश्च करुणे कार्या गतिः स्थिरपदक्रमा ।
सबाष्पः साश्रुनयनः सन्नगात्रस्तथैव च ॥ ७९
उत्क्षिप्तपातितकरः तथा सस्वनरोदनैः ।
गच्छेदथाध्यर्धिकया प्रत्यग्राप्रियसंश्रयात् ॥ ८०
एषा स्त्रीषु प्रयोक्तव्या नीचसत्त्वेषु चैव हि ।
उत्तमानां तु कर्तव्या सबाष्पा धैर्यसंयुता ॥ ८१
निश्वासैरायतोत्सृष्टैस्तथा चोर्ध्वनिरीक्षणैः ।
न तत्र सौष्ठवं कार्यं न प्रमाणं यथोदितम् ॥ ८२
नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ।
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया ॥ ८३
विघूर्णितशरीरा च गतिश्चूर्णपदैरथ ।
गतिः काञ्चुकिनी प्रोक्ता वयोऽवस्था विशेषतः ॥ ८४
वृद्धे वा मध्यमे वापि तथा चैव कनीयसि ।
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तदा ॥ ८५
उद्वहन्निव गात्राणि पङ्कमग्न इव व्रजेत् ।
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका ॥ ८६
विष्कम्भितगतिप्राणा मन्दोत्क्षिप्तपदा तथा ।
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च ॥ ८७
गतिं प्रयोक्तृभिः कुर्यात्स्त्रीनीचप्रकृतैः सदा ।
पिण्डीकृत्य च गात्राणि तेषां चैव प्रकम्पनात् ॥ ८८

करौ वक्षसि निक्षिप्य कुब्जदेहा तथैव च ।
दन्तोष्ठस्फुरणाच्चैव चिबुकस्य प्रकम्पनात् ॥ ८९

शनैः शनैश्च कर्तव्या शीतार्ताभिनये गतिः ।
उष्णे चापि प्रयोक्तव्या गतिर्दाहसमाकुला ॥ ९०

नेत्रसंकोचनस्वेदगात्रसंहरणान्विता ।
अतिक्रान्तैरपक्रान्तैरेलकाक्रीडितैस्तथा ॥ ९१

क्रमैरभिनयैर्युक्ता तथा चूर्णपदैरपि ।
एतानन्यांश्च युञ्जीत नाट्यज्ञैः करुणे रसे ॥ ९२

रौद्रे रसे प्रवक्ष्यामि दैत्यरक्षोगणान्प्रति ।
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ॥ ९३

नेपथ्यरौद्रो विज्ञेयः स्वाङ्गरौद्रस्तथैव च ।
अथ स्वभावजश्चैव त्रिधा रौद्रः प्रकीर्तितः ॥ ९४

रुधिरक्लिन्नदेहो यो रौद्राभिविकृताननैः ।
तथा पिशितहस्तश्च रौद्रो नैपथ्यजस्तु सः ॥ ९५

बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायस्त्वतिप्रांशुरङ्गरौद्रस्तु स स्मृतः ॥ ९६

रक्ताक्षः पिङ्गकेशश्च कृष्णाङ्गो विकृतस्वरः ।
रौद्रनिर्भर्त्सनकथो रौद्रोऽयं स्यात्स्वभावजः ॥ ९७

चतुस्तालोत्तरोत्क्षिप्तैः पादैरभ्यन्तरपातितैः ।
गतिरेवं प्रकर्तव्या शेषा ये चापि तद्विधाः ॥ ९८

एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।
विग्रहः प्रहसश्चैव तथा शृङ्गार इष्यते ॥ ९९

तथा भयानके चापि गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ १००

विष्फारितचलन्नेत्रो विधून्वन् स्वशिरस्तथा ।
भयाकुलितचित्तत्वात्पार्श्वानि च विलोकयन् ॥ १०१

द्रुतैश्चूर्णपदैश्चैव कृत्वा हस्तं कपोतकम् ।
प्रलेपितशरीरस्तु शुष्कोष्ठश्च स्खलन्व्रजेत् ॥ १०२

एषानुकरणे कार्या तर्जने कलहे तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतस्वरम् ॥ १०३
एषा स्त्रीणां प्रयोक्तव्या स्त्रीणां चाक्षिप्तविक्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ १०४
एळकाक्रीडितैः पादैरुपर्युपरिपातितैः ।
एषामेवानुगैर्हस्तैर्गतिर्भीतेषु योजयेत् ॥ १०५
अहृद्या तु मही यत्र श्मशानरणकश्मला ।
गतिस्तत्र प्रकुर्वीत बीभत्साभिनयं प्रति ॥ १०६
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
अतिक्रान्तैः पदैर्गच्छेज्जुगुप्सितगतिं प्रति ॥ १०७
तथा वीरे च कर्तव्या पादविक्षेपसंयुता ।
द्रुतप्रचारणाविद्धा नानाचारीसमाकुला ॥ १०८
पार्श्वाक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च ।
कलाताळगतैः पादैरावेगे योजयेद्गतिम् ॥ १०९
विटस्यापि तु कर्तव्या गतीर्ललितविक्रमाः ।
किंचिदाकुञ्चितैः पादैस्ताळाभ्यन्तरपातितैः ॥ ११०
रङ्गसौष्ठवसंयुक्तं तथा हस्तौ कटिस्थितौ ।
खटकावर्धमानौ च कृत्वा कार्या विटे गतिः ॥ १११
कृशाङ्गानां तु कर्तव्या गतिर्मन्दपरिक्रमा ।
व्याधिग्रस्तो ज्वरार्तश्च तपश्श्रान्तः क्षुधान्वितः ॥ ११२
विष्टम्भनगतप्राणस्तथा क्षामोदरः सदा ।
क्षामस्वरकपोलश्च सन्नगात्रस्तथैव च ॥ ११३
हस्तपादसमुत्क्षेपं शनैस्तत्र प्रयोजयेत् ।
कम्पनं चैव गात्राणां श्लथनं चैव योजयेत् ॥ ११४
प्रकर्तव्याध्वगस्यापि गतिर्मन्दपदक्रमा ।
विकूणनेन वक्त्रस्य जानुनोश्च विमर्शनात् ॥ ११५
नीचानां मध्यमानां च गतिः कार्या सदा बुधैः ।
ताळमात्रोत्थितैः पादैस्तथा व्याकुञ्चिताञ्चितैः ॥ ११६

यतिनश्चाश्रमस्था ये ये चान्ये तपसि स्थिताः ।
ऋषयस्तापसाश्चैव नैष्ठिकं व्रतमास्थिताः ॥ ११७

आलोलचक्षुः स्याच्चैव युगमात्रनिरीक्षणे ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं नियम्य च ॥ ११८

अचञ्चलमनाश्चैव गच्छेल्लिङ्गसमाश्रितः ।
विनीतवेषश्च तथा काषायवसनोऽपि च ॥ ११९

प्रथमं समपादेन स्थित्वा स्थानेन नाट्यवित् ।
हस्तं चतुरकं कृत्वा तथा चैतत्प्रसारयेत् ॥ १२०

प्रसन्नवदनं कृत्वा प्रयोगस्य वशानुगम् ।
सुनिषण्णेन गात्रेण गतिं कुर्याद्यतेस्तथा ॥ १२१

उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु लिङ्गिषु ॥ १२२

तथा व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः ।
हस्तौ तदनुगौ चापि यथायोगं प्रयोजयेत् ॥ १२३

[1]विभ्रान्ता वा ह्युदात्ता च विक्रान्ता विहृता तथा ।
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ॥ १२४

कार्या पाशुपतानां च गतिरुद्भ्रान्तगामिनी ।
[2]एवं लिङ्गस्थितानां हि प्रयोज्यैव गतिर्बुधैः ॥ १२५

अन्धस्येव गतिं कुर्यादन्धकारेषु योगवत् ।
भूमौ विसर्पितैः पादैर्हस्तदर्शितमार्गकैः ॥ १२६

रथस्थस्यापि कर्तव्या गतिश्चूर्णपदक्रमा ।
समपादन्तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ १२७

धनुरेकेन हस्तेन गृहीत्वान्येन सायकम् ।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ॥ १२८

करणानि विचित्राणि कर्तव्यानि विभागतः ।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डलम् ॥ १२९

---

1 श्लोकार्धं भसंज्ञके नास्ति 2 श्लोकार्धं भादर्शे न वर्तते ।

विमानस्थस्य कर्तव्या गती रथगतोपमा ।
आरोढुमुद्वहेद्गात्रं किंचित्स्यादुन्मुखस्तथा ॥ १३०
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।
अधोऽवलोकनेनैव मण्डलावर्तनेन च ॥ १३१
आकाशगमने चैव कर्तव्यं गतिचेष्टितम् ।
स्थानेन समपादेन तथा चूर्णपदैरथ ॥ १३२
व्योम्नस्त्ववतरेद्यस्तु तस्येमां कारयेद्गतिम् ।
ऋज्वायतोन्नतनतैः कुटिलावर्तितैस्तथा ॥ १३३
भ्रममाणस्य चाकाशादपकृष्टभुजागतिः ।
विकीर्णवसना चैव तथा भूगतलोचना ॥ १३४
द्रुमप्रासादशैलेषु नदीनिम्नोन्नतेषु च ।
आरोहणावतरणं कार्यमर्थवशाद्बुधैः ॥ १३५
प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।
[1]उद्वाह्य गात्रं पादं च सोपानं निक्षिपेद्बुधः ॥ १३६
तथावतरणे चैव गात्रमानम्य रेचयेत् ।
अतिक्रान्तेन पादेन द्वितीयेनाश्रितेन च ॥ १३७
प्रासादारोहणं यत्तु तद्देवादिषु कारयेत् ॥
केवलं तूर्ध्वविक्षेपमद्रिष्वङ्गं भवेदथ ॥ १३८
द्रुमे चारोहणं कार्यमतिक्रान्तोत्थितैः पदैः ।
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥ १३९
एवं देवावतरणं प्रयोज्यं सरिदादिषु ।
प्रासादेषु तथा प्रोक्तं तथैवोत्तरणं भवेत् ॥ १४०
द्रुमप्रासादशैलेभ्यः संज्ञामात्रेण दर्शयेत् ।
[1]जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥ १४१
तोयेऽल्पे वसनोत्कर्षैः प्राज्ये पाणिविकर्षणैः ।
किंचिन्नताग्रकाया तु प्रतारे गतिरिष्यते ॥ १४२

---

1 श्लोकत्रयं भसंज्ञके न दृश्यते ।

प्रसार्य बाहुमेकैकं मुहुर्वारिविकर्षणैः ।
तिर्यक्प्रसारिता चैव ह्रियमाणा स्ववारिणा ॥ १४३

अशेषाङ्गाकुलाधूतवदना गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या द्रुतैश्चूर्णपदैर्गतिः ॥ १४४

अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् ।
(संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम्) ॥ १४५

अङ्कुशग्रहणान्नागं प्रग्रहग्रहणाद्रथम् ।
खलीनग्रहणादश्वं नावं चैवावरोहणात् ॥ १४६

अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
तथा चूर्णपदैश्चैव ह्युपर्युपरिपातितैः ॥ १४७

पन्नगानां गतिः कार्या पादैः स्वस्तिकसंस्थितैः ।
पार्श्वाक्रान्तक्रमं कृत्वा स्वस्तिकं योजयेत्तथा ॥ १४८

मत्तानां तु गतिः कार्या तरुणे मध्यमे मदे ।
वामदक्षिणपादाभ्यां घूर्णमानापसर्पणात् ॥ १४९

[2]आकाशस्खलितैः प्रायः पादैश्चाप्यनवस्थितैः ।
विघूर्णितशरीरा च करैः प्रचलितैस्तथा ॥ १५०

उन्मत्तस्यापि कर्तव्या गतिस्त्वनियमक्रमा ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥ १५१

रूक्षस्फुरितकेशस्तु रेणुध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवाक् ॥ १५२

प्रगीतहसितश्चापि नानाविकृतभूषणः ।
नृत्ते गीते च वाद्ये च भाषणे च सदारतः ॥ १५३

कदाचिद्धावति जवात्कदाचिदवतिष्ठते ।
कदाचिदुपविष्टस्तु शयानश्च कदाचन ॥ १५४

नानाचीरधरश्चैव रथ्यास्वनियतालयः ।
उन्मत्ताभिनयस्त्वेवं तस्येमां कारयेद्गतिम् ॥ १५५

---

1 सार्धं श्लोकचतुष्टयं भसंज्ञके न वर्तते 2 म - अपक्रुष्टमदे चैव ।

स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ।
कृत्वा चारीं तथोद्भ्रद्धामथ स्वस्तिकमेव च ॥ १५६

अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् ।
वक्रं तु भ्रमणं चैव रङ्गकोणेषु योजयेत् ॥ १५७

त्रिकं सललितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पादैर्हंसगतिं व्रजेत् ॥ १५८

सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ।
[1]या कृता नरसिंहेन विष्णुना प्रभविष्णुना ॥ १५९

आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
ऊर्ध्वजानु च विक्षिप्य करमेकं च संस्थितम् ॥ १६०

विलोलितं शिरः कृत्वा चिबुकं बाहुमस्तके ।
गन्तव्यं विक्रमैश्चैव पञ्चतालान्तरस्थितैः ॥ १६१

[2]नियुद्धे संशये चैव रङ्गावतरणे तथा ।
सिंहादीनां च योक्तव्या गतिरेषा प्रयोक्तृभिः ॥ १६२

शेषाणामर्थयोगेन स्थानान्यपि तु कारयेत् ।
गजवाजिरथादींस्तु चिह्नमात्रेण कारयेत् ॥ १६३

वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ।
एवमेताः प्रयोक्तव्या नृणां तु गतयो बुधैः ॥ १६४

अत्र नाभिहिता यास्तु विज्ञेयाः शास्त्रलोकतः ।
[3]अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥ १६५

स्त्रीणां स्थानानि कार्याणि गतिष्वाभाषणेषु च ।
आयतं चावहित्थं च तथाश्वक्रान्तमेव च ॥ १६६

दक्षिणस्तु समः पादस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामो नतः कटीपार्श्वमायतस्थानके भवेत् ॥ १६७

1 भ - था पुरा च कृतासम्यक् 2 भसंज्ञके नास्ति 3 श्लोकार्धं भ - संज्ञके न वर्तते ।

अथवा—

[1]वामः स्वाभाविको यत्र पादो विरचितस्ततः ।
तालमात्रान्तरे न्यस्तस्त्र्यश्रः पक्षस्थितोऽपरः ॥ १६८

प्रसन्नमाननमुरस्समं यत्र समुन्नतम् ।
लतानितम्बगौ हस्तौ ज्ञेयं स्थानं तदायतम् ॥ १६९

रङ्गावतरणारम्भं पुष्पाञ्जलिविसर्जनम् ।
मन्मथेर्ष्योद्भवः कोपस्तर्जनाङ्गुलिमोटनम् ॥ १७०

निषेधगर्वगाम्भीर्यमौनमायावलम्बनम् ।
स्थानेऽस्मिन् सन्निधानीयं दिगन्तरनिरूपणम् ॥ १७१

आवाहने विसर्गे च तथा निर्वर्णनेषु च ।
चिन्तायामवहित्थे च स्थानमेतत्प्रयोजयेत् ॥ १७२

समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितोऽपरः ।
वामोन्नतं त्रिकं यस्मिन्नवहित्थं तदुच्यते ॥ १७३

स्थानमेतत्तु नारीणां सल्लापे तु स्वभावजे ।
निश्चये परितोषे च वितर्के लज्जिते तथा ॥ १७४

एकः समस्थितः पाद एकस्त्वत्र तलाश्रितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥ १७५

[2]स्खलिते घूर्णिते चैव स्खलिताम्बरधारणे ।
चित्रासने सललिते स्थानमेतत्तु रक्षणे ॥ १७६

शाखावलम्बने कार्या स्तबकग्रहणे तथा ।
विश्रान्तिषु तथैव स्यात्पादताडन एव च ॥ १७७

[3]स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ।
भग्नं च स्थानकं नृत्ते (नृत्त) चारीसमन्विताः ॥ १७८

एवं स्थानविधिः कार्यः स्त्रीणां सम्यग्द्विजोत्तमाः ।
पुनरासां प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥ १७९

---

1 श्लोकाश्चत्वारो भसंज्ञकादर्शे न विद्यन्ते 2 भसंज्ञके श्लोको नास्ति
3 अयं श्लोको भसंज्ञके न दृश्यते ।

कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ॥ १८०

ततः सललितं पादं तालमात्रं समुत्थितम् ।
दक्षिणं वामपादस्य बाह्ये पार्श्वे विनिक्षिपेत् ॥ १८१

तेनैव समकालं च लताख्यं वामकं भुजम् ।
दक्षिणं च नयेत्पार्श्वं न्यसेन्नाभितटे ततः ॥ १८२

नितम्बे दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् ।
ततो वामपदं दद्याल्लताहस्तं च दक्षिणम् ॥ १८३

लीलयोद्वाहितेनाथ शिरसानुगतेन च ।
किंचिन्नतेन चाङ्गेन गच्छेत्पञ्चपदीं ततः ॥ १८४

यो विधिः पुरुषाणां तु रङ्गपीठपरिक्रमे ।
स एव प्रमदानां तु कर्तव्यो नाट्ययोक्तृभिः ॥ १८५

षट्कलं न प्रयोक्तव्यं तथाष्टकलमेव च ।
पादस्य पतनं तज्ज्ञैः खेदजं तद्भवेत्स्त्रियाः ॥ १८६

सयैवनानां नारीणां कार्या त्वेवं गतिर्बुधैः ।
स्थानीया या स्त्रियस्तासां संप्रवक्ष्याम्यहं गतीः ॥ १८७

कृत्वाऽवहित्थं स्थानं तु वामं न्यस्य कटीतटे ।
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ॥ १८८

न निषण्णं न च स्तब्धं न चैव परिवाहितम् ।
कृत्वा गात्रं ततो गच्छेत्तेनैवाद्यक्रमेण तु ॥ १८९

प्रेष्याणामपि कर्तव्या गतिर्विभ्रान्तगामिनी ।
किंचिदुन्नमितैर्गात्रैराविद्धपदविक्रमा ॥ १९०

स्थानं कृत्वावहित्थं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ॥ १९१

अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ॥ १९२

या मयाभिहिता पूर्वमुत्तमानां गतिर्बुधाः ।
स्त्रीणां कापुरुषाणां च ततोऽर्धार्धं च कारयेत् ॥ १९३

उत्तमाधममध्यानां नृणां यद्गतिचेष्टितम् ।
स्त्रीणां तदेव कर्तव्यं ललितैः पदविक्रमैः ॥ १९४

बालानामपि कर्तव्या स्वच्छन्दपदविक्रमा ।
न तस्यां सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥ १९५

[1]तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसके ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥ १९६

विपर्यस्तप्रयोगस्तु पुरुषस्त्रीनपुंसके ।
स्वभावमात्मनस्त्यक्त्वा परभावेन योजयेत् ॥ १९७

निजां प्रकृतिमुत्सृज्य क्रीडया वञ्चनेन वा ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ १९८

सौष्ठवेनाथ सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं ह्यभिनयेद्वेषवाक्यविचेष्टितैः ॥ १९९

स्त्रीवेषभाषितैर्युक्तं प्रेक्षिताप्रेक्षितस्मितैः ।
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ॥ २००

[2]जातिहीनास्तु या नार्यः पुलिन्द शबराङ्गनाः ।
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ॥ २०१

व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथा पुनः ।
खस्थानां चैव नारीणां समपादं प्रयोजयेत् ॥ २०२

उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि वा ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् ॥ २०३

अथासनविधिः कार्यः स्त्रीणां नृणां तथैव च ।
नानाभावसमायुक्तं तथैव शयनाश्रयः ॥ २०४

[3]स्वस्थं मन्दालसं क्रान्तं[4] स्रस्तालसमथापि च ।
[5]विष्कम्भकमुत्कटिकं मुक्तजानु तथासनम् ॥ २०५

जानूगतं विमुक्तं च स्थानकान्युपवेशने ।
लक्षणं पुनरेतेषां विनियोगं च वक्ष्यते ॥ २०६

---

1 एकः श्लोकः भमातृकायां न वर्तते 2 श्लोकत्रयं भसंज्ञके न विद्यते 3 श्लोकद्वयं भमातृकायां नास्ति 4 न - कान्तं 5 न - विष्कंभितमुत्कटिकम् ।

विष्कम्भेनाश्रितौ पादौ किंचिद्वक्षः समुन्नतम् ।
हस्तौ कटचूरुविन्यस्तौ [1]स्वस्थे स्यादुपवेशने ॥ २०७

स्वभावाभिनये चैव तथा स्वस्थोपवेशने ।
[2]आविष्कृतेषु सर्वेषु भावेष्वेतत्प्रयोजयेत् ॥ २०८

[3]एकः प्रसारितः किंचित्पादोऽन्यस्त्वासनाश्रितः ।
[4]शिरः [5]पार्श्वगतं चैव स्थानं मन्दालसं तु तत् ॥ २०९

चिन्तायां च तदौत्सुक्ये निर्वेदे विरहे तथा ।
विवादादिषु चाधेयं स्थानमेतत्प्रयोक्तृभिः ॥ २१०

चिबुकापाश्रयौ हस्तौ बाहुशीर्षाश्रयं शिरः ।
[6]संप्रनष्टेन्द्रियमना विज्ञेयं [7]क्रान्तमासनम् ॥ २११

[8]बलेन विगृहीतस्य रिपुणा खण्डितस्य च ।
शोकग्लानस्य चौत्सुक्ये स्थानमेतद्विनिर्दिशेत् ॥ २१२

स्रस्तौ हस्तौ विमुक्तौ च शरीरमलसं तथा ।
खेदालसं तथा चक्षुर्यत्र स्रस्तालसं तु तत् ॥ २१३

श्रमग्लानौ मदे चैव मूर्छायां व्याधितेषु च ।
मोहे प्राणभये चैव विषादे चैव तद्भवेत्[9] ॥ २१४

---

1 भ - स्वभावापि प्रवेशने (मध्ये लुप्तः स्यात्) 2 म - अविकृतेषु 3 न - एकः प्रसारितः पादस्त्वन्यश्चैवासनाश्रितः 4 भ - "शिरः पार्श्वगतं चैव चिन्तायुक्तोपवेशने"—इति सार्धश्लोकद्वयस्थाने । 5 न - पार्श्वानतं कार्यं

6 संप्रनष्टेन्द्रियमना भवेच्छोकोपवेशने ।
प्रसार्य बाहू शिथिलौ तथाचापाश्रयाश्रितः ॥
श्रमग्लानिविषादेषु मदे चोपविशेद्बुधः ।
सर्वैः पिण्डीकृतैरङ्गैः स्रस्ताङ्घ्रिकरजानुकम् ॥
व्याधावार्तौ च निद्रायां ध्याने चोपविशेन्नरः ।
तथा चोत्कटिकं स्थानं पुनः पार्ष्णिसमागमः ॥
पित्रोर्निवापजप्ये च सन्ध्यास्वाचमनेषु च ।
आकुञ्चितः पुनश्चैव जानु भूमौ निपातयेत् ॥
प्रियप्रसादने कार्यं होमादिकरणेषु च ।
इति सार्धश्लोकाष्टकस्थाने भसंज्ञके वर्तते ।

7 न - कान्तं 8 न - छलेनापि 9 न - विषादेषूपवेशयेत् ।

विष्कम्भादञ्चितौ पादावूरू विष्कम्भितौ भुजौ ।
निमीलिते तथा चक्षुः स्थाने विष्कम्भनामनि[1] ॥ २१५

स्ववक्षोगतया दृष्ट्या योगध्याने विलीयते ।
स्वभावसंस्थया चैव नटानामुपगम्यते[2] ॥ २१६

समौ पादौ समाधाय समं यदुपविश्यते ।
अस्पृष्टभूतलं चैव ज्ञेयमुत्कटिकासनम् ॥ २१७

पित्र्ये समाधिजप्ये च होमादिकरणेषु च ।
एतत्स्थानं विधातव्यं तथाचमनकर्मणि ॥ २१८

एकं जानु यदास्यैव महीपृष्ठे निधीयते ।
मुक्तजानुकमेतद्धि विज्ञेयं ह्यासनं बुधैः ॥ २१९

एतत्कृतव्यलीकानां प्रियाणां संप्रसादने ।
मार्जने कुट्टिमानां च तथाभूम्यनुलेपने ॥ २२०

[3]महीगताभ्यां जानुभ्यां स्थानं जानूगतं भवेत् ।
[4]देवाभिवन्दने कार्यं रुष्टानां च प्रसादने ॥ २२१

शोके चाक्रन्दने तीव्रे [5]मृतानां चैव दर्शने ।
[6]संत्रासने कुसत्त्वानां नीचानां चैव याचने ॥ २२२

[7]भूमौ यदूर्ध्वपतनं तद्विमुक्तमिति स्मृतम् ।
प्रहारे तत्प्रयोक्तव्यमावेगे क्रन्दिते तथा ॥ २२३

[8]तथासनविधिः कार्यो विधिवन्नाटकाश्रयः ।
स्त्रीणां च पुरुषाणां च बाह्योऽथाभ्यन्तरस्तथा ॥ २२४

देवानां नृपतीनां च योज्यं सिंहासनं तथा ।
पुरोधःश्रेष्ठ्यमात्यानां भवेद्वेत्रासनं तथा ॥ २२५

मुण्डासनं तु कर्तव्यं सेनानीयुवराजयोः ।
काष्ठासनं ब्राह्मणानां कुमाराणां कुथासनम् ॥ २२६

स्थानीया ये तु पुरुषाः कुलविद्याप्रकाशिताः ।
तेषामासनसत्कारः कर्तव्यो गुरुपार्थिवैः ॥ २२७

---

1 न - गामिनि 2 न - जटानामुपवेशने 3 भ - महीगताभ्यां पादाभ्यामधोमुखमवस्थितम् 4 न - देवपूजाभिगमने कुपितप्रियथाचने 5 न - भूतानां 6 न - त्रासने च 7 श्लोकोऽयं भसंज्ञके न विद्यते 8 न - अथासनविधिः ।

समे समासनं चैव मध्ये मध्यं तथासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं तथा ॥ २२८

उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः ।
भूम्यासनं तथा कार्यं काष्ठासनमथापि वा ॥ २२९

नौनागरथभूमीषु तथा काष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥ २३०

एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः ।
प्रकृतीनां तु सर्वासां तथा ज्ञानसमुत्थितम् ॥ २३१

पुरुषाणां भवेदेष विधिरासनसंश्रयः ।
स्त्रीणां चैवासनविधिं संप्रवक्ष्याम्यतः परम् ॥ २३२

सिंहासनं महादेव्या राज्ञीनां मुण्डमासनम् ।
पुरोधोऽमात्यपत्नीनां भवेद्वेत्रासनं तथा ॥ २३३

भगिनीनां तु कर्तव्यं वस्त्रचर्मकुथापि वा ।
[1]ब्राह्मणीनां तापसीनां पट्टासनमथापि च ॥ २३४

वेश्यानामपि कर्तव्यमासनं हि मसूरकम् ।
शेषाणां प्रमदानां तु भवेद्भूम्यासनं बुधाः ॥ २३५

एवमन्तःपुरे ज्ञेयो बाह्यश्चासनतो विधिः ।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥ २३६

नियमस्थो मुनीनां तु भवेदासनतो विधिः ।
लिङ्गिनां चासनविधिः कार्यो व्रतसमाश्रयः ॥ २३७

[2]ब्रसीमुण्डासनप्रायं वेत्रासनमथापि च ।
होमयज्ञक्रियायां च पित्र्यर्थे च प्रयोजयेत् ॥ २३८

आकुञ्चितं समं चैव प्रसारितविवर्तिते ।
उद्वाहितं नतं षोढा शय्यास्थानानि निर्दिशेत् ॥ २३९

[3]सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी ।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् ॥ २४०

---

1 भ - एकः श्लोको भसंज्ञके नास्ति 2 श्लोकाः षट् भसंज्ञायां मातृकायां न वर्तन्ते।

उत्तानितमुखं चैव प्रत्यञ्चुक्तकरं तथा ।
समं नाम प्रसुप्तस्य स्थानकं संविधीयते ॥ २४१

एकं भुजमुपाधाय संप्रसारितजानुकम् ।
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् ॥ २४२

अधोमुखस्थितं चैव विवर्तितमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ २४३

हस्तोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितं तु विज्ञेयं लीलयाविशने विभोः ॥ २४४

ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ २४५

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यश्रे त्रिकोणश्चतुरश्रके वा समैर्गतैरर्थवशेन नित्यम् ॥ २४६

वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपेण गतिप्रचारः ।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ २४७

गतिप्रचारस्तु मयोदितोऽयं नोक्तस्तु यः सोऽर्थवशेन साध्यः ।
अतःपरं रङ्गपरिक्रमस्य वक्ष्यामि कक्ष्यानुगतं विभागम् ॥ २४८

इति श्रीभारतीये नाट्यशास्त्रे गतिप्रचारो नाम
द्वादशोऽध्यायः ।

---

# नाट्यशास्त्रम्

## त्रयोदशोऽध्यायः †

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः *कक्ष्यां प्रयोजयेत् ॥ १

देहस्तु(स्य ?) बाह्यान्तरभेदिकक्ष्या-
विभागधर्मीविविधां प्रवृत्तिम् ।
आसूत्रयन्दोषविशुद्धिदक्ष-
‡क्रमोऽर्कदृष्टिर्जयताद्वृषाङ्कः ॥

इहाभिनयानन्तरं यद्यपि सर्वा वृत्तिप्रवृत्तय उद्दिष्टाः सर्वान्ते च रङ्गे (३.६) सूचिता कक्ष्या[1], तच्चतुर्विधाभिनयाभिधानानन्तरमेतदध्यायार्थो वक्तव्यः । तथापि प्रत्यभिनयमियतीतिकर्तव्यतोपयुज्यते । तदभिधानं विना-(ना-)ङ्गिकमेवोक्तं[2] स्यादिति वक्तव्यम् । [3]तदुद्देशे तु सामान्यशब्दत्वान्नास्ति प्रत्येकमुद्देशने [4]गतिः । तथोद्देशनेऽपि च गौरवं स्यात् । अत एवंवादिना[5] कक्ष्यादेरपृथग्भावे यो हेतुरुक्तः [6]क्रमोल्लङ्घनादिति तस्यासिद्धत्वं विरुद्धता च, प्रत्युत प्रत्येकप्रसङ्गत्वलाभात् क्रमस्यापदार्थत्वान्नार्थप्रमाणकत्वान्मुख्यश्रौतपदार्थ-बाधकत्वमयुक्तं, श्रुत्या वाक्यप्रमाणस्य बाधनादिति तु भट्टलोल्लटोक्तं प्रकृते सिध्यति विरोधाभावात्, क्रमस्य च मध्यत्वात् गतिरूपप्रयोगहेतुत्वात्,

† कखचभम संज्ञेषु विना सर्वेष्वादर्शेषु 'चतुर्दशोऽध्यायः' इति वर्तते । कक्षाशब्दः * कखचद संज्ञेषु मात्र एव लिखितोऽपि, कक्ष्येति यान्तेषु विश्वप्रकाशामरहेमादिषु पठितत्वात् तद्रूपमेव गृहीतम् । अभिनवभारत्यादर्शयोरपि तदेव भाति ॥

‡ क्रमशब्देनः पादः स्थानकभेदश्च सूचितः । पादस्तु षट्त्रिंशत्तत्त्वमध्ये त्रयोदशतत्त्वम् । स्थानकं तु गतिप्रधानत्वात्कक्ष्यायां विनियुक्तम् । *षष्ठेऽध्याये दशमश्लोके उपादेयांशा उद्दिष्टाः तत्र कक्ष्या न दृश्यते ।

1 क - सूचिताकक्ष्या ख - सूचिताःकार्याः 2 ख - उक्ता 3 कख - तद्देशे 4 ख - इतिः 5 क - एव वादिना ख - एवोपादिना 6 क - योगेत्युक्तः ।

[1]ये [2]नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते[3] ।
[4]तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥
[5]कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।

---

अतस्तदवसर एवाभिधानं युक्तम् । [1]तद्द्वारेणाभिनयाङ्गतामगात् । [2]तद्देशत्रयं [3]वक्तृत्रयं वक्तव्यम् । तत्र प्रथमं कक्ष्याभिधानेऽयमभिप्रायः इह[4] गतिर्गन्तव्यदेशाश्रयात्, देशश्च[5] जलस्थलादि[6] बहुतरसमविषमादिस्वभेदसहितं काव्यार्थतामात्रेणैवेह संभवन्नपि प्रयोगस्थाने न संभवत्येवेति, तस्य परिहारार्थं [7]कक्ष्यानिरूपणं कर्तव्यम् । अत एव पूर्वाध्यायान्त उक्तं परिक्रमे गतावुपयोगिनं स्थानविशेषाणां सम्यग्विभागं वक्ष्यामीति । सेयमध्यायसंगतिस्तां दर्श[8]यितुमाह ये तु पूर्वमिति । तु शब्दाद्दूरत्वं पूर्वतायाः सूचयन् द्वितीयाध्यायार्थं स्मारयति तेषामिति प्रत्येकमित्यभिप्रायः । मण्डपस्य यो विशिष्टो भागोऽन्तरङ्गपीठात्मकस्तं विज्ञाय विभागतो ज्ञात्वा कक्ष्यागत्युपयोगिनं स्थानविशेषं प्रयोजयेत्, विभागेन संबन्धं नयेत् । नाट्यदेशानुसारेण [9]प्रकोष्ठे त्यक्ते यो देशोऽवशेष्यते तत्रैव चातुरश्रीयम् । अत एव वामदक्षिणभागयोः कृतपविन्यासः शिष्टे[10] कक्ष्याविभागः ।

रङ्गस्य [11]को विभाग इत्याह ये नेपथ्यगृहद्वार इत्यादि । (पूर्वमिति) द्वितीयाध्याये प्रकीर्तिते भाण्डस्य [12]ततातोद्यसहितस्य त्रिपुष्करस्य । ततः किमित्याह कक्ष्याविभाग इति । तेन भाण्डेन[13] यत्परित आक्रान्तं तद्विवर्ज्य[14] शेषे रङ्गपीठदेशे निष्क्रमणप्रवेशगत्याद्युपयोगी स्थानविभागो निर्देश्यः प्रेक्षकावधिः

---

1 भम - नेपथ्यरङ्गभूमौ तु यौ विभागौ प्रकीर्तितौ 2 ढ - नैपथ्य 3 न - प्रकीर्तिताः 4 न - तेषां 5 भम - कक्ष्याविभागौ निर्देश्यौ रङ्गपीठपरिक्रमैः ।

---

1 ख - तद्द्वारेऽभिनयाङ्ग 2 क - तद्देह 3 ख - वस्तु 4 क - अतिप्रायन्तु वा 5 क - देशाश्रयात्मदेशाश्च 6 क - स्थलानि 7 क - कक्ष्यादिरूपणं 8 क संगतिम् 9 क - च दोषे त्यक्तो वा विशिष्यते 10 क - श्लिष्टे 11 क - कोऽपि 12 क - ने पक्षातोन्य 13 क - दण्डेन 14 क - विभज्य ।

[1]परिक्रमेण रङ्गस्य [2]ह्यन्या कक्ष्या भवेदिह ॥ ३
कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च[3] ।
उद्यानाराम[4]सरितस्त्वाश्रमा [5]अटवी तथा ॥ ४
[6]पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
[7]वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा[8] ॥ ५
[9]आलोकश्चैव लोकश्च रसातलमथापि च ।
[10]दैत्यनागालयाश्चैव गृहाणि[11] भवनानि च[12] ॥ ६

संक्रमयितव्यः । ननु [1]कः स्थानविभागः आह—परिक्रमेणेति । परिक्रामन्त्यनेनेति परिक्रामः चार्यादिसंनिवेशः तद्वशादेकस्यापि रङ्गदेशस्य स्थानभेदनापत्यागः[2], यथा—"आरोढुमुद्वहेद्गात्रं", "अतिक्रान्तेन पादेन" (१२-१०२) इत्यादिना विशेषे तु प्रासादपर्वतादिरूपत्वमस्यैव । ननु भाण्डवाद्यविनिर्मुक्ते रङ्गपीठदेशे क्रमविशेषस्थानभेद क्लृप्तिः । [3]तन्नेत्याह कक्ष्याविभाग इत्यादि विशिष्टे शिष्टे देशे स्थानान्तराणि कल्पनीयानि तानि कविजनस्मरणार्थमुपलक्षणत्वेन पठन्ति । [4]गृहादीनि पृथिवीस्वर्गपातालभेदात्पुनरुदाहृतानि सर्वसंग्रहाय त्रैलोक्यमित्युक्तेऽपि स्मरणार्थं [5]वर्णनोद्देशः ।

ननु सर्वत्र प्रयोगे सर्वे त्रैलोक्यवर्तिनः स्थानभेदात्किं संभाविन[6]ः, नेति दर्शयति नगरे वेत्यादि । निपातैरनुक्ता अटव्यादयः साक्षात्[7] । तथा

1 ट - परिक्रमे च 2 ड - कक्ष्या ह्यन्या विधीयते द - अन्यकक्ष्या भवेद्यतः भम - कक्ष्यान्या त्वभिधीयते 3 म - नगराणि गृहाणि च 4 ड - सहितो देशो ग्रामोऽटवी तथा ट - सरित आश्रमा वलभीस्तथा 5 मभ - वलभीः 6 भमयोरस्य श्लोकस्य पूर्वोत्तरार्धे विपर्यस्ते । पाठस्तु—ससागरा च पृथिवी तथा त्रैलोक्यमेव च । द्वीपाः सप्ताथ वर्षाणि 7 प - द्वीपाश्च सप्तवर्षाणि 8 द - चतुर्थश्लोकानन्तरं "परिक्रमेण रङ्गस्य तथैवार्थवशेन च" इति श्लोकार्धं दृश्यते 9 द - सार्धं श्लोकद्वयं न वर्तते 10 ड - दैत्यानामालयश्चैव 11 ड - भुवनानि 12 भमयोः—भवनानि च । परिक्रमेण रङ्गस्य तथैवार्थवशेन च । बाह्यं वा—इत्यादि ।

1 क - क्रमस्थान 2 क - भेदं नापत्यागसह 3 क - तानेत्याह 4 क - गृहादीनि 5 ख - स्मरणोद्देशः, क - वचनेनोद्देशः 6 क - सभाविनः 7 क - अटव्यानयसाक्षात् ।

[1]नगरे वा वने वापि वर्षे वा [2] पर्वतेऽपि वा[3] ।
यत्र वार्ता प्रवर्तेत[4] तत्र कक्ष्यां प्रयोजयेत् ॥ ७
[5]बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः ।
रं वा सन्निकृष्टं वा देशं तु परिकल्पयेत्[6] ॥ ८
[7]पूर्वप्रविष्टा ये रङ्गं ज्ञेयास्तेऽभ्यन्तरा बुधैः[8] ।
पश्चात्प्रविष्टा विज्ञेया[9] कक्ष्याभागे तु बाह्यतः[10] ॥ ९
तेषां तु दर्शनेच्छुर्यः[11] प्रविशेद्रङ्गमण्डलम् ।
दक्षिणाभिमुखः [12]सोऽथ कुर्यादात्मनिवेदनम् ॥ १०

वीप्साद्योते । यत्र यत्र वार्ता वृत्तान्त इतिवृत्तवशायातः प्रकर्षेण वर्तेत तत्र-मध्ये यो देशविभागस्तमेव प्रवर्तयेत् रङ्गपीठे दर्शयेत् न सर्वमित्यर्थः, विशिष्टे देश इत्युक्तं न रङ्गपीठस्य । विशेषं दर्शयति बाह्येत्यादि । भागत्रितये सति कस्मिंश्चिद्भागे देशादि कल्पयित्वा तत्रैव दूरादिभेदं परिकल्पयेत्, भूयस्त्वा-ल्पत्वादिभिन्नेन परिक्रमेण कल्पयेदित्यर्थः । बाह्यादिभेदं निरूपयति पूर्व-प्रविष्टा इति पूर्वभूताः प्रधानभूताः सन्तः पूर्वं ये प्रविष्टास्ते, अभ्यन्तरा इति अधिष्ठितो देशविशेषोऽभ्यन्तरकक्ष्या प्रधानभूतस्तु पूर्वप्रविष्टोऽपि प्रधाने प्रवि-शति स्वकक्ष्यान्त्य इत्येव । पश्चात्प्रविष्टानां तु स्थानं बाह्यकक्ष्या । ते तु येन स्थानविशेषेण प्राक्प्रविष्टमुपसर्पन्ति सदेशो मध्यमा कक्ष्या । एतदुक्तं भवति पूर्वप्रविष्टस्य स्वस्थान एवेतिवृत्तोचितगृहोद्यानादिविभागः पश्चात्प्रविष्ट-स्यापि पूर्वप्रविष्टेन सह [1]यावन्न च संमिलनं तावत्प्रेक्षायामेव मध्यमकक्ष्यायां तु गतिपरिक्रमादिः तत्संमेलनार्थं संमिलितानां तु कक्ष्यविभागो विच्छिद्यत इति संमेलन इतिकर्तव्यतामाह तेषां त्विति पूर्वप्रविष्टानां, कर्मणि षष्ठी ।

1 ड - तथा सप्तसमुद्राश्च वर्षावै पर्वतास्तथा 2 ट - वै 3 ट - तथा 4 ढ - वार्ताः प्रवर्तन्ते 5 प - बाह्यं च । इदं श्लोकार्धं भमातृकायां नास्ति 6 भ - समुप पादयेत् द - समुपलक्षयेत् 7 दनयोः सप्त श्लोकाः "एवं तु भारते वर्षे" इति श्लोकात्पूर्वमेव निवेशिताः 8 न - तेऽभ्यन्तरस्थिताः 9 द - ज्ञेयाश्च 10 च - मध्यतः 11 द - दर्शनस्पर्शो 12 न - सो वै ।

1 यानं संमीलनम् ।

[1]यतो मुखं भवेद्भाण्डद्वारं नेपथ्यकस्य च[2]।
[3]सा मन्तव्या तु दिक्पूर्वा नाट्ययोगेन[4] नित्यशः॥ ११
[5]निष्क्रामेद्यश्च तस्माद्वै स तेनैव तथा व्रजेत्।
यतस्तस्य [6]कृतं तेन पुरुषेण निवेदनम्॥ १२
[7][निष्क्रान्तोऽर्थवशाच्चापि[8] [9]प्रविशेद्यदि तद्गृहम्।
[10]यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रमेत्[11]॥ १३
[12]अथवार्थवशाच्चापि तेनैव सह गच्छति।
तथैव प्रविशेद्रङ्ग[13]मेकाकी सहितोऽपि वा॥ १४

पूर्वप्रविष्टस्य यो दक्षिणो भागस्तं वीक्षमाणः स्थितो यथा प्रेक्षकस्य यः पराङ्मुखीभवतीत्यर्थः एषां प्रवृत्तये दाक्षिणात्यादिके क्रमः एतद्विपरीतमन्यत्र। प्रवृत्त्यवयवो द्राविनं क्रमगथशब्देन सूचयति। तेनेदमाह (प्रा)धान्येनोत्तराभिमुख्यं दक्षिणस्यामात्मनिवेदनं यथात्रदितिवृत्तवशात्ताहङ्निबध्यते। यः पूर्वप्रविष्टैः सह संमिलितस्य सर्वबाह्यकक्ष्यायामेवेति तु शब्दस्यार्थः। का खल्विह दक्षिणा दिगित्याह यतोमुखमिति समासः यदपेक्षं भाण्डस्य मुखं सा दिक् पूर्वा। ननु भाण्डस्य मुखं दुर्मानमित्याह द्वारमिति। नेपथ्यग्रहणे गृहस्य यन्मुखद्वारं, भाण्डोपादानं तु तस्य प्रतियोजने पूर्वतां प्रकटयति प्राधान्यज्ञापनेन। तेनैवेति पूर्वप्रविष्टपात्रान्तर[1]योगेनेत्यर्थः।

1 अयं श्लोकोऽग्रे सुकुमाराविद्धगतिलक्षणानन्तरमेव जादिबान्तेषु, भमयोरध्यायान्ते च वर्तते। 2 ट - तु म - नेपथ्यमेव 3 भ - पूर्वादिदिक्षु विज्ञेयं प्रयोगे नाट्यसंश्रये। एवं कक्ष्याविभाग — इत्यादि। 4 ज - योगेषु ट - योगे तु 5 ङ - निष्क्रामेच्चापि यस्तत्र नरः कार्येण केनचित्। सनिष्क्रामेत्तु तेनैव कृतं येन निवेशनं 6 द - कृते तेनपुरुषेण 7 पञ्चश्लोकाः कादिचान्तेष्वेव न विद्यन्ते प्राक्षिप्ता अपि तदन्येषु बहुपाठविपर्ययेण दृश्यन्ते। 8 न - वशाद्वापि 9 न - न विशेत् द - निवेशेदत्र तद्गृहम् ट - न विशेद्यदि तं गृहम् 10 ज - प्राप्तः स पुरुषो येन 11 न - स तेनैव यथा व्रजेत् 12 ट - यद्प्यर्थवशाच्चैव 13 ट - विशेद्रेहं 14 न - तयोश्चैव 15 न - काष्ठाम्।

1 भोगेन।

[1]तयोश्चापि प्रविशतोः [2]कक्ष्यामन्यां विनिर्दिशेत्।
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते ॥ १५
समैश्च सहितो गच्छेन्नीचैश्च परिवारितः।
अथ [3]प्रेषणिकाश्चापि निर्देश्या ह्यग्रतो गतौ[4]]॥ १६
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः[5]।
[6]मध्या वा संनिकृष्टा वा तेषामेवं विकल्पयेत्[7]॥ १७
नगरे वा वने वापि पर्वते सागरेऽपि वा।
दिव्यानां गमनं कार्यं वर्षे द्वीपेऽपि वा पुनः[8]॥ १८
आकाशेन विमानेन माययाप्यथवा पुनः।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः[9]॥ १९
नाटके च्छन्नवेषाणां दिव्यानां भूमिसंचरः।

---

एवं बाह्ये वा मध्यमे वापि तथैवाभ्यन्तर इति [1]विकृष्टं दूरमित्यादि विभजति सैव भूमिरिति विकल्पानां [2]मध्याल्पत्वरचनादिश्च न केवलमल्पत्व-बहुत्वकृतमेव। परिक्रमवैचित्र्यं यावदन्यदपीति दर्शयति नगरे वेत्यादिना प्रयोगत इत्यन्तेन। प्रयोगो नाट्ये। दिव्यानां देवयोनीनां पिशाचादिब्रह्मा-न्तानां यन्नगरादिद्वीपादिविषयागमनं तदाकाशेनैव विमानगामिना विमानेन मायया वा अदर्शरूपया अन्याभिर्वा बलादाहरणादिक्रियाभिर्विविधप्रयोज-नाभिः कार्यमिति संबन्धः। न च दिव्यानामेष एव प्रकारः किं तु अन्योऽ-प्यस्तीत्याह नाटक इति। [4]वेषशब्देन न चापादभूतलं वपुर्लक्ष्यते। तेन वर-प्रदानाद्यनुग्रहनिमित्ताच्छन्नस्वरूपाणां देवानां मानुषैर्दर्शनं भवति, तदा

---

1 न - तयोश्चैव 2 न - काष्ठां 3 ड - प्रेक्षाणिकाः द - प्रेषणकाः न - प्रेषिणिकाः 4 भ - बहुभिर्गतैरन्याभिधीयते 5 इदं श्लोकार्धं भमयोर्न दृश्यते 6 च - विकल्पनात् 7 न - द्वीपवर्षेषु वा पुनः प - वर्षाद्वीपेषु वा पुनः] 8 न - प्रयोक्तृभिः।

---

1 क - विभ्रदूर 2 क - अत्यल्प 3 ख - प्रयोगः 4 क - विशेष।

[1]मानुषैः कारणादेषां[2] यदा भवति दर्शनम् ॥ २०

[[3]भारतेऽप्यथ हैमे वा हरिवर्षे इलावृते ।

[4]रम्ये किंपुरुषे वापि कुरुषूत्तरकेषु वा] ॥ २१

दिव्यानां छन्दगमनं [5]सर्ववर्षेषु कीर्तितम्[6] ।

भारते मानुषाणां तु[7] गमनं संविधीयते ॥ २२

[[8]विकृष्टं यस्तु [9]गच्छेद्धि देशं कार्यवशान्नरः ।

[10]अङ्कच्छेदे तमन्यस्मिन्निर्दिशेद्धि प्रवेशके ॥ २३

[11]अङ्कः प्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेत् ।

[12]तथालाभे तु कार्येऽस्या अङ्कच्छेदो विधीयते ॥ २४

क्षणो मुहूर्तो यामो वा दिवसो वापि नाटके[13] ।

[14]एकाङ्के संविधातव्यो बीजस्यार्थवशानुगः[15] ॥ २५

[16]अङ्कच्छेदे तु निर्वृत्तं मासं वा वर्षमेव वा ।

---

नाटके प्रयोगे तेषामपि भूमिसंचरः, संचरत्यस्मिन् भूमिरेव सञ्चरः । अयं तु देवेषु सामान्यकल्प इत्याह दिव्यानामिति । पुराणेषु त्वयं सामान्यविधिरित्याह भारत इति न त्विलावृतादावित्यर्थः । वर्षे प्रचारार्थमाह

---

1 द - श्लोकार्धं न विद्यते 2 न - कारणैरेषां 3 ड - भारते त्वथ 4 भ - नीले न - मातृकायां सार्धश्लोको न वर्तते 5 ड - वर्षेष्वेतेषु कारयेत् 6 ट, कारयेत् 7 ट - च 8 पञ्च श्लोकाः कादि चान्तेषु विना सर्वेषु दृश्यन्ते चैषां संवादिन्यः कारिका दशरूपाध्याये व्याख्याता वृत्तिकारेण 9 ड - गच्छेद्यदि विकृष्टस्तु देशकालवशान्नरः । ढ - गच्छेद्यदि विकृष्टं तु देशं कालवशान्नरः 10 ज - अङ्कच्छेदेन चान्यस्मिन्निर्दिशेत्तं प्रवेशके ड अङ्कच्छेदेन चान्यस्मिन् 11 ड - अध्वप्रमाणं ज - अङ्कप्रमाणं 12 न - तथा लाभेषु कार्यं स्यात् म - तथालाभे तु कार्यं स्यात् ज - तथालाभे तु कार्यस्य अङ्क 13 ज - मध्याह्ना दिवसोऽपि वा 14 ज - अङ्केऽङ्के 15 म - स्वर्थबीजवशानुगः 16 ज - अङ्कच्छेदं पुनर्वृत्तम् ।

नोर्ध्वं [1]वर्षात्प्रकर्तव्यं कार्यमङ्कसमाश्रयम्॥ २६

एवं तु भारते वर्षे [2]कक्ष्याः कार्याः प्रयोगतः।

मानुषाणां [3]गतिर्या तु दिव्यानां तु[4] निबोधत]॥ २७

हिमवत्पृष्ठसंस्थे तु[5] कैलासे पर्वतोत्तमे[6]।

यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये॥ २८

[7]रक्षोभूतपिशाचाश्च सर्वे हैमवताः[8] स्मृताः।

हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः[9]॥ २९

सर्वे नागाश्च[10] निषधे [11]शेषवासुकितक्षकाः।

[12]महामेरौ त्रयस्त्रिंशज्ज्ञेया देवगणा [13]बुधः॥ ३०

नीले तु वैडूर्यमये सिद्धा [14]ब्रह्मर्षयस्तथा।

दैत्यानां दानवानां च श्वेतपर्वत उच्यते[15]॥ ३१

पितरश्चापि विज्ञेयाः [16]शृङ्गवन्तं समाश्रिताः।

इत्येते [17]पर्वताः श्रेष्ठा [18]दिव्यावासा भवन्ति हि॥ ३२

---

हैमवता इति हिमवति बाहुल्येनैषां गतिरित्यर्थः, एवं सर्वत्र। नील इति अद्रिविशेषे, तस्यैव विशेषणं वैडूर्यमये, एतच्च कवेः [1]शिक्षार्थम्। दिव्यानां पिशाचादिब्रह्मान्तानामावासः।

---

1 ज - वर्षात्तु 2 ड कक्ष्या कार्या प्रयोक्तृभिः 3 ड - गतौ येषां ज - गति र्येषां द - गतीर्यास्तु ट - गतिर्ज्ञेया 4 न - तां 5 न - पार्श्वे तु 6 प - पर्वतोत्तरे 7 ड - रक्षः पिशाचा भूताश्च ज - रक्षःपिशाचभूताश्च 8 ज - हैमवते 9 ड - विज्ञेयाप्सरसांगणाः 10 ट - नागास्तु 11 म - शेषप्रभृतयः स्मृताः 12 म - तथा मेरौ 13 ट - द्विजाः 14 ज - देवर्षयः 15 ड - दृश्यते 16 म - शृङ्गवद्गिरिवासिनः 17 ड - पर्वत 18 म - दिव्यवासाः प्रकीर्तिताः।

---

1 क - दीक्षार्थम्।

तेषां कक्ष्याविभागश्च[1] जम्बूद्वीपे भवेदयम् ।
[2]तेषां न चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ ३३
[3]परिच्छ दविशेषस्तु तेषां मानुषलोकवत् ।
[4]सर्वे भावास्तु देवानां कार्या मानुषसंश्रयाः ॥ ३४
[5]तेषां त्वनिमिषत्वं यत्तन्न कार्यं प्रयोक्तृभिः ।
इह[6] भावा रसाश्चैव दृष्टयामेव प्रतिष्ठिताः ॥ ३५
दृष्टया हि सूचितो भावः[7] पश्चादङ्गैर्विभाव्यते[8] ।

---

ननु [1]वर्षान्तरेषु दिव्यपर्वतेषु यदुचितं गमनं तत्कर्तुं शक्यमित्याह तेषामिति । चकार इहार्थे जम्बूद्वीप इव दिव्यानामपि कक्ष्याविभागस्थानविशेषोपलक्षिता गतिरित्यर्थः । एतत् स्फुटयति न तेषामिति । परिच्छेदविशेषश्च तदीयः परिचारः स्वाभितो न कार्य इत्यर्थः, परिच्छेदो वा ज्ञानं तद्दूरव्यवहितादिविषयं न प्रदर्शनीयम् । कथं तर्हि, आह, मानुषगत एवेषां सर्वो भावः कार्यः, कथं, मानुषलोकवत् यथामानुषलोके अंशावतरणे नायकानां रामादीनां किंचिदुत्कृष्टं सातिशयं मानुष्योचितमेव चरितं तथैव दिव्यभावबहुवृत्तीनामपीत्यर्थः । न निमषतीत्यनिमिषं रूपं तेषां नैव कार्यम् । तुरवधारणे । अत्र हेतुरिहेति । भावा व्यभिचारिणो, रसाः स्थायिनो दृष्टावेवेति स्पष्टयति दृष्ट्यामिति । सूचितः सूचाभिनय एव विभाव्यते विभावादिशेषयुक्तत्वे स्फुटीभवतीत्यर्थः । अत एव न तेषां चेष्टितमित्यनेन साध्योऽप्ययमर्थः पुनरुपात्तः प्राधान्यात् ।

---

1 प - विभागस्तु 2 ट - एतेषां ज - तेषां तु न - तेषां च 3 ड - परिच्छेद 4 ड - सर्वे भावाश्च म - सर्वो भावश्च दिव्यानां कार्यो मानुषसंश्रयः 5 भ - अनिमेषस्तु यस्तेषां स न कार्यः 6 ड - भावरसाश्चैव दृष्टावेव 7 ड - पुनः 8 अतःपरं भ मातृकायां धर्मीलक्षणमुक्तं तदनन्तरमेव प्रवृत्तीनाम् । एष क्रम एव षष्ठाध्यायोक्त(६-२०) संग्रहश्लोकानुसारीति कीर्तिधरप्रभृतिभिः स्वीकृतः ।

---

1 क - द्वीपान्तरेषु ।

[एवं कक्ष्याविभागस्तु मया प्रोक्तो द्विजोत्तमाः ।
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनां तु लक्षणम् ॥] ३६
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः[1] ।
आवन्ती दाक्षिणात्या च पाञ्चाली चोढ्रमागधी[2] ॥ ३७

[3]अत्राह—प्रवृत्तिरिति कस्मात्? [4]उच्यते - [5]पृथिव्यां नाना[6]देशवेषभाषाचारा वार्ताः ख्यापयतीति[7] वृत्तिः प्रवृत्तिश्च निवेदने[8] । अत्राह—यथा पृथिव्यां [9]नानादेशाः

एवं सर्वोपकारित्वादुद्देशस्य संग्रहे सर्वं पश्चादभिधानं तेनैवं न यद्यपि कक्ष्याविभागः सूचितस्तथापि चारीपरिक्रमप्रसङ्गेन गत्यध्यायानन्तरं दर्शितः। इदानीं त्वाङ्गिकोपयोगिधर्म्यादित्रयमुद्दिष्टं, तत्र वृत्तीनामग्रतो निरूपणं भविष्यति, तत्र च हेतुः वृत्त्यध्याय (अ २०) एव वक्ष्यामः । यद्यपि धर्मः पूर्वमुद्दिष्टस्तथापि 'यत्र वार्ता प्रवर्तत' इत्यनेन कक्ष्याविभागकल्पितदेशभेदाभिधानप्रसङ्गेन च देशविभागप्रतिपन्नाः प्रवृत्तय आक्षिप्ताः किं च पात्रस्य सति प्रवेशे कक्ष्याविभाग उत्तरद्वारेण दाक्षिणात्यावन्त्योः प्रवेशो, अन्ययोस्तु सव्येनेत्येवं प्रवृत्तिविभागं प्रवेशकभेदमाक्षिपति । सोऽपि तत्स्थानेनेदमिति तदुपयोगित्वेनापि समनन्तरं प्रवृत्तयो वक्तव्या इति मनसि कृत्वाह चतुर्विधेति । प्रवृत्तिः तस्मादित्यर्थः । प्रश्ना इति कस्मादिति चतुष्कप्रश्नः अर्थं तावदाह पृथिव्यामिति प्रवृत्तिः देशविशेषगता वेषभाषासमाचारवैचित्र्यप्रसिद्धिरुच्यते । तत्रैवं योजना—देशे देशे येष्वेव वेषादयो नैपथ्यं भाषा वा आचारो लोकशास्त्रव्यवहारः वार्ता कृषिपाशुपाल्यादिजीविका इति तान् प्रख्यापयन्ति, पृथिव्यादिसर्वलोकविद्याप्रसिद्धिं करोति प्रवृत्तिर्बाह्यार्थे यस्मान्नि-

1 म - विज्ञेया नाट्यकोविदैः न प्रयोज्या नाट्ययोक्तृभिः ड - प्रयोगतः द - समाश्रया 2 ढ - सोढ्रमागधी प - चान्ध्रमागधी ड - चैव मागधी 3 ड - 'अत्राह'—इति न दृश्यते 4 ड - अत्रोच्यते 5 ड - यथा पृथिव्या 6 न - देशकृतान् वेषकृतान् 7 ड - वार्ताः प्रख्यापयन्तीति म - आख्यापयतीति 8 म - निवेदनम् 9 म - बहवो ।

सन्ति [1]कथमासां चतुर्विधत्वमुपपन्नं[2], समानलक्षणश्चासां[3] प्रयोगः? [4]उच्यते—[5]तत्तु सत्यं, आसां समानलक्षणप्रयोगः। किं तु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमतेन वृत्तिसंश्रितस्य[6] नाट्यस्य मया [7]चतुर्विधत्वमभिहितं [8]भारत्यारभटी सात्त्वती कैशिकी चेति।

---

वेदने निश्शेषेण वेदने ज्ञाने प्रवृत्तिशब्दः। "अस्त्येषा[1] भुवने प्रवृत्तिरभवद्रामेण रामस्य यत्" इत्यादौ।

अथ संख्याप्रश्ने स्वाभिप्रायमाह यदेति। देशा इति। तत्कृत्वापि चतुष्टयी प्रवृत्तिरित्युक्तं न चत्वार एव देशाः। स्यादेतदेव तावत्यस्तावदुक्ता अभ्यधिकास्तु त्यक्ता इत्याशङ्क्याह समानलक्षणत्वात्प्रयोग इत्युच्यते महद्भिरिति शेषः। प्रयोग इति नाट्यम्। चतसृणामेव समानलक्षणानामेतत्प्रवृत्तिचतुष्टयसाधारणस्वभावः सर्वप्रयोगे युष्मन्मते न त्वन्यो व्यवहारः कश्चिद्दर्शितः। [2]तथा च लोभक्रोधमोहैस्तु साधारीकृतजगच्चिन्ताद्याशु प्रदेशः पराक्रियते तथा प्रकृतेऽपि।

ननु चतुस्साधारणप्रयोगो नत्वन्योऽत्र प्रविशति व्यवहार इत्येतदुक्तम्। विस्मरणशीलो भवान् न स्मर्यते। उक्तं पूर्वरङ्गान्ते (अध्या-५) "इत्येषोऽवन्तिपाञ्चालदाक्षिणात्योढ्रमागधैः। कर्तव्यः पूर्वरङ्ग" स्त्विति पूर्वरङ्गस्य प्रयोगस्य गर्भाधानीयस्थानीय इत्युक्तम्। तत्रैवाभ्युपगमपूर्वकमुत्तरमाह। [3]तत्तु सत्यमित्यादिना वेषादीनामित्यन्तेन अभ्युपगमदेशादिशब्देन प्रवृत्तिमभिदधता। आसामिति व्याख्यातम्। [4]किंत्वित्यादिनोत्तरमाह। एतदुक्तं भवति—वृत्तिसंश्रितं वृत्तीराश्रितमेतच्चतुर्विधम्। ननु का प्रवृत्तिः

---

1 भ - तदा कथं ढ - तथा कथमेषां 2 प - समुपपन्नम् 3 ट - लक्षणं चासां 4 म - अत्रोच्यते एवमेतत् 5 प - सत्यमेतत् ट - एवमेते 6 म - वृत्तिसमाश्रितस्य प्रयोगस्य ट - संश्रितमस्य मया ड - लोकानुमतेऽनुवृत्तिसंश्रितस्य 7 म - चतुष्टयमुपपादितं 8 म - भारतीसात्वत्यारभटीकैशिकीवृत्तिसंश्रितेषु प्रयोगेषु देशा अभिरताः ड - भारतीसात्वती कैशिक्यारभटी वृत्ति संश्रितेष्वमीषु प्रयोगेष्वभिरता देशाः।

---

1 क - अस्त्यैषा 2 क - यथा 3 क - तत्र 4 क - किंचिदादिना।

वृत्तिसंश्रितैश्च [1]प्रयोगैरभिहिता देशाः, [2]यतः प्रवृत्तिचतुष्टयमभिनिर्वृत्तं प्रयोगश्चोत्पादितः[3] । तत्र [4]दाक्षिणात्यास्तावद्बहुनृत्तगीतवाद्याः कैशिकीप्रायाः [5]चतुरमधुरललिताङ्गाभिनयाश्च । तद्यथा[6]—

महेन्द्रो मलयः सह्यो [7]मेकलः पालमञ्जरः[8] ।

---

प्रत्येकं तत्रैवाभ्युपगमः प्रवृत्तिः, नेत्याह लोकानुगुणानुसारेण । लोको हि दक्षिणापथः पूर्वदेशः पश्चिमदेशः उत्तरभूमिरिति [1]चतुर्धा विभागोऽस्ति, न चैष निर्बन्धनः सादृश्यसंभवात्। तथाहि दाक्षिणात्येषु शृङ्गारप्रचुरतया कैशिक्याः संभवः। पश्चिमेष्वावन्त्येत्र संगृहीतेषु सापि सति धर्मप्राधान्य इति सात्त्वत्यस्ति । प्राच्येषु तु घटाटोपवाक्याडम्बरप्राधान्यो भारत्यारभटीयोगः । उत्तरभूमिः प्राधान्यात्तु भारत्यारभटीयोगेऽपि कैशिकीलेशात्तु प्रवेशसहिष्णवो यद्वक्ष्यते "प्रयोगस्त्वल्पगीतार्थ" (१३-५१) इति । अर्थशब्देन तत्प्रयोजनं नृत्तवाद्यादि । इत्येवं चित्तवृत्तिभेदसादृश्याल्लोको यश्चतुर्धाविभागः स एवास्मिन्नुक्तः ।

ननु किमित्ययं संक्षेप आदृतः, आह यस्माल्लोको बहुविधभाषाचारादियुक्तः कस्तं प्रतिपदं वक्तुं शक्नुयात् शिक्षितुमभ्यसितुं वा प्रयोक्तुं द्रष्टुं वा, चित्तवृत्तिप्रधानं चेदं नाट्यमिति तदेव वक्तुं न्याय्यम् । एतदेव स्पष्टीकुर्वन्नाह भारतीत्यादिना । प्रयोगे वागङ्गचेष्टासु अभिनिर्वृत्तं लोकप्रसिद्धमि-

---

1 ट - प्रयोगोचिता द - प्रयोगैरभिमता 2 द - यतो वृत्ति भ - यतस्ततः प्रवृत्तेश्चतुष्टयमिति निर्वृत्तं 3 दभ - मातृकयोर्दाक्षिणात्यालक्षणात्पूर्वमेवावन्तीलक्षणमुक्तं यथा—

आनर्मदाया आसिन्धोरापूर्वावर्तिनस्तथा ।
आपश्चिमात्समुद्राच्च तथा सौवीरराष्ट्रतः ॥
आहिमाद्रेस्तथा देशा विदेशैश्चान्तरेण ये (वैदिशाच्चान्तरेण —भ) ।
सात्वतीकैशिकीयुक्ता तेषामावन्तिकी स्मृता ॥

4 म - दाक्षिणात्या...वाद्या...प्राया...नया यथा 5 ड - चतुरललित 6 ट - यथा 7 ड - मेखलः न - मेलकः 8 ड - कालपञ्जरः म - मेलकः पालमर्जरः प - पलपञ्जरः ('पालमञ्जर' इति राजशेखरः) न - पालमञ्जकः ।

---

1 क - चेड्ढा ।

एतेषु संश्रिता देशास्ते ज्ञेया दक्षिणापथाः[1] ॥ ३९
[2]कोसलास्तोसलाश्चैव कलिङ्गा यवनाः खसाः[3] ।
[4]द्रमिडान्ध्रमहाराष्ट्रा वैण्णा[5] वै वानवासजाः[6] ॥ ४०
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे[7] ।
ये देशास्तेषु युञ्जीत[8] दाक्षिणात्यां तु नित्यशः[9] ॥ ४१
[10]आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा आनर्ताः सार्बुदेयकाः[11] ॥ ४२
दाशार्णास्त्रैपुराश्चैव तथा वै मार्त्तिकावताः[12] * ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ४३

त्यर्थः । चकारेण तत इत्याकृष्यते । तल्लोकप्रसिद्धचतुष्टयमवलम्ब्य ब्रह्मणा प्रयोग उत्पादितः। अयं ग्रन्थश्चिरन्तनैर्वृत्तीनां चतुर्ष्वेव दृष्टान्ततामाश्रित्य व्याख्यातः, तत्र च वैषम्येण दूषणमुक्तम्‡, वृत्तीनां हि सनिमित्तं चतुर्धादेः प्रवृत्तीनां तस्माच्चतुष्ट्वमात्रेण दृष्टान्तोऽयमिति व्याख्यानेषु गजस्नानीयमानयेनालूनविशीर्णः कृत इत्यास्तां तावत्[1] ।

कैशिकी प्रायेणास्यामिति बहुव्रीहिः । असामानाधिकरण्यात्सामानाधिकरण्येऽपि वा समानायामाकृतौ भाषितपुंस्त्वाभावान्न पुंवद्भावः । कैशैर्निर्वृत्तात्तेषु भवेदित्यादिर्व्युत्पत्तिर्निमित्तमात्रम् । एतच्च वक्ष्यामः संक्षेपेण (अध्या—२०) । दक्षिणसमुद्रस्य विन्ध्यस्य च मध्ये ये देशास्तेषु दाक्षिणात्या । एतेनैव सिद्धे सति देशभेदानां प्रतिपाठस्तदन्तरालानां पर्वत-

1 न - स ज्ञेयो दक्षिणापथः 2 ड - कोशलास्तोशलाः 3 म - यवनौसलाः च - एव मोसलाः 4 द - द्रमिलाश्च 5 द - भिल्ला ('वैण्णा' इति कृष्णापिनाकिनी तीरवासिनः) 6 प - वानवासिकाः 7 द - चोत्तरे 8 ड - संश्रितास्तेषु 9 द - तेष्वियं कैशिकी स्मृता म - ये देशा दाक्षिणात्यास्तु वृत्तिमारभटीं श्रिताः 10 प - आनर्तकाः 11 द - सार्वदेशकाः 12 ज - वैमानिकावताः ड - वैवर्तिकावताः

* मृत्तिकावतीपुरवासिनः। ‡ चिरन्तनैरिति राहुलकादिभिः। उक्तमित्युद्भटेन।

सात्त्वतीं कैशिकीं चैव वृत्तिमेषां समाश्रिताः[1] ।
भवेत्प्रयोगो नान्यत्र[2] स तु[3] कार्यः प्रयोक्तृभिः ॥ ४४
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोढ्रमागधाः ।
[4]पौण्ड्रनेपालकाश्चैव [5]अन्तर्गिरबहिर्गिराः ॥ ४५
तथा [6]प्लवङ्गमा ज्ञेया मलदा मल्लवर्तकाः[7] ।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा ॥ ४६
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्तामलिप्तकाः[8] ।
[9]प्राङ्गाः प्रावृतयश्चैव युञ्जन्तीहोढ्रमागधीम्[10] ॥ ४७
[11]अन्येऽपि देशाः प्राच्या ये पुराणे संप्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा[12] प्रवृत्तिश्चोढ्रमागधी[13] ॥ ४८
पाञ्चालाः शौरसेनाश्च काश्मीरा हास्तिनापुराः ।
बाह्लीकाः [14]शाकलाश्चैव मद्रकौशीनरास्तथा ॥ ४९
हिमवत्संश्रिता ये तु[15] गङ्गायाश्चोत्तरां दिशम्[16] ।

---

कच्छादिम्लेच्छानां निषेधेन प्रसिद्ध्या देशोपसंग्रहणार्थः कवीनाम् । एवमुत्तरत्र । नित्यानित्यमिति । अनादिरयं देशभेदेन चित्तवृत्तिक्रमः । दृष्टो हि वस्त्राभरणात्मना देशभेदोचितः स्वभावभेदः । बाहुल्येनेति नात्र भविष्यति प्रमाणाभावादित्यादिना शुष्कतर्केणासूचितव्यमिति भावः । एषेति अवन्तिप्राग्ज्योतिषकामरूपीया । पुराण इत्यागमपूर्वकत्वमाह । तुरुष्काश्चारट्टकदरक-

---

1 म - वृत्तिमेते समाश्रिताः द - एषां समाश्रयः 2 ड - नात्ये च 3 न - च 4 ड - पौण्ड्रा 5 म - ह्यन्तगिरि 6 ढ - प्रवङ्गमाहेन्द्र 7 म - मल्लवर्तिकाः ढ - मलवर्तकाः 8 ड - ताम्रलिप्तकाः 9 ड - प्रांशुप्रवृत्तयः द - प्रांशुप्रावृत्तयः न - प्राङ्गाः प्राभृतयः ट - प्राङ्गाः प्रवृत्तयः 10 न - ह्यौढ्रमागधीम् 11 अयं श्लोको भमयोर्न विद्यते 12 ड - त्वेषा ट - अप्येषा 13 प - चान्ध्रमागधी 14 ड - शाल्यकाः द - शाककाः ढ - शाल्यकाः 15 ट - च 16 न - तथा चाप्य प्रदक्षिणम् ।

[1]ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमा ॥ ५०
पाञ्चालमध्यमायां तु सात्त्वत्यारभटी स्मृता[2] ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविक्रमः ॥ ५१
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।
प्रदक्षिणप्रवेशा च तथा चैवाप्रदक्षिणा ॥ ५२
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रवेशा तु पाञ्चाली चोढ्रमागधी[3] ॥ ५३
आवन्त्यां दाक्षिणात्यायां [4]पार्श्वद्वारमथोत्तरम् ।
[5]पाञ्चाल्यामोढ्रमागध्यां योज्यं द्वारं तु दक्षिणम् ॥ ५४

खसप्रभृतयः मध्यमायामेव प्रविष्टाः, ते तु व्यवहारबहिष्कृतत्वात् स्वकण्ठेन न पठिताः । अल्पगीतार्थ इति लेशतः कैशिकीमनुजानाति । तत्र प्राग्देशानां सीमात्वेन दक्षिणत उढ्राः समुद्रनिकटे, उत्तरतो मागधाः, तदुभयमध्यवर्तित्वादौढ्रमागधी[1], [2]अतएवोढ्रकलिङ्गानामुभयोपजीवित्वाभिप्रायेण वृत्तिद्वयमध्ये गणनम् । गिरीणामन्तर्ये भवास्तेऽन्तर्गिरा:, 'गिरेश्च सेनक' स्येति समासान्ते मत्वर्थीये वाचि रूपम् । दक्षिणोत्तरव्यतिरेकेण परिक्रमणस्थानाभावात् नैकट्याद् द्वे प्रवृत्ती एकीकृत्य प्रयोगाभिधानम् । तत्र दाक्षिणात्य उत्तरेण द्वारेण प्रविश्य [3]पश्चिमायां दिशि परिक्रम्य ततोऽपि दक्षिणस्यां ततः पूर्वस्यां ततः उत्तरस्यां परिक्रमेत् । परिक्रम्य च तस्यामेव दिश्यात्मनिवेदनं कुर्यात् । [4]तदुक्तं दक्षिणाभिमुख इति । तत उत्तरस्यां पूर्वां ततोऽपि दक्षिणां ततः पश्चिमां प्राप्योत्तरद्वारेणैव निष्क्रामेत् । एवं सात्त्वत्यादौ, तद्विपर्ययेण पाञ्चाली।

1 न - ये चाश्रिता 2 न - श्रिता द - भूतः 3 न - ह्यौढ्रमागधी द - सोढ्रमागधी 4 ड - योज्यं 5 प - पाञ्चालमध्यामागध्योः ।

1 क - आन्ध्रमागधी 2 क - अत एवान्ध्रकलिङ्गानां 3 ख - मध्यमं क - पश्चिमं 4 ख - तदुत्तरम् ।

एकीभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
[1]पर्षदं देशकालौ चाप्यर्थयुक्तिमवेक्ष्य च[2] ॥ ५५
येषु देशेषु या कार्या[3] प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ५६
[4]एकीभूताः [5]पुनस्त्वेताः [6]नाटकादौ भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्म समाचरेत्[7] ॥ ५७

तदस्या दक्षिणद्वारेण प्रवेशो निष्क्रमणं च प्रदक्षिणेन दक्षिणदिशा प्रवेशोऽभ्यन्तरकक्ष्याव्यवस्थितपात्रनिकट एवेति स्यात् । एवमपसव्यप्रवेश इति ।

विशेषान्तरमाह एकीभूता इति । (पार्षदमिति) परिषदि स्वामित्वकृतं वा प्राधान्यं देशकृतं कालकृतं प्रयोजनकृतं बहुतरपात्रपरीक्षायातोचितं यद्वैचित्र्यकृतमिदमवेक्ष्य सङ्करोऽपि कर्तव्यः, तदाह एकीभूता इति प्रधानानुयायिन्य एवेत्यर्थः ।

एवं प्रयोक्तरि परिक्रमोपयोगः । प्रवृत्तीनां प्रत्येकविषयेऽपि तं दर्शयन्नाह येषु देशेष्वित्यादि (या) प्रवृत्तिरित्यर्थः, सा वृत्तिर्येषु रूपकेषु । तेन तेन काश्मीरकनायक देशे नाटिकानुचिता, (?) तस्यां कैशिकीप्राधान्येन दाक्षिणात्योचितत्वात् । देशादौचित्ये तच्चेष्टितव्यावर्तनेन प्रतीतिविघाताद्रसमयत्वाभावः । रसाश्च नाट्यस्य प्राणाः व्युत्पत्तिरपि वा परेव भवेत्, असत्यताशङ्का च समूलघातं विहन्यादेव प्रयोगमित्यनेनाभिप्रायेणाह तद्वृत्तिकानीति । येषु देशेषु यो वृत्तिप्रकार उक्तः स येषु रूपकेषु नाटकादीनामन्यतमेषु भवति, तानि रूपाणि तेष्विति तद्देशगतनायकप्राधान्येन कर्तव्यं कविना नाटकेन च नाट्यशब्दवाच्यस्य प्रयोगस्याश्रयः । नाटकशब्दोऽत्र न रूपकविशेषे, अपि तु नाट्य एव । यथा—

1 म - देशं कालमवस्थां च काव्ययुक्तिमवेक्ष्य च 2 द - अवेक्षते 3 ड - पूर्वं 4 अयं श्लोको दचटजझढन मातृकासु न दृश्यते 5 म - यदा त्वेताः 6 ड - गानकादौ 7 ड - तत्तत्कर्माचरेत्सदा म - तद्धर्मीमाचरेत्तथा ।

[[1]सार्थे बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् ।
[2]येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तथा]॥ ५८
प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः[3] ।
सुकुमारस्तथाविद्धो नाट्ययुक्तिसमाश्रयः ॥ ५९
[4]यत्त्वाविद्धाङ्गहारं तु छेद्यभेद्याहवात्मकम्[5] ।
मायेन्द्रजालबहुलं[6] पुस्तनैपथ्यसंयुतम्[7] ॥ ६०
[8]पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्वत्यारभटीप्रायं नाट्यमाविद्धमेव तत्[9] ॥ ६१
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
[10]एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ६२

"हास्यस्थानानि यानि स्युः कार्योत्पन्नानि नाटके" । (अ-२२) इत्यत्र नाटक उन्नयति[1] प्रेक्षकान् संवेशेन व्युत्पत्त्या च तथा तद्भावानुप्रवेशेन प्रयोक्तॄनिति । नाटकं कृताविति पाठे गात्राणि विक्षिप्यन्ते अभिनयप्रयोगायास्मादिति संज्ञाकाले । अन्ये तु नटशब्दं कठादिवच्चरणादिच्छन्तो नटानां कर्मश्लाघ्यमिति गोत्रचरणाच्च श्लाघादिविशेषणत्वाद् वुञित्याहुः (पा-५-१-१३४) लौकिकं च लिङ्गमिति नैवं शङ्कितव्यमेतद् वुञ् तस्यैकान्तिकं स्त्रीत्वमिति । आविद्ध उत्कटः, अङ्गानां हारो हरणं यत्र । छेदेन भेदेन प्रधानः आहवः संग्रामः, आह्वयन्ते परस्परं वीरा यत्रेति । मायामन्त्रौषधादिकृतं रूपपरिवर्तनादि, (इन्द्र) जालः हस्तलाघवसादृश्यादिकृतं, पुस्तं द्रुमृण्मयमाकृत्यादि । तथैव च नाविद्धं (आविद्धं ?) स्त्रीकर्मरूपाणां स्वरूपं स्वक्षेत्र एव वक्ष्यामः । शौर्यमभीरुत्वं,

1 अयं श्लोको ङढ - मातृकयोरेव वर्तते 2 ढ - यस्यामन्येऽस्य 3 म - नाटकाश्रितः 4 द - तत्राविद्ध म - सत्त्वाविद्धाङ्गहारस्तु 5 म - आत्मकः 6 म - बहुलो 7 म - संयुतः 8 म - प्रयोगः पुरुषप्रायस्तथाल्पस्त्रीक एव च 9 म - आरभटीयुक्तो ज्ञेय आविद्धसंज्ञितः 10 म - आविद्धसंज्ञाविज्ञेयाः प्रयोगस्य वशानुगाः ।

1 क - नाटकलनमयति ।

एषां प्रायोगः कर्तव्यो [1]देवदानवराक्षसैः
[2]उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः[3] ॥ ६३

नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च[4] ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि तु[5] ॥ ६४

[6]अथ बाह्यप्रयोगे तु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गं कदाचिद्भर्तुराज्ञया ॥ ६५

पृष्ठं कृत्वा कुतपं नाट्यं युक्ते यतो मुखं भरतः ।
सा पूर्वा मन्तव्या प्रयोगकालेन नाट्यज्ञः ॥ ६६

द्वाराणिषट्चैव भवन्तिचात्र रङ्गस्य दिग्भाण्डविनिश्चितानि
नाट्यप्रयोगेन खलु प्रवेशो प्राच्यांप्रतीच्यांच दिशिप्रवेशः

---

वीर्यमुत्साहः, बलं कायधर्मः पराक्रमः । मानुषेष्विति बाहुल्यापेक्षमेतत् । एवं चत्वारि भिन्नानि डिमाद्युद्धतानि वर्गसुकुमाराणि नाटकादीनि ।

एवमन्तरङ्गोपकारित्वात्कक्ष्यामाधारमुक्त्वा तदाक्षिप्तं च वृत्तिभेदमभिधाय धर्मा निरूप्यन्ते । तथा हि लोकस्वभावमेवानुवर्तमानं धर्मीद्वयम् । लोको नाम जनपदवासी जनः, स च प्रवृत्तिक्रमेण प्रपञ्चितः । तत्प्रसङ्गेनैव तावद्धर्म्यायाता । सा चाङ्गिकशेषतया वक्तव्या । प्रसङ्गाच्च वाचिकाहार्यादिविषयाण्युच्यन्ते तुल्यलक्षणत्वादिति । सा च द्वेधा । यद्यपि लौकिकधर्मव्यतिरेकेण नाट्ये न कश्चिद्धर्मोऽस्ति, तथापि स यत्र लोकागतप्रक्रियाक्रमो रञ्जनाधिक्यप्राधान्यमधिरोहयितुं कविनटव्यापारे वैचित्र्यं स्वीकुर्वन् नाट्यधर्मीत्युच्यते ।

---

1 ड - दैत्य 2 ढ - उद्धताश्चैव 3 ट - समन्विताः म - शौर्यधैर्यवृयान्विताः 4 ड - नाटिके द - एव तु 5 म - योज्यान्येतानि मानुषैः 6 "यतो मुखमितिश्लोकः तदनन्तरं 'अथादि......कार्यः' इति अन्ते षट्श्लोकाः कादिचान्तेषु विना सर्वेष्वादर्शेषु निवेशिताः, ते प्रक्षिप्ततया न व्याख्याताः ।

विधानमुत्क्रम्य यथात्ररङ्गे विना प्रमाणाद्विदिशःप्रयोगे[1]।
द्वारं तु यस्मात्सम्दृङ्भाण्डं प्राचीं दिशं तां मनसाध्यव-
स्येत्[2] ॥ ६८

वयोऽनुरूपः प्रथमं तु वेषो वेषानुरूपश्च गतिप्रचारः।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः]

धर्मी या [3]द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः[4]।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥ ७०
[5]स्वभावभावोपगतं शुद्धं तु विकृतं तथा[6]।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम्[7] ॥ ७१
स्वभावाभिनयोपेतं[8] नानास्त्रीपुरुषाश्रयम्।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ ७२

---

तदेतदाह धर्मी या द्विविधेति। प्रोक्ता उद्दिष्टेत्यर्थः। पूर्वमिति 'रसा भावा' इत्यादिसंग्रहविभागावसरे (अ ६-१०) लौकिकस्य धर्मस्य मूलभूतत्वान्नाट्यधर्मं वैचित्र्योल्लेख्यभित्तिस्थानत्वादिति लोकधर्मीमेव लक्षयति स्वभावभावोपगतमित्यादि। काचित्तद्विषया धर्मी, काचिन्नटविषया। यो यस्य स्वभावतो भावः स्यात् स्थायिव्यभिचार्यादिः तेनोपेतम्। कथमधिकृतत्वादित्याह (शुद्धमिति)। शुद्धत्वात् स्वविकल्पितेन व्यामिश्रत्वात् तथेति शुद्धं कृत्वा। लोकवार्ता लोकप्रसिद्धिः तस्यां या क्रिया व्यवहारो वृत्तान्तस्तया शुद्धमेव कृत्वा युक्तं यन्नाट्यं नटनीयं कार्यं सा लोकधर्मी धर्म्यास्तद्गतश्चाभेदोपचारात्सामानाधिकरण्यम्। अङ्गलीलया वर्तनादिकया वर्जितं कृत्वा। स्वभावबलपतनप्रहारनादावसरविवादादाविव पताकादिना योऽभि-

---

1 म - कृतः कथंचिद्विदिशप्रयोगः 2 प - व्यवस्येत् 3 द - तु 4 द - प्रयोगे नाट्यकारिता 5 म - स्वभावकर्मोपगतं 6 म - च विकृतं च यत् न - नार्थं तु विकृतं तथा (?) प - त्वकृतं तथा 7 म - नानाभावरसान्वितम् 8 म - नयस्थानम्।

[1]अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम्[2] ।
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम्[3] ॥ ७३
[4]स्वरालङ्कारसंयुक्त[5]मस्वस्थपुरुषाश्रयम् ।

नयत्वेनोपेतम् । नानात्वेन च स्त्रीपुंसोः स्त्रियां प्रयोज्यायां योषिदेव प्रयोक्त्री पुरुषे तु पुरुष इत्येवंभूतं यच्चाभ्यस्तचेष्टितं सा लोकधर्मी तद्धर्मव्यपदेशात् यदि वा समुदायरूपस्य काव्यं ताभ्यां मनसो एकदेशभूता धर्मी ।

एतदुक्तं भवति—यदा कविर्यथावृत्तवस्तुमात्रं वर्णयति नटश्च प्रयुङ्क्ते, न तु स्वबुद्धिकृतं रञ्जनावैचित्र्यं, तत्रानुप्रवेशयंस्तदा तावान् स काव्यभागः प्रयोगभागश्च लोकधर्माश्रयः तत्र धर्मी । अथाभिनये सहकारिरूपा इतिकर्तव्यतारूपा वेति दशशततमादितरत्र प्रवेशानाह शून्यतायाम् (?) । काव्यनाट्ययोर्हि लोकानुसारित्वं वा वैचित्र्ययोगित्वं वा धर्मः । तत्र किमेतद्भावमुद्भावमुच्यते तदास्तामेतत् ।

अथ नाट्यधर्मी लक्षयति अतिवाक्यक्रियोपेतमिति । इतिहासादिवाक्यमतिक्रम्य या उचितरञ्जकेतिवृत्तकल्पनात्मिका क्रिया । राजशेखरेण रामनिर्वासना दशरथवेषराक्षसविरचिततत्त्वकल्पना, तया यदुपेतं भावसत्त्वं स्वभावचित्तवृत्तिमतिक्रम्य यत्स्थितं कविकल्पितचित्तवृत्त्यन्तरयुक्तमित्यर्थः । यथा स्वभावचपलविदूषकचित्तवृत्त्यतिक्रमात् यथा वत्सराजेन मन्त्रिसमुचितगाम्भीर्यावहित्थयोजनं वसन्तकस्य तथा, स्वभावभाषितमतिक्रम्य यत्स्थितं यथाराज्ञ्याः संस्कृतम्* । एवंभूतं काव्यं काव्यगतनाट्यधर्मी नटगता तु नाट्यलक्षणलक्षितं कृत्वा लीलया शोभाप्रधानतया अङ्गहाराणि मनोहराणि तत्प्रधानैरभिनयैः उपेतं तथापाठे स्वरालङ्कारसंयोजनया युक्तं यत्र च पुरुषो न स्वरूपे तिष्ठति, अपि तु स्त्रीबलमाश्रयीत, प्रयोज्यः पुरुषो यत्र न स्वरूपस्थः

1 अयं भ मातृकायां न वर्तते ट - गीतवाद्यक्रियोपेतं ड - अतिसत्त्व
2 द - भाविकम् म - भावजम् ड . भाषितम् ट - सत्त्वभावसमन्वितम्
3 नाट्यताललयान्वितम् 4 द - सर्वालङ्कार 5 द - अश्वस्थ द - नाट्यस्थ ।

* तापसवत्सराजे ।

यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ ७४
[1]लोके यदभियोज्यं च पदमत्रोपयुज्यते ।
[2]मूर्तिमत्साभिलाषं[3] च नाट्यधर्मी तु सा स्मृता ॥ ७५
आसन्नोक्तं च यद्वाक्यं[4] न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते यच्च नाट्यधर्मी तु सा स्मृता[5] ॥ ७६
शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥ ७७
[य एकां भूमिकां कृत्वा कुर्वीतैकान्तरेऽपराम्[6] ।
[7]कौशल्यादेककत्वाद्वा नाट्यधर्मीति[8] सा स्मृता ॥ ७८

---

अपि तु स्त्रिया प्रयुज्यते तन्नाट्यधर्मी । भवेदित्यनेन संभावनामाचक्षाण इदमाह नैवेदं समयमात्रं निष्ठमिति वक्तव्यं अपि तु संभाव्यमानमेव । सद्रञ्जनोपयोगि वस्तूपयोगि च न ह्यासन्नवचनस्यापि अश्रवणमन्यैरप्यश्रूयमाणस्य च श्रवणं लोकेऽपि कदाचन न भवति । केवलं तन्त्रे तत्सौन्दर्यार्थमानीयते । यथोक्तमुपाध्यायैः—

यदत्रास्ति न तत्रास्य कवेर्वर्णनमर्हति ।
यन्नासंभवि तत्र स्यात्सम्भव्यत्र तु धर्मतः ॥

अत्र नियमहेतुः सौमनस्यं तत्र नाट्यधर्मव्यापकत्वं बहुतरोदाहरणनिदर्शनदिशा दर्शयितुमाह लोके यदिति अभियोज्यं क्रियासु पदं मूर्तत्वात् केवलं साभिलाषं लोकेऽपि कलाशिल्पकल्पनाकलितमतस्तदपि मूर्तिसंपादनेन प्रयुज्यते प्रयोगः क्रियते । यथा मायापुष्पके "ततः प्रविशति ब्रह्मशाप" इति । शृण्वन्ति जनान्तिकापवारितकयोः । अनुक्तं श्रूयते, आकाशभाषितं च, गतादावाकाशादौ । मूर्तिमन्त इति प्रक्रिया तु कर्म कायवत्प्रयुज्यन्त इत्यर्थः । तद्यथा--"अग्रे पर्वत एष कथमत्र गन्तव्यम्" इत्यादि । चर्म खेटकं वसुनन्दादि

---

1 ड - लोकप्रसिद्धद्रव्यं तु यदा नाट्ये प्रयुज्यते म - लोकेऽप्रयुज्यं यद्द्रव्यं समं नाट्ये प्रयुज्यते 2 प - वृत्तमत् 3 ट - साभिभाषं च 4 म - तु 5 ट - नाट्यधर्मीकृतं तु तत् 6 द - पूनरन्यां प्रयोजयेत् 7 ट - कोशलादेककृत्यत्वात् ।

यागम्या प्रमदा भूत्वा गम्या भूमिषु युज्यते[1] ।
गम्या भूमिष्वगम्या वा नाट्यधर्मी तु[2] सा स्मृता॥७९
[3]ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते[4]चापि नाट्यधर्मी तु सा स्मृता ॥ ८०
[5]योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी प्रकीर्तिता[6] ॥ ८१
[7]यश्चेतिहासवेदार्थौ ब्रह्मणा समुदाहृतः[8] ।
[9]दिव्यमानुषरत्यर्थे[10] नाट्यधर्मी तु सा स्मृता ॥ ८२
यश्च कक्ष्याविभागोऽयं नानाविधिसमाश्रितः[11] ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥ ८३
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् ।

---

अपूर्णरूपं दारुवस्त्रचित्रादिरूपतया प्रयुज्यते । ललितैरिति आवेष्टितादि-चतुर्विधकरणोपगृहीतवर्तनाप्रवर्तितैः । उत्क्षिप्तानि चतुस्तालादिना (अ. ९-२७३-२८९) यानि पदानि तेषां क्रमात्कालविभागाश्चतुष्कलत्वादयः । च शब्द इवशब्दार्थः । नृत्यत इव यद्गम्यते नृत्तसदृशी विशाखा सा या गतिरित्यर्थः, तद्भावे लटौ । एतत्प्राणितमेव नाट्यमित्याह योऽयं स्वभाव इति । अङ्गैरातोद्यादिभिरभिनयैश्च यदुपेतत्वं लोकस्वभावस्य नाट्यधर्मी, लोकस्वभावत्वानुभावविलासोपेतत्वं विधायकस्य नाट्यधर्मीत्वं विधानमिति प्रथमाध्याये (१-११८) श्लोकाद्विनार्थ एवायं,तत्र नाट्यलक्षणपरो वाक्यार्थ इति विवृतं चैतत्तत्रैवाध्याये। प्रसङ्गोपयोगेन सर्वाभिनयप्रकारसारा नाट्यधर्म्यभिहिता तां दर्शयति यश्चेति । चकारः प्रसङ्गं द्योतयति । प्रोक्त इति समनन्तरमेव । व्यापकत्वमेव नाट्यधर्म्या उपसंहरति (नाट्यधर्मीत्यादिना) उपदेशद्वारेण नाट्यधर्मीप्रवृत्ता गतिः । अत्र

---

1 न - योज्यते 2 प - च 3 ट - यश्चाङ्गहारविन्यासैः 4 म - चैव ड - यच्च 5 ज - यो यः म - यश्च स्वभावो 6 प - धर्मी तु सा स्मृता 7 म - यत्सेतिहासो वेदार्थौ 8 ट - काव्यसंमतः म - काव्यधर्मतः 9 म - देव 10 ढ - रत्यर्थौ 11 न - देशसमाश्रयः ।

न ह्यङ्गाभिनयात्किञ्चिद्दृते[1] रागः[2] प्रवर्तते ॥ ८४

सर्वस्य सहजो भावः सर्वो ह्यभिनयोऽर्थतः[3] ।
अङ्गालङ्कारचेष्टा तु नाट्यधर्मी प्रकीर्तिता[4] ॥ ८५

एवं कक्ष्याविभागस्तु धर्मी युक्तय एव च[5] ।
[6]विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च तत्त्वतः ॥ ८६

उक्तो मयेहाभिनयो यथावच्छाखाकृतो यस्तुकृतोऽङ्गहारैः

हेतुः न ह्यङ्गाभिनयादिति । अङ्गानि च गीतातोद्यादीन्यभिनयाश्चेति द्वन्द्वसमाहारः । राग इति सामाजिकप्रीतिः । नाट्यधर्म्या यदि व्यापकत्वाल्लोकस्वभावभाविन्या न प्रयोजनमुक्तयेत्याशंक्याह सर्वस्य सहज इति । हि शब्दो हेतुमद्भावं द्योतयति । तदयमर्थः—यस्मात्कविगता नाट्यगता वागङ्गालङ्कारनिष्ठा नाट्यधर्मीरूपा सर्वप्राणवती, अर्थत इति अर्थमपेक्ष्य प्रवर्तते अभिनयश्च सर्वाभिनेयमर्थमपेक्ष्य प्रवर्तते, तस्मात्सर्वस्य संबन्धी सहजो भावो लोकधर्मलक्षण उक्तो भित्तिस्थानीयत्वेन नाट्यधर्म्या सहजसंवादिकर्मणः । अङ्गं वर्तनारूपं गुणलक्षणानि च अलङ्कारश्चेष्टा अलङ्कारा उपमादयश्च ।

अध्यायार्थमुपसंहरति एवं कक्ष्याविभागस्त्विति । धर्मी ह्येकवचनं नाट्यधर्म्या अत्र प्राधान्यादन्यस्यास्तत्रैव मग्नत्वात् । युक्तय इति प्रवृत्तयः अथोपसंहारे च प्रयोजनं धर्म्यादयो उपकरणभूताः, तेषामल्पबाहुल्यविरचितक्रमाभिधानं योजयित्वेति प्रतिपादनमध्यायार्थप्रकरणप्रस्तावे च प्रथमेन योजयति । अन्येन च भाविप्रकरणार्थमासूत्रयति उक्तो मयेहाभिनय इति स मयेत्यात्मज्ञानोत्कर्षेण व्युत्पत्तिं शिष्याणामुत्पादयति । यद्यप्यस्य शाखानृत्तं (करवर्तना) चाङ्गहारश्च वस्तुनीत्युक्तं, तथापि भावाध्याये सात्त्विकप्रसङ्गेन (७-१४३) अङ्कुरस्याभिहितत्वात्, सामान्याभिनये च (अ २२-४१) तदुक्तं वक्तव्यशेषस्य वक्ष्यमाणत्वादाङ्गिकाभिनयोपसंहारादेवोपसंहरति । वाक्य-

1 म - किंचिद्विना 2 ड - नाट्यं 3 ड - अर्थजः 4 म - धर्मीति संज्ञिता
5 म - धर्मीयुक्तस्तथैव च ड - युक्ताः प्रकीर्तिताः 6 म - सह प्रवृत्तिभिर्योज्यो नाट्यज्ञैरर्थयोगतः ट - विज्ञेयो नाट्यतत्त्वज्ञैः प्रयोक्तव्यश्च ।

[1]पुनश्च वाक्याभिनयं [2]यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम्॥

इति भारतीये नाट्यशास्त्रे [3]कक्ष्या-
प्रवृत्तिधर्मीव्यञ्जको नाम
त्रयोदशोऽध्यायः[4]।

---

मेवाभिनयः तत्त्वतश्च धर्मी, अभिनयो वाक्यं हास्यादौ यद्यपि वाक्याभिनय उक्तस्तथापि सत्युक्तस्वरूपमभिनेयमिति तथाह यथावदिति, अत एव पुनरुक्तम्। स्वराः अचः व्यञ्जनानि हलः वर्णा अज्झलसमुदाया इति शिवम्॥

शीतांशुमण्डलकशेखरपादपद्म-
किञ्जल्कपूगपरिपूतशिरोरुहेण।
वृत्तिः कृताभिनवगुप्तपदाभिधेन
[1]कक्ष्याङ्कचित्रतलक्षणवर्णनेऽस्मिन्॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
[2]नाट्यवेदविवृतावभिनवभारत्यां कक्ष्या-
वृत्तिधर्म्यभिधानं नाम
त्रयोदशोऽध्यायः।

---

1 म - वक्ष्यामि 2 म - स्वशक्त्या भूयःस्वर 3 म - नाट्यधर्मीप्रवृत्तिव्यञ्जनो नाम 4 कखगघचभमेषु विना सर्वेषु चतुर्दशोऽध्यायः। दमातृकायां श्लोकसंख्या ७३. आदितः २२५३.

1 क - कक्ष्याङ्कविचित्रतल 2 ख - नाट्यवेदवृत्तौ।

श्री

# नाट्यशास्त्रम्

## चतुर्दशोऽध्यायः*

योवागभिनयः [1]पूर्वं मया प्रोक्तो द्विजोत्तमाः ।
लक्षणं तस्य वक्ष्यामि स्वरव्यञ्जनसंभवम् ॥ १
वाचि [2]यत्नस्तु कर्तव्यो नाट्यस्यैषा[3] तनुः स्मृता ।
[4]अङ्गनैपथ्यसत्त्वानि [5]वाक्यार्थं व्यञ्जयन्ति हि ॥ २

अथ चतुर्दशोऽध्यायः ।

द्विधास्थितं सद्म सदाविभक्तं विश्वान्पदार्थान्[1] समुपाददानम् ।
पाणीन्द्रियं [2]संव्यवहारहेतु यस्येश्वरं तं वरदं नमामः ॥

आङ्गिकाभिनयानन्तरं वाचिकस्य भेदं[3] नाट्यानुप्राणकतया पूर्वोद्दिष्टाङ्गिकस्य विषयसमर्पणप्राणत्वाच्च वाचिको लक्षणीय इत्येवंभूतामध्यायसङ्गतिं करोति यो वागाभिनय इति । वागेवाभिनयः वाचिकाभिनयः । पूर्वमिति षष्ठेऽध्याये [4]स निरूप्यते, [5]तत्त्वेन चास्याभिधानप्राधान्यात् । अत्र हेतुमाह वाचि यत्नस्तु कर्तव्य इति कविना निर्माणकाले नटेन प्रयोगकाले । कुत इत्याह (नाट्यस्यैषेति) एषा हि तनुर्नाट्यस्य सकलप्रयोगभित्तिभूतत्वेनातोद्य-

1 ङ - प्रोक्तो मया पूर्वं 2 भ - यत्नो विधातव्यः 3 प - नाट्यस्येयं 4 ङ - अङ्गनेपथ्यतत्त्वानि 5 भ - वागर्थम् ।

1 ख - विश्वात्पदार्थात् 2 ख - सव्यवहार 3 ख - वाचिकस्येदं 4 ख - तन्निरूप्यते 5 क - तेन ।

* पञ्चदशाध्याय इति जादि बान्तेष्वादर्शेषु दृश्यते । अस्याध्यायस्य पाठोऽपि भिन्नमातृकासु भिन्नक्रम एव, कासुचित्केचिद्भागा अपि लुप्ता, अन्यासु त्वधिका वा पाठविपर्ययो वा विद्यते । उज्जयिन्यादर्शे तु पूर्वार्धमध्यायस्यैकपत्रहीनमष्टादशाध्यायमध्ये वर्तते । तथैव पूर्वं मुद्रितमासीत्काव्यमालायाम् । व्याख्यानानुसारी पाठो गृहीतोऽस्माभिः ।

गीताभिनयानुग्राहकत्वात् स्वयमभिनयरूपत्वाच्च । प्रदर्शितं चैतदस्माभि-रुपाङ्गाभिनयारम्भ एव (अध्या-८) ।

[1]यत्तु कैश्चिदभिधीयते चित्तवृत्तिं प्रति शब्दानां बहिरङ्गत्वं[2] तदसत् । तथा हि यदुच्यते व्यतिरेकाभावान्न रसादयः शब्दवाच्या इति, तत्र सर्वैः शब्दैर्व्यतिरेकाभावोऽसिद्धः,[3] अभिनयचतुष्टयसामान्यं बहिः सर्वत्र प्रतीति-स्फुटतायां व्याप्रियत इत्यवोचाम सप्तमेऽध्याये ।

अथ शृङ्गारादिशब्दानां[4] वाचिकानामभावेऽपि तत्प्रतिपत्तिः ।

परिणतशरकाण्डापाण्डुरा गण्डपाली
हिमसमयनिमीलत्पुण्डरीकायमाणम्[5] ।
नयनमधरबिम्बं श्वासविश्रान्तितान्तं
तव सुतनु तनोति प्राणितं मन्मथस्य ॥

इत्यादावयमेव च व्यतिरेकाभावः । तदप्यसत् । एतावतापि हि वृश्चि-कादिवत् निमित्तान्तरमपि तत्प्रतीतौ सुवचम् । वृश्चिकोऽन्यो गोमयजोऽन्य एव वृश्चिकप्रभव इति चेदिहापि तत्समानम् । न हि शृङ्गार[6]शब्दे यादृशी प्रती-तिस्तादृश्येवान्यतः, न च[7] न भवति श्रृङ्गारशब्दात्तत्प्रतीतिः शृङ्गारहास्येति (६-१६) श्लोकस्य काकवाशितदेशीयतापत्तेः । यथासंकेतं हि [8]शब्दात्प्रवर्त-मानात्सिद्धं साध्यं [9]चाभिधातुं केन प्रतिहन्यत इति [10]साध्यनामकापि बिभी-षिका । किंचेदमपि शृङ्गारायते हसति करुणायते इत्यादि साध्यशब्दशब्दनी-यत्वं प्रति किं वक्तव्यं स्यात्, अवश्यं चैतत्, अन्यथा "याते द्वारवतीं" *इत्यादौ

---

1 क - यस्तु 2 ख - बहिरङ्गत्वं धर्मः 3 क - भावः सिद्धः 4 क - वाचि-कानां 5 क - चञ्चरीकायमाणः 6 क - शब्दे 7 क - तादृश्येवाद्यतना च 8 क - शब्दाः प्रवर्तमानाः 9 क - च तत् 10 ख - साध्यमानता ।

* याते द्वारवतीं तदा मधुरिपौ तद्दत्तकम्पानतां
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥

मागधान् पराजित्य मधुरातो द्वारवतीं याते कृष्णे तत्प्रत्यागमनप्रत्याशा-शून्यया राधयेति प्रकरणमूह्यम् ।

सोत्कण्ठयेति, उत्कमिति चानुवादो विफल एव स्यात्, तद्रूपास्पर्शे [1]तदनुभाव-समाकर्षणस्याप्ययोगात्। स्थायिव्यभिचारिणां च भेदप्रतीतौ—

यान्त्या तया वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः॥ (मालती १-३२)

इत्यादावनुभावप्रत्ययोऽपि[2] दुर्लभीभवेत्, का कथा रसस्य वलितावृत्तदिग्धनिखातादीनां कटाक्षशब्दे जीवभूतानां क्रियासु प्रतिपत्तेरभावात्। † "लीनेव प्रतिबिम्बितेव लिखितेव" इत्यादावेषैव वार्ता।

"तथा सहासरभसव्यावृत्तकण्ठग्रहं[1]", "वपुरलसलसद्बाहु लक्ष्म्याः[2]" "कतिचिदहानि वपुरभूत्केवलमलसेक्षणं तस्याः[3]"॥

रम्याणि वीक्ष्य मधुराणि निशम्य शब्दान्
[3]पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥ शाकु (५-२)

---

1 क - तदनुभव 2 क - भाववद्योपप्रत्ययोऽपि 3 ख - पर्युत्सुकी।

---

† लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया॥ (माल ५-१०)

१ एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहम्॥ (अमरुककाव्ये)

२ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥ (वेण्याम्)

३ आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम्।
कतिचिदहानि वपुरभूत्केवलमलसेक्षणं तस्याः॥ (विक्रमो ५-७)

"निद्रानिमीलितदृशो मदमन्थरायाः १", "विवृण्वती शैलसुतापि भावमङ्गैः२" इत्यादिकाव्येषु सहृदयहृदयसागरसमुच्चलद्राकामृगाङ्कप्रतिबिम्बेषु[1] जीवितभूतानां हासालस्यौत्सुक्यनिद्रामदागमाभिलाषागमादीनां [2]शब्दास्पृष्टत्वेन विभावानुत्साध्यस्वभावे [3]वीतरागतेव बककाकक्रीडाकल्पनैव स्यात् । सिद्धस्वभावानामेव पदैरभिधीयते, तत्र भवनमिति तदनुभवतीति तत्साध्यस्वभावतेति चेत्, अन्यतरधर्ममुखेन क्रियाख्यस्य धर्मिणो [4]द्वाभ्यामपि यथासङ्केतस्पर्शाद् द्वितीय[5]धर्मास्पर्शस्योभयोरपि तुल्यत्वात् साध्यतार्थं क्रियाया जीवितमिति चेत् धर्मद्वयवति धर्मिणि क एषोऽन्यतरधर्मपक्षपातः, न च सिद्धता धर्मोऽस्या नास्ति तथात्वे वा कदाचिदपि कूलदर्शनं न स्यात् । भवनमिति [6]वारोपितगौणीप्रतिपत्तिः स्यात् ।

सापि [7]बलादारोपस्थानस्य चानीतस्यैव केनापि शब्देनास्पृष्टत्वात्, तस्मात्सिद्धाभिधायिना वा शृङ्गारादिशब्देन स्पृश्यत एव तदर्थः । न तु सर्वो[8] वक्ता कविरित्यतिप्रसङ्गलक्ष्यमाणप्रबन्धबन्धुरं काव्यनिर्मातृत्वं[9] हि कवित्वं, न चित्तवृत्ति प्रतिपादकत्वम् ।

यत्तु शृङ्गारादिशब्दाद्यवधिनं [10]प्रतीतिरित्युच्यते तत्र सङ्केत[11]स्मृतिं मुक्त्वा नान्यद्व्यवधानं [12]विघ्नः विततलक्षणपौर्वापर्य विपाकोऽयमिति सङ्केतग्रहणे किं तथा प्रतीतिः । एतेनान्वयाभावः प्रत्युक्तः । विभावादिभ्योऽपि पूर्णकाव्यप्रक्रिया[13]परिगतमन्तरेण न रसादयः । (यथा)

उद्याने तु स्थितावेतावन्योन्यं ददतौ दृशम् ।
मध्येभुवं लिखन्तौ च प्राप्य सङ्गमसङ्गतौ ॥ इति

तस्मादपूर्णत्वे[14] तुल्योऽन्वयाभावः । तासां तु—सिद्ध एव । यत्तूपाध्यायैः काव्यकौतुके रसोद्देशपरश्लोके—इत्यादिनिरूपितं तदुक्तान्यार्थतयैव न गृहीतव्यम् ।

---

1 क – प्रतिमेषु 2 ख - शब्दस्पृष्टत्वे तान् विभावान् 3 क - चदीतरगतेच 4 क - बाह्यानामपि 5 क - धर्मस्पर्शस्य 6 क - वारोपिता 7 क - बालाभावेदारोप 8 क - त्वसर्वो 9 ख - निर्माणत्वं 10 क - नाप्रतीतिः 11 क - स्मृतिमुक्त्वा 12 क - विद्यापितत 13 क - परगमं 14 ख - अपूर्वत्वे ।

१ निद्रानिमीलितदृशो मदमन्थराया नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशोर्मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥

२ विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ (कुमा ३-६७)

[1]वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि[2] तथैव च।
तस्माद्वाचः परं नास्ति वाग्घि[3] सर्वस्य कारणम्॥ ३
[3]नामाख्यातनिपातोपसर्गतद्धितसमासनिर्वर्त्यः।
सन्धिविभक्तिनियुक्तो[4] विज्ञेयो वाचिकाभिनयः[5]†॥ ४

नन्वेवं रससूत्रे शब्दोऽप्युपादातव्यः? । तदिदमायातं—उत्सङ्गसङ्गिनि बालके तदन्वेषणमिति । अत्र भावोपादाने हि किं न संगृहीतम् *"यदयमनुभावयति वागङ्गसत्त्वकृत" इति (७-७)। [1]आवृत्या च वागित्यत्रैव छेदः। तद्यदि [2]वाग्भवति तदेतान्यर्थं व्यञ्जयन्ति वाक्सहितानि [3]स्वार्थं व्यञ्जयन्ति एकतस्त्र्यात्मकतश्च वागिति समासयोगेनाह। सैवेयमुपयोगिनी किंतु चतुर्थगोपाय्यभूता परमपुरुषार्थस्वभावा विश्व[4]कारणभूता भगवती भारतीत्याह वाङ्मयानीति वाचि फलरूपायां निष्ठा येषाम्। कुत इत्याह वागिति। इह भावानां सत्तासंबन्धनिजलक्षणार्थक्रियाकारित्वादिकृतं यत्सत्त्वं तत्प्रधानकबोधत्वभूतं शपथशरणं, तस्य बोधस्य पारमैश्वर्यं स्वातन्त्र्यं प्रत्यवमर्शात्मकमेव जडवैलक्षण्यदायीति विभक्तमस्मत्परमगुरुपादैः प्रत्यभिज्ञादौ, अस्माभिश्च तद्विवरणे भेदवादविदारणादौ च। एवं वागेवावभासिका सैव च निर्वाहिकी, अवभासनैव हि परमार्थतो निर्वाणम्। तदाह वाग्घि सर्वस्येति वागेव विश्वाभुवनानीति श्रुतेः शब्दविवर्तादिरूपत्वं च प्रसाधितं तत्र भवद्भिर्भर्तृहरिप्रभृतिभिरिति ‡तदिहानुसरणीयम्। सर्वाकारत्वे च वाचः इतिवृत्तमपि

1 भ - वाङ्मयानि तु 2 न - वाग्भिः 3 प - आगमनामाख्यातोपसर्ग ड - नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः 4 ड - विभाक्तिषु युक्तो प - समेतो 5 ब - वाचिकोऽभिनयः।

† आगमनामाख्यातोपसर्गतद्धितनिपातसन्धियुतः।
सवचनविभक्त्युपग्रहनिर्वर्त्यो वाचिकाभिनयः॥ इति व्याख्यातृपाठः स्यात्

1 ख - आकृतः 2 क - वा भवति 3 ख - सार्थं 4 ख - करण।

* अयं पाठः कादि चान्तेष्वादर्शेष्वेव लभ्यते, तदन्येषु भिन्नतया दृश्यते।

‡ वाक्यपदीये आगमकाण्डे "शब्दस्य परिणामः" इत्यारभ्य षट्सु कारिकासु वाचः सर्वस्वकारणत्वं प्रतिपादितं भर्तृहरिणा स्ववृत्तौ प्रपञ्चितं च।

द्विविधं हि[1] स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा[2] ।
[3]तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः ॥ ५
व्यञ्जनानि स्वराश्चैव[4] सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा ॥ ६
[5]एतैरङ्गैः समासैश्च नानाधातुगवेक्षितम्[6] ।
विज्ञेयं संस्कृतं पाठ्यं प्रयोगं च निबोधत[7] ॥ ७

यच्छरीरं नाट्यस्येति (अ२२-१) यद्वक्ष्यते तन्न विरुद्धं, तस्यापि वाङ्मयत्वादिति तत्रैव निर्णेष्यते ।

तत्र शास्त्रान्तरप्रसिद्धानपि रसाङ्गत्वेन कविशिक्षार्थं नटस्य च तत्र तत्राभिधेये विश्रान्तिकरान् कर्तव्यतयेत्युपदेशार्थमागमानिति निर्दिशति आगमेत्यादि । अर्थद्वारेण रूपसौन्दर्येण चैषामुभयथा च योगः, क्षुभितं मन्नमिदं मे क्षुब्धमिति मन्थेः प्रतीतिः स्यात् । अर्थभेदेऽपि स्वरूपसौन्दर्यं सार्वत्रिकं,विषयभेदेन च 'अस्यन्दिष्यन्त सिन्धवः' इति हि कर्तव्ये 'अस्पन्दिष्यन् सर्वे सिन्धवः' इति दुर्भणम्, अश्रवं च 'मक्ष्यं माक्षति वक्षसः क्षतभवान्वेपक्षतं क्षीवितम्' (?) इति—अत्र रौद्रे मोक्ष्यतीति हृद्यम् । अत्र 'कदा संमार्जिष्यति' इति लोचने न तु कदा संमाक्ष्यतीति, एवं वैकल्पिकेऽपि आगमे सौन्दर्यात्, अभावपक्षो[1] वा 'आच्छिद्य प्रियतः*' इति सुव्यक्तमेव । एकान्तसंप्रतीतिनश्चेति [2]धुटोऽसत्त्वपक्ष एव । आगमेनादेशोऽप्युपलक्ष्यते । मुग्धाशब्दस्थाने न मूढाशब्दः प्रयोगार्हः ।

1 ब - तु 2 च - यथा 3 न - अङ्गानि वक्ष्याम्यनयोः 4 ड - स्वरश्चैव 5 भ - तथा समासा इत्येवं ड - एतैरङ्गविधानैस्तु 6 ड - समाश्रयम् न - गवाक्षिकम् भ - समन्वितम् 7 ड - तद्वक्ष्यामि समासतः.

1 क - लक्षो 2 क - धुटो ।

* आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं
यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।
ईर्ष्याद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथंचन ततः कर्णावतंसीकृतम् ॥

नाम यथा मदनरिपुरिति भगवत्पर्यायश्चेति तदीयशृङ्गारवर्णने न प्रयोज्यम् । आख्यातमपि यद्वैचित्र्यमावहति, "स्मरसि स्मर मेखलागुणैः"* इति वर्तमानप्रत्ययेन [1]तत्साक्षात्करणमुपालम्भविषयता, त्वमेवात्र साक्षी अनृतं न प्रकटितं, अन्यथा स्मृतवानिति मेखलागुणैरिति स्यात् । उपसर्गात्प्रकृतार्थयोगिनो यथा—निर्मित इत्यर्थे न मितिः । अधिकद्योतको यथा—"मुहुरुपचितैर्दृष्टिराळुप्यते"† इति । उपसर्गैः कर्मप्रवचनीया अप्युपलक्ष्यन्ते (यथा) "किं स्यादर्जुनतः प्रति" इति, "विचितं नास्तीति" प्रतीतिः पुनरेव स्यात्, अर्जुनकृते विचितमिति । तद्धितप्रत्ययोपलक्षणम् ।

मीमांसते हृदयमात्मन एव बाला
नाम्नापि मानकलनां सहते न जातु ।

न तु चित्तं विचारयत्यात्मन एवेति । एवं सुब्धातुप्रत्ययपदं न तत्सु कृत्सु वाच्यं गौरवभयात्तु नोदाहृतम् ।

स्त्रीप्रत्ययो यथा—'अध्यासीनः सवैदग्धी' [2]कर्म तया कृती न तु वैदग्धीमिति स्त्रीप्रत्ययेन सौभाग्यातिशयप्रतीतेः ।

तद्धितो यथा—"शात्रवं च पपुर्यशः"‡ इति न तु शत्रूणां चेति, तद्धितवृत्त्या ह्येकार्थीभावान्वयात् तद्ग्रासीकृतमपि यशस्ते स्वयंग्राहीचक्रुरित्यर्थः। निपातो यथा—"हहा हा देवि धीरा भव"§ सूः (आः?) किमत्र किरातैर्यत्र

1 क - तत्साक्षात्कारेणोपालम्भ 2 क - कर्मनया

* स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥ (कुमा-४-८.)

† त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते ते
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ (मेघ. उ-४४)

‡ ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेरासवं योधाः शात्रवं च पपुर्यशः ॥ (रघु ४-४२)

§ स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

[1]अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश।
[2]हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः॥ ८

अत्र स्वराश्चतुर्दश [3]कादीनि व्यञ्जनानि यथा—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ स्वरा ज्ञेयाः। कखगघङचछजझञटठडढणतथदधनपफबभमयरलवशषस-हाः इति व्यञ्जनवर्गाः॥ ९

---

वान्ति वर्षानिला विशेषेण निरङ्कुशा इति,......एकार्थीभावो यत्र सति वृत्तं......। समासो यथा—"मध्येगङ्गायमुनमनु नेति, न तु मध्ये गङ्गायमुनयोरिति[1]। एवं समासान्तरेषु वाच्यम्। शुद्धेषु सङ्कीर्णेषु चागमादयो [2]निवृत्तान्ता विद्यन्ते यत्रेति मत्वर्थीये च।

सन्धिर्द्विधा नैरन्तर्यं रूपश्लेषश्च—भवतोयेति विपर्ययेण[3] नैरन्तर्ये असिद्धता[4], तत्रास्थिरा इति रूपश्लेषे बीभत्साश्लीलने। सूत्रं ब्राह्ममिति पृथगपि द्विश्रुति सङ्गः पदयोः नैकपदवत्ता, ब्रह्मसूत्रमित्यनुस्वानस्योत्तरसंक्रान्तिव्यतिरेकेण [5]चात्मनि विश्रावयितुमशक्यत्वादेकपदवद्भावः।

विभक्तयः सुप्तिङ्वचनानि, तैः कारकशक्तयो लिङाद्युपग्रहाश्चोपलक्ष्यन्ते। यथा "पाण्डिम्नि मग्नं वपुः*" इति वपुष्येव [6]मज्जनकर्तृकत्वं तदायत्तां पाण्डिम्नश्चाधारतां गदस्थानीयतां द्योतयन्नतीव रञ्जयति, न तु पाण्डुस्वभावं वपुरिति। एवं कारकान्तरेषु वाच्यम्।

---

1 न - अकारादि द - मातृकायां श्लोको न वर्तते 2 भ - ककारादीनि हान्तानि 3 ड - मातृकायां—दृश्यते 'स्वरा ज्ञेया' इत्यनन्तरम्।

---

1 क - गङ्गारचितनयनयोरिति 2 क - अनिच्छन्ना 3 क - विपर्ययौ 4 क - असिलता 5 क - भस्मनि 6 क - संछन्न

* दाहोम्भः प्रसृतिंपचः प्रचयवान् बाष्पप्रणालोचितः
श्वासाः कम्पितदीपवर्तिलतिकाः पाण्डिम्नि मग्नं वपुः।
किंचान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते॥ (विद्ध २-२१)

[1]अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥ १०

अकुहविसर्जनीयाः कण्ठ्याः, इचुयशास्तालव्याः, ऋटुरषा मूर्धन्याः, ऌतुलसा दन्त्याः; उपूपध्मानीया ओष्ठ्याः; ✱इत्युपध्मानीयः✱ इति जिह्वामूलीयः एऐ कण्ठतालव्यौ ओ औ कण्ठ्यौष्ठ्यौ, वकारो दन्त्योष्ठ्यः ङञणनमा अनुनासिकाः, विसर्जनीयस्त्वौरस्य इत्येके। सर्वमुखस्थानमवर्णमित्यपरे।

द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च त्रयोऽपरे।
[2]अघोषा घोषवन्तस्तु ततोऽन्ये परिकीर्तिताः॥
वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ।
अघोषा इति ये त्वन्ये सघोषाः संप्रकीर्तिताः॥ १२
[3]एते घोषाघोषाः कण्ठ्यौष्ठ्या दन्त्यजिह्व नासिक्याः[4]।
ऊष्माणस्तालव्या विसर्जनीयाश्च बोद्धव्याः॥ १३
गघङजझञडढणदधनबभमयरलवा मता घोषाः।
कखचछटठतथपफशषसा इति वर्गेष्वघोषाः स्युः॥
कखगघङाः कण्ठस्थास्तालुथानास्तु चछजझञाः।
टठडढणा मूर्धन्याः तथदधनाश्चैव दन्तस्थाः॥ १५

---

1 भमयोर्विना सर्वासु मातृकासु— 2 न - अघोषवन्तो येचान्ये सघोषाः परिकीर्तिताः छ - अघोषाविति येत्वन्ये सघोषाः संप्रकीर्तिताः 3 न - एषां ङ - जिह्व्यनुनासिकाः प - जिह्व्यनुनासिक्याः।

वचनं यथा—"पाण्डवा यस्य दासाः"* सर्वे च पृथक्चेत्यर्थः। तथा वैचित्र्येण "त्वं हि रामस्य दाराः" किं यथा कीर्तिस्तवश्वेतेति, न तु श्वेतं यशस्तवेति। उपग्रहः—"कुर्वाणो भुजशालिनो" न तु कुर्वते, भुजशालित्वं लिङ्गम्। "परिमृदितमृणालीकोमलान्यङ्गकानि"†। आसमन्तादितिवैचित्र्यं यथा—"आपातेऽपि विकारकारणमहो वक्राम्बुजन्मा स वः"‡। नियुज्यते क्रियायामिति धातुः, तस्य वैचित्र्यं (यथा) "[1]ग्रस्तं कुलान्ते [2]जगतः" न तु भुक्तम्। ग्रसिति स्वदनमात्रे परिभाषितेऽपि ग्रासातिशयसंरम्भः कुले तत्र वर्तते, पूर्ववदत्रापि द्वन्द्वान्मत्वर्थीयः। एतदेवोपजीव्यानन्दवर्धनाचार्येणोक्तं 'सुप्तिङ्वचने'त्यादि¶। अन्यैरपि सुबादिवक्रतेति।

इत्येवं दशभिरङ्गैरुक्तो कवितावाचिकशब्दनिष्ठो व्यवहारः विभज्य स्थानकरणादिज्ञानं च कवेर्गाढशिथिलमसृणपरुषादिगुम्फविशेषविभागायोपदिष्टं न तस्य च सम्यगुच्चारणापदेशाय वर्गश उपादानं, सावर्ण्येन प्रबन्धसौन्दर्यज्ञानार्थम्, तथा—"[3]दत्तानन्दो धनिनमनुसर्ता धृतिधन" इत्यादौ। घोष इति अनुप्रदानविशेषः। नासिका तद्व्यापारोऽन्ते यस्य तथाभूतो धर्मोऽनुस्वारः। तत्र घोषबाहुल्याद्गाढता, तथा—

---

1 क - ग्रस्तं ख - सूत्रं 2 ख - गजतः 3 ख - दर्भानन्दो धसिति।

* कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुश्शासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः॥ (वेण्यां)

† अलसललितमुग्धान्यध्वसंतापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि।
परिमृदितमृणालीकोमलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता॥ (उत्त १-२४)

‡ केलीकन्दलितस्य विभ्रममधो धुर्यं वपुस्ते दृशौ
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेऽपि विकारकारणमहो वक्राम्बुजन्मासवः
सत्यं सुन्दरी वेधसस्त्रिजगतीसारं त्वमेकाकृतिः॥

¶ सुप्तिङ्वचनसंबन्धैस्तथाकारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्यो लक्ष्यक्रमः क्वचित्॥ (ध्वन्या. ३-१६)

पफबभमास्त्वोष्ठ्याःस्युर्दन्त्या ऌलसा [1]अहौ च कण्ठस्थौ[2]
ताल्व्या इचुयशाः स्युः ऋटुरषा [3]मूर्ध्नि स्थिता ज्ञेयाः॥
ऌऌृदन्त्यौ ओ औ कण्ठोष्ठ्यौ एऐकारौ च कण्ठताल्व्यौ
[4]कण्ठ्यो विसर्जनीयो जिह्वामूलोद्भवौ कखयोः[5] ॥ १६
पफयोरोष्ठस्थानो भवेदुकारस्तथा स्वरो विवृतः[6] ।
स्पृष्टाः काद्या मान्ताः शषसहकारास्तथा विवृताः ॥ १७
अन्तःस्थाः संवृतजा ङञणनमा नासिकोद्भवा ज्ञेयाः ।
ऊष्माणश्च शषसहा यवरलवर्णास्तथैव चान्तःस्थाः॥ १८
जिह्वामूलीयः कः प उपध्मानीय संज्ञया ज्ञेयः[7] ।
कचटतपाः स्वरिताः स्युः खछठथफाः स्युस्तथा कण्ठ्याः[8] ॥
[9]कण्ठोरस्थान् विद्यात्[10]गजडदबान् पाठ्यसंप्रयोगे तु ।
वेद्यो विसर्जनीयो जिह्वास्थाने[11] स्थितो वर्णः ॥ २०
एते व्यञ्जनवर्गाः समासतः संज्ञया कथिताः ।
[12]शब्दप्रयोगविषये स्वरांस्तु भूयः प्रवक्ष्यामि ॥ २१

अङ्गं दधन्निबिडचन्दनमङ्गनानां
नैदाघवातसदनं न तु मन्मथस्य ।"

अलाकारतकारावेवाघोषौ । एतदर्थ एव च स्थानादिविभाग उपन्यस्तः । एतत्स्वरलक्षणाध्याये (अ-१७) स्फुटयिष्यामः । कपयोरुच्चारणाय ककारपकारौ जिह्वाशब्देन स्थानकरणौ ।

1 छ - गहौ 2 प - कण्ठोष्ठ्यौ 3 ड - मूर्ध्नि 4 न - कण्ठ्यौ विसर्जनीयौ जिह्वामूल्योद्भवौ कखयोः 5 ड - कपयोः 6 द - स्थानं भवेद्रकारः स्वराविद्धः । 7 ड - ज्ञेयौ न - ज्ञेयाः 8 फ - तथाकस्याः 9 द - कण्ठोरस्थान् 10 ड - घझढधभान् 11 द - मूल 12 ड - शब्दविषयप्रयोगे ।

[1]यस्मिन् स्थानेषु समो विज्ञेयो यः सवर्णसंज्ञोऽसौ ।
[2]य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ॥
पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः[3] ।
[4]इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः ॥
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गैस्तु ।
[5]उद्दिष्टं शब्दानां लक्षणमेतत्समासयोगेन ॥ २४
प्रकरणवशाद्धि तदहं विस्तरतः संप्रवक्ष्यामि ।
तत्प्राहुः सप्तविधं षट्कारकसंयुतं प्रथितसाध्यम् ॥ २५

(सवर्णसंज्ञ इति) ये यत्र तुल्ये तत्सवर्णभूमयः । पुनर्ह्रस्वदीर्घादि-रूपतया समानसंज्ञाद्भेदेऽप्यनुप्रासादावभेदाद्व्यञ्जनभेदे(?) . . . स्वरा . . . . . . . . भावादेकवचनादि भूतकालयुक्तं नामेति—संबन्धः । करिष्यमाणं क्रियमाणं क्रियाकृतमिति यथाभूतादियुक्तं गमनागमनाभ्यां पूर्वापरीभूताध्य-

1 इदं श्लोकार्धं कचयोरेव वर्तते ।

2 अतःपरं भमयोः पाठभेदो यथा—
य इमे स्वराश्चतुर्दश तत्रादौ दश समानसंज्ञास्तु ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घोऽवगन्तव्यः ॥ ११ ॥
पूर्वाचार्यैरुक्तं विस्तरतो लक्षणं तु शब्दानाम् ।
संक्षेपादहमेषां लक्षणमर्थं च वक्ष्यामि ॥ १२ ॥
अर्थप्रधानं नाम स्यादाख्यातं तु क्रियाकृतम् ।
द्योतयन्त्युपसर्गास्तु विशेषं भावसंश्रयम् ॥ १३ ॥
नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते ।
पृथक्तत्रोपसर्गेभ्यो निपाता नियमे च्युते ॥ १४ ॥

3 न - परस्तु दीर्घो विनिर्देश्यः ।

4 न - एभिर्व्यञ्जनवर्गैर्नामाख्यातोपसर्गैर्निपातैः ।
तद्धितसन्धिविभक्तिभिरधिष्ठितः शब्द इत्युक्तः ॥

5 एतत्स्थाने डादिषु—
पूर्वाचार्यैरुक्तं शब्दानां लक्षणं तु विस्तरतः ।
पुनरेव संहृतार्थं लक्षणतः संप्रवक्ष्यामि ॥

[निर्देशसंप्रदानोपादानप्रकृतिसंज्ञाभिः ।
संप्रत्यतीतकालक्रियादिसंयोजितं प्रथितसाध्यम् ॥
[1]वचनं नागतयुक्तं सुसदृशसंयोजनविभक्तम् ।
[2]पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं वापि ॥ २७
[3]स्वाद्याद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम्[4] ।
प्रातिपदिकार्थलिङ्गैर्युक्तं पञ्चविधमिदं ज्ञेयम् ॥ २८
आख्यातं [5]पाठ्यकृतं ज्ञेयं [6]नानाश्रयविशेषम् ]
[7]वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् ॥ २९
प्रातिपदिकार्थ[8]युक्ता धात्वर्थानुपसृजन्ति ये स्वार्थे[9] ।
उपसर्गा ह्युद्दिष्टास्तस्मात्संस्कारतस्तस्मिन्[10] ॥ ३०

क्षापरोक्षभूताभ्यां युक्तमाख्यातं प्रथितः साध्योऽर्थो वाच्यत्वेन यस्य । पुरुषै-रुत्तममध्यमप्रथमैर्विभक्तम् । धात्वर्थानुपसृजन्ति उपरागेणान्यादृशान् कुर्वन्ति तेनोपकारेण प्रातिपादिकार्थस्य युक्तसंबन्धेन प्रकरोतीति हि शब्दः । प्रकर्ष-प्रातिपदिकार्थोपरागेण वा धात्वर्थं विचित्रं करोति यद्वा तु स्वार्थे धात्वर्थानु-पसृजन्ति अतः उपसर्गान् प्रातिपदिकार्थे च युक्त्या उपसर्गाः यथा प्राचार्यः प्रान्तेवासी, प्रातिपदिकार्थयुक्त्या वृद्धश्च घटश्च धातुयुक्त्या पचति पठति च पाक(पाठ)योरेव हि समुच्चयशब्दौ युक्तौ अयुक्त्याश्रयात्तु पादपूरणार्थमुच्यते यत्र द्योतनेन विना न खण्डना द्योतनेन च सति वाक्यमलंकृतं भवति । तद्यथा—"मिलति न खलु यस्या" इति खलुशब्दः प्रयासस्याकृतार्थत्वं द्योतयति । तच्च तेनापि विना स्फुटमेव वाक्यार्थत एव लाभात् । "अहरह-

1 ब - वचनानागत ड - वचनानामिति 2 - टठढकचभमादिमातृकासु न वर्तते श्लोकः 3 अयं श्लोकः कादिचान्तेषु नभम संज्ञेषु चन दृश्यते । ढ - स्वाद्यात्यधिकार 4 ड - विभूषिता न्यासाः 5 ड - पाठ्यमिद 6 द - नामाश्रय ड - नानार्थाश्रय प - नामार्थसंश्रय 7 श्लोकार्धं कादिचान्तेष्वेव दृश्यते 8 ढ - युक्तं न - यक्ताद् 9 ड - उत्सृजन्ति ये स्वार्थैः द - येऽन्यार्थैः 10 ड - संस्कारशास्त्रेऽस्मिन् ।

प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु ॥ ३१
[1]प्रत्ययविभागजनिताः प्रकर्षसंयोग[2]सत्त्ववचनैश्च ।
[3]यस्मात्पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥ ३२
[4]लोके प्रकृतिप्रत्ययविभागसंयोगसत्त्ववचनेषु[5] ।
[6]तांस्तान् पूर्यन्तेऽर्थां[7]स्तेषु हि तद्धितस्तस्मात् ॥ ३३
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
[8]यस्माद्विभजन्त्यर्थान्विभक्तयः कीर्तितास्तस्मात्[9] ॥ ३४
विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः ।
सन्धीयते पदे यस्मात्तस्मात्सन्धिः प्रकीर्तितः ॥ ३५
[वर्णपदक्रमसिद्धः[10] [11]पदैकयोगाच्च वर्णयोगाच्च ।
सन्धीयते [12]तु यस्मात्तस्मादुपदिश्यते सन्धिः[13] ॥ ३६

---

रनुरागात्" इति निर्भज्य वचनं द्योतिनस्यापि स्फुटीकरणम्, तद्युक्ता । "अहो बतासि स्पृहणीयवीर्यः *" प्रातिपदिकार्थानेतैरर्थैरुपनिपतितैर्ज्ञापयति । तद्धितः—तस्मै प्रातिपदिकार्थाय हितस्तत्प्रातिपदिकार्थं च यस्य वा स्वात्मीकुरुते यतः प्रत्ययादिविभागावयवः काव्ये तन्मतं संप्रयोगप्रयोजनमैन्द्रेऽभिहितं, संयोगस्येति संबन्धः । चान्द्री ज्योत्स्ना, सत्त्वं तद्भावः (सूक्तं) सौक्त्यं, वचनं प्रवचनं, काठकमादित्यश्रुत्या, तुर्यपञ्चमाध्यायविहिता निर्दिश्यन्ते।

---

1 अयं श्लोकः टठडढनतथप ब - आदर्शेष्वेव दृश्यते 2 न - तत्त्व 3 प - तांस्तान् 4 ड - लोप 5 ड - तत्त्ववचनैस्तु 6 च - ते ते पूर्यन्येर्थाः 7 न - अर्थाश्च हितो यतः 8 ड - विभजन्त्यर्थान्विभक्तयस्तेन ते प्रोक्ताः ढ - विभजन्त्यर्थं यस्मिन् 9 न - तेन ताः प्रोक्ताः 10 ब - वर्णक्रमसंसिद्धः ड - वर्णक्रमसंबन्धः 11 ड - पदैकयोगोऽन्य ब - पदैकयोगान्य ढ - पदैकयोगेऽन्य 12 ड - च न - हि 13 सन्धिः समुद्दिष्टः ।

[1]लुप्तविभक्तिर्नाम्नामेकार्थं संहरत्समासोऽपि ।
[2]तत्पुरुषादिस्तज्ज्ञैर्निर्दिष्टष्षड्विधो विप्राः ॥] ३७
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थ[3]संयुक्तैः ।
पदबन्धाः कर्तव्या [4]निबद्धबन्धास्तु चूर्णा वा ॥ ३८
[5]विभक्त्यन्तं पदं ज्ञेयं [6]निबद्धं चूर्णमेव च ।
तत्र चूर्णपदस्येह संविबोधत लक्षणम् ॥ ३९
अनिबद्धपदं छन्दस्तथाचानियताक्षरम्[7] ।
[8]अर्थापेक्ष्यक्षरस्यूतं [9]ज्ञेयं चूर्णपदं बुधैः ॥ ४०
निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम्[10] ॥ ४१
एवं नानार्थसंयुक्तैः [11]पादैर्वर्णविभूषितैः ।

एकस्य पदस्य बहूनां वा पदानां समाप्तिं प्राप्तानाम् । वाशब्दाद् द्वयोरपि। येनार्थो विभज्यते विभक्त्याख्यः प्रत्ययः, तेषां च पदानां द्वैविध्यं धातोर्वा संबन्धि यदुत्पन्नं लिङ्गस्य वा अर्थवल्लिङ्गमिति संज्ञायां संबन्धि व्युत्पन्नं यदि वा लिङ्गस्य संबन्धिन्यो विभक्तयः सुपः धातोस्तिङः । पद इत्येकपदे नास्त्यतिसंहितेत्याह । निबद्धो भाविच्छन्दोविधिना बद्धः संघट्टना यथा । पदबन्धा इत्युक्ते पदं निरूपयति तत्रेति परिमितवक्तव्यत्वादित्यत्राशयः । यतिर्विरामः छन्दोऽक्षरसंख्या नियमः अक्षरनियमो गुरुलघुनिवेशनियमः एतद्विहीनं चूर्णपदमर्थशृङ्गारवीराद्यपेक्ष्यक्षराणि परिमितानि भूयांसि वा यत्रेति असमाससंघट्टनात्मकमुक्तमिति । इदं तु केवलं पठनकर्मत्वाद्गद्यमित्यु-

1 अयं श्लोकः कचडादिषु न वर्तते ढ - लुप्तविभक्तिर्नाम्ना एकार्थान् संहरन्ति संक्षेपात् । 2 ड - तत्पुरुषादिकसंज्ञैः निर्दिष्टः षड्विधः सोऽपि 3 ड - व्यञ्जनत्व 4 ड - वृत्तनिबन्धास्तु 5 भम - चतुर्विधं पदं तच्च 6 न - निबन्धम् 7 भ - छन्दो यथेष्टगुरुलाघवम् 8 न - अर्थापेक्षाक्षरपदं 9 ड - युतं 10 ढ - नियताक्षरम् 11 भ - पदवर्ण ड - पदैः ।

चतुर्भिस्तु भवेद्युक्तं[1] छन्दोवृत्ताभिधानवत्[2] ॥ ४२
षड्विंशतिः स्मृतान्येभिः[3] पादैश्छन्दांसि संख्यया ।
सममर्धसमं चैव तथा विषममेव च ॥ ४३
छन्दो ज्ञेयं समासेन [4]त्रिविधं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता[5] ॥ ४४
छन्दोहीनो न शब्दोऽस्ति न च्छन्दश्शब्दवर्जितम् ।
[6]एवं तूभयसंयोगो नाट्यस्योद्योतकः स्मृतः[7] ॥ ४५
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
[8]मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ४६
सुप्रतिष्ठा भवेत्पञ्च षड्गायत्री भवेदिह[9] ।
[10]सप्ताक्षरा भवेदुष्णिगष्टौ चानुष्टुबिष्यते[11] ॥ ४७
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
[12]एकादशाक्षरा त्रिष्टुब्जगती द्वादशाक्षरा ॥ ४८

---

च्यते । वर्णा गुरुलघुत्वच्छेदः पादसंख्या सामान्यलक्षणमाह प्रमाणेन श्रोत्रेन्द्रियेण नियत आत्मा यत्र श्रव्यमित्यर्थः । इदं तत्पद्यं पादेषु भवति, गद्यमिति निगदनीयत्वेऽपि विशेषसंज्ञया व्यपदेशः ।

---

1 ड - भवेद्वृत्त भ - भवेत्पादैः 2 भ - छन्दोवृत्तसमाश्रयम् न - छन्दोवृत्त्यभिधानवत् 3 ड - स्मृतानीह न - स्मृतान्यपि 4 ड - निबद्धं 5 म - विनिष्पन्नं शब्दमूलं तु तत्स्मृतम् । न शब्दश्छन्दसां हीनो 6 ड - तस्मात्तूभयसंयुक्ते न - उभेतूभयसंयुक्ते म - एवं तूभयसंयोगात् न नाट्यद्योतनं 7 डन - उद्योतके स्मृते 8 म - मध्यमं त्र्यक्षरं प्रोक्तं 9 म - तथैव च 10 म - उष्णिक् सप्ताक्षरकृतात्वष्टाऽनुष्टप् प्रकीर्तिता 11 ड - उच्यते 12 म - त्रष्टुबेकादशा ज्ञेया ।

त्रयोदशातिजगती शाक्करी तु [1]चतुर्दश ।
दशपञ्चातिशक्कर्या[2] अष्टिः स्यात् षोडशाक्षरा ॥ ४९
[3]तथा सप्तदशात्यष्टिः धृतिरष्टादशाक्षरा ।
[4]एकोनविंशातिधृतिः कृतिर्विंशतिरेव च ॥ ५०
[5]प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा[6] ।
[7]विकृतिः स्यात् त्रयोविंशा [8]चतुर्विंशापि संकृतिः ॥ ५१
पञ्चविंशत्यभिकृतिः षड्विंशत्यक्षरोत्कृतिः[9] ।
अतोऽधिकाक्षरं छन्दो[10] मालावृत्तमिति स्मृतम्[11] ॥ ५२
छन्दसां तु [12]तथाह्येते भेदाः प्रस्तारयोगतः ।
असंख्येय[13]प्रमाणानि वृत्तान्याहुरतो बुधाः ॥ ५३

---

अथ तस्य लक्षणं कर्तुं छन्दःस्वरूपं तावदित्याह एवमित्यादि विविध (वर्ण)भूषणैः सालंकारैः पादैश्चतुर्भिरिति संबन्धः षड्विंशकमिति तावत्परिमाणमेकाक्षरात्प्रभृति षड्विंशत्यक्षराणि तदुक्तादीन्युत्कृत्यन्तानि छन्दांसीत्यर्थः । पादचतुष्टये तुल्यलक्षणं समं, अतुल्यलक्षणं विषमं (अर्धसमं) प्रथमतृतीययोर्द्वितीयचतुर्थयोः । संज्ञाभिश्छन्दोभेदा आश्रिताः ।

कथं ते भेदा इत्याह प्रस्तारयोगत इति प्रस्तारे योगो युक्तिः तेन तत्र युक्तिर्वक्ष्यते—

" प्रकीर्य सर्वं गुरु तत्र पूर्वगुरोरधो लं परपूर्य तत्त्वम् ।
स्यात्पूर्वपूर्वं गुरुणेति यावत्सर्वत्र लः प्रस्तरणे तदेव ॥

---

1 ब - च 2 ड - अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्तिता (न - प्रकीर्त्यते) 3 ड - अत्यष्टिः स्यात्सप्तदश 4 द - एकाधिका चातिधृतिः ब - अतिधृत्येकोनविंशा 5 ब - प्रकृतिस्त्वेक 6 म - विंशत्या यथाकृतिः 7 विकृतिश्च त्रयो 8 ड - चतुर्विंशा च 9 ड - षड्विंशत्युत्कृतिर्भवेत् म - षड्विंशा चोत्कृतिर्भवेत् 10 ब - यत्स्यात् ड - यत्तु 11 ड - तदिष्यते 12 च - यथान्येषां ड - छन्दसां च भवेदेषां भेदो नैकविधः पृथक् 13 च - परीमाणा वृत्तसंख्या समाश्रिता- ड - असंख्या परिमाणानि ।

गायत्रीप्रभृ तित्वेषां[1] प्रमाणं संप्रवक्ष्यते[2] ।
प्रयोगजानि सर्वाणि [3]प्रायशो न भवन्ति हि ॥ ५७

[4]वृत्तानि च चतुःषष्टि गायत्र्यां कीर्तितानि तु (६४)
शतं विंशतिरष्टौ च वृत्तान्युष्णिह्यथोच्यते[5] । (१२८)
षट्पञ्चाशच्छते द्वे च वृत्तानामप्यनुष्टुभि[6] । (२५६)
शतानि पञ्च वृत्तानां [7]बृहत्यां द्वादशैव तु ॥ (५१२)
[8]पंक्त्यां सहस्रं वृत्तानां चतुर्विंशतिरेव तु[9] । (१०२४)
[10]त्रैष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाऽष्ट च ॥ (२०४८)
सहस्राण्यथ चत्वारि नवतिश्च षडुत्तरा
जगत्यां [11]समवर्णानां वृत्तानामिह सर्वशः ॥ ५८
(४०९६)

शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः ।
जगत्यामतिपूर्वायां वृत्तानां सर्वशो भवेत्[12] ॥ ५९
(८१९२)

---

एतद्यथा भेदाः । अक्षरस्याष्टौ गायत्रीप्रभृतीनि, तत एवारभ्य प्रयोगार्हतेति सूचयति उक्त्यादीनामश्रवत्वात् । तदाह प्रयोगजानीति [1]लक्ष्यतो स्थितानि, अपि तु वेदवद् दृश्यन्त इति भावः। वृत्तानि च चतुः षष्टिरित्यादिना स्वकण्ठेन संख्यां पठति यावत् ।

---

1 च - प्रभृतिश्चैषां 2 म - संप्रवर्तते ड - संविधीयते 3 ड - प्रायस्तानि 4 ड - वृत्तानां हि चतुष्षष्टिर्गायत्री परिकीर्तिता 5 म - उष्णिक्तथैव च ड - उष्णिगथोच्यते 6 ड - अनुष्टुभः 7 ड - बृहत्या 8 ड - पङ्क्तेः 9 ड - च 10 ड - त्रिष्टुभो द्वि 11 म - समपादानां 12 ड - परिमाणतः ।

---

1 क - वक्ष्यन्तोऽर्थितामपि तु ।

शतानि त्रीण्यशीतिश्च सहस्राण्यपि[1] षोडश।
वृत्तानि चैव चत्वारि [2]शक्कर्याः परिसंख्यया ॥ ६०

(१६३८४)

[3]द्वात्रिंशत्तु सहस्राणि सप्तचैव शतानि च।
अष्टौ षष्टिश्च [4]वृत्तानि ह्याश्रयन्त्यतिशक्करीम् ॥ ६१

(३२७६८)

पञ्चषष्टि सहस्राणि सहस्रार्धं [5]तु संख्यया।
षड्विंशच्चैव वृत्तानि [6]तथाष्ट्यां गदितानि तु ॥ ६२

(६५५३६)

एकत्रिंशत्सहस्राणि वृत्तानां च द्विसप्ततिः।
तथा शतसहस्रं च[7] छन्दस्यत्यष्टिसंज्ञिते ॥ ६३

(१३१०७२)

धृत्यामपि हि[8] पिण्डेन वृत्तान्याकल्पितानि तु[9]।
[10]तज्ज्ञैः शतसहस्रे द्वे [11]शतमेकं तथैव च ॥ ६४

---

षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्ततिः।
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च।

चतुःषष्टिस्तु वृत्तानि ह्युत्कृतावपि संख्यया ॥ इति (६७१०८८६४)

[1]प्रमाणम्। अभिकृत्यन्तानां संख्यां प्रमाणीकृत्याह तिस्रः कोट्य इत्यादिना। तदङ्कं पूर्वेण पिण्डयित्वा सर्वसंख्याज्ञानं क्रमवशात्।

---

1 न - अथ 2 न - शकार्यो 3 ड - द्वात्रिंशश्च 4 म - वृत्तानां संश्रयन्त्यतिशक्करीम् 5 म - च 6 म - तथाष्टौ ब - अष्टौ निगदितानि च 7 म - स्यादत्यष्टौ परिसंख्यया 8 ड - च 9 ड - वृत्तमाकलितंमया 10 द - यथा ड - तथा 11 म - द्विषष्टि च तथैव हि। सहस्राणि विभागेन चत्वारिंशच्च तानि च।

1 क - पुराणाम्।

द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः[1] ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥ ६५

(२६२१४४)

अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च[2] ।
तथा शतसहस्राणि पञ्चवृत्तशतद्वयम् ॥ ६६
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि तु[3] ।

(५२४२८८)

कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥ ६७
चत्वारिंशत्तथाष्टौ च सहस्राणि शतानि च ।
पञ्च षट्सप्ततिश्चैव वृत्तानां परिमाणतः[4] ॥ ६८

(१०४८५७६)

तथा शतसहस्राणां [5]प्रकृतौ विंशतिर्भवेत्[6] ।
सप्त वै गदितान्यत्र नवतिश्चैव संख्यया ॥ ६९
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन[7] वृत्तज्ञैर्गदितानि तु ॥ ७०

(२०९७१५२)

[8]चत्वारिंशत्तथैकं च सहस्राणां शतानि तु ।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥ ७१
शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् ।

(४१९४३०४)

---

1 द - चत्वारिंशत् प्रयोगतः 2 द - तु 3 ड - च 4 म - प्रविभागशः
5 म - सहस्राणि 6 म - कलितानि तु । विंशतिर्नवतिश्चैव सप्तचैव हि संख्यया
7 म - प्रविभागेन 8 म - बुधैः शतसहस्राणि चत्वारिंशत्ततःपरम् । नवतिश्चैव
चत्वारि सहस्राणि शतत्रयम् । चत्वारि चैव वृत्तानि कथितान्याकृतौ बुधैः ॥

[1]ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः ॥ ७२
अष्टाशीति सहस्राणि वृत्तानां षट्छतानि च ।
अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु ॥ ७३
(८३८८६०८)

[2]तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः ।
सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥ ७४
कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै ।
(१६७७७२१६)

[3]तथा शतसहस्राणि पञ्चत्रिंशच्च संख्यया ॥ ७५
तिस्रः कोट्यः सहस्राणि चतुष्पञ्चाशदेव च ।
शतानि चत्वारि तथा द्वात्रिंशत्प्रविभागतः ॥ ७६
वृत्तान्यभिकृतौ चैव छन्दोज्ञैः कथितानि वै ।
(३३५५४४३२)

[4]षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्ततिः ॥ ७७
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च ।
चतुष्षष्टिस्तु वृत्तानि ह्युत्कृतावपि संख्यया ॥ ७८
(६७१०८८६४)

---

1 म - तथाशतसहस्राणामशीतिस्त्रिकसंयुता । अष्टाशीति सहस्राणि षडष्टौ च शतानि च । वृत्तानि विकृतौ छन्दस्युद्दिष्टानीह संख्यया ॥ 2 न - कोटिष्षडधिका नित्यं सप्तसप्ताधिका पुनः । सप्त चैव सहस्राणि वृत्तानां च शतद्वयम् । षोडशोत्तरमाख्यातं संकृत्यां परिमाणतः 3 ब - कोटित्रयं चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् । पञ्चाशद्भिः सहस्रैस्तु चतुर्भिरधिकैस्तथा । चतुष्टयं शतानां च द्वात्रिंशद्भिः समन्वितम् 4 न - षट्कोट्यस्तथोत्कृत्यां लक्षाणामेकसप्ततिः । चतुष्षष्टि शतान्यष्टौ सहस्राण्यष्ट एव तु ।

[1]उक्ताद्युत्कृतिजातानि वृत्तसंख्याविचक्षणैः ।
एतेन च विकल्पेन वृत्तान्येतानि निर्दिशेत् ॥ ७९
सर्वेषां छन्दसामेवं [2]वृत्तानि कथितानि वै ।
[3]तिस्रः कोट्यो दश तथा सहस्राणां शतानि तु ॥ ८०
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ।
सप्तभिः सहितान्येव सप्त चैव शतानि च ॥ ८१
(१३४२१७७२६)
षड्विंशतिरिहान्यानि व्याख्यातानि समासतः ।
समानि गणनायुक्तिमाश्रित्य कथितानि वै ॥ ८२
[4]सर्वेषां छन्दसामेवं त्रिकैर्वृत्तं प्रयोजयेत् ।
ज्ञेया ह्यष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥ ८३
त्रीण्यक्षराणि विज्ञेयास्त्रिकोंऽशः परिकल्पितः ।
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥ ८४
गुरुपूर्वो भकारः स्यान्मकारस्य गुरुत्रयम्[5] ।
जकारो गुरुमध्यस्तु[6] सकारोऽन्तगुरुस्तथा ॥ ८५

1 ड - सर्वेषां छन्दसां पिण्डं कोट्योऽत्र त्रयोदश । शतानि सप्तसप्तैव सहस्राणि दशैव च । तथा शतसहस्राणां द्विचत्वारिंशदत्र हि । षड्विंशतिश्च वृत्तानामित्थं चानन्तमुच्यते (न-मिदं नाट्यं तदुच्यते) 2 ड - वृत्तांशं कथितं मया ब - वृत्तान्तं कथितं मया 3 म - कोट्यस्त्रयोदश तथा चत्वारिंशद्वयं तथा । ज्ञेयं शतसहस्राणां ततो दश च सप्त च । सहस्राणि ततः सप्तशतानि प्रविभागशः । षड्विंशति च वृत्तानि वृत्तसंख्याविचक्षणैः 4 न -एतेषां तु पुनर्ज्ञेयं त्रिकैर्वृत्तप्रवर्तनम् । एकं वा विंशतिं वापि सहस्रं कोटिरेव वा । सर्वेषां छन्दसामेवं वृत्तानां वा द्विजोत्तमाः । ज्ञेयाश्चाष्टौ त्रिकास्तत्र स्वसंज्ञाभिः पृथक्पृथक् 5 म - मकारो गुरुकत्रयम् ड - मकारस्तु गुरुत्रिकम् न - मकारः स्याद्गुरुत्रयम् 6 ड - मध्यस्थः ।

[1]लघुमध्यस्तु रेफः स्यात्तकारोऽन्तलघुस्तथा[2] ।
लघुपूर्वो यकारस्तु नकारस्तु[3] ल त्रयम् ॥ ८६
एते ह्यष्टौ त्रिका [4]नाम्ना विज्ञेया ब्रह्मसंभवाः ।
लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य[5] च ॥ ८७
[6]एभ्यो विनिर्गताश्चान्या जातयोऽथ समादयः ।
अस्वराः सस्वराश्चापि[7] प्रोच्यन्ते वृत्तलक्षणैः[8] ॥ ८८
गुर्वेकं [9]ग् इति विज्ञेयं तथा लघु ल् इति स्मृतम् ।
नियतः पदविच्छेदो यतिरित्यभिसंज्ञिता[10] ॥ ८९
गुरु दीर्घं प्लुतं चैव संयोगपरमेव च ।
सानुस्वारविसर्गं च तथान्त्यं[11] च लघु क्वचित् ॥ ९०
[ [12]गायत्री प्रभृति त्वेषां प्रमाणं संप्रवर्तते ।
प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥ ९१
[13]गायत्र्यां द्वौ त्रिकौ ज्ञेयावुष्णिगेकाक्षराधिका[14] ।
अनुष्टुब्द्व्यधिका ज्ञेया[15] [16]बृहत्यां तु त्रिकास्त्रयः ॥ ९२
एकाधिकाक्षरा पङ्क्तिस्त्रिष्टुप्च द्व्यधिकाक्षरा ॥
चतुस्त्रिका तु जगती सैकातिजगती ततः[17] ॥ ९३
शक्वरी द्व्यधिका [18]पञ्चत्रिका ज्ञेयातिशक्वरी ।

---

1 न - लघुमध्यस्थितो रेफः 2 ड - परः 3 न - नकारश्च 4 न - ज्ञेया बोद्धव्या ड - प्राज्ञैर्विज्ञेया 5 द - अपेक्ष्य 6 इदं श्लोकार्धं ब मातृकायामेव वर्तते 7 ड - चैव 8 द - लक्षणम् ड - लक्षणे 9 ब - गिति 10 ड - अभिधीयते 11 म - तथान्ते 12 अयं श्लोको म संज्ञकेऽत्रैव निवेशितः 13 म - गायत्री. सार्धं श्लोकपञ्चकं कादिचान्तेषु न दृश्यते 14 ब - एकाधिकाक्षरा 15 ब - चैव 16 ड - बृहती तु न - बृहती च 17 ड - पुनः 18 म - तस्यास्त्रिकाः पञ्चातिशाकरी ।

एकाधिका तथाष्टिश्च द्व्यधिकात्याष्टिरुच्यते ॥ ९४
[1]षट्त्रिका धृतिरुद्दिष्टा ह्यतिपूर्वाधिकाक्षरा[2] ।
कृतिश्च द्व्यधिका प्रोक्ता [3]प्रकृत्यां सप्त वै त्रिकाः॥९५
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ।
[4]संकृत्यां तु त्रिका ह्यष्टौ सैका त्वभिकृतिर्भवेत्[5] ॥ ९६
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणमानतः[6] ।]
[[7]गुर्वेकं ग इति प्रोक्तं गुरुणी गाविति स्मृतौ ॥ ९७
लध्वेकं ल इति ज्ञेयं लघुनी लाविति स्मृतौ ।
द्व्यक्षरादधिकौ पादावन्यौ हीनाक्षरावपि ॥ ९८
स्वराडिति समाख्याता विराडिति हि सूरिभिः ।
पादो यस्या ऋचश्चैव भवेदेकाधिकाक्षरः । ९९
समास्त्वन्ये त्रयः पादाः सा भुरुक् संप्रकीर्तिता ।
एकाक्षरोनः पादश्चेदेको यस्या ऋचो भवेत् ॥ १००
समाः पादास्त्रयश्चान्ये सा निवृत्संप्रकीर्तिता।]
[[8]सम्पदाद्यधुना चैषां छन्दसां सम्यगुच्यते] ॥ १०१
सम्पद्विरामपादश्च[9] देवतास्थनमक्षरम् ।
[10]वर्णः स्वरा विधिर्वृत्तमिति छन्दोगतो विधिः ॥ १०२

---

1 ब - षट्त्रिकास्तु धृतिः प्रोक्ता 2 न - सैका चातिधृतिः स्मृता 3 म - प्रकृतिः 4 ब - अष्टौ त्रिकाः संकृतिःस्यात् म - संकृतिस्तु त्रिका ह्यष्टौ 5 न - सैका चातिकृतिर्मता 6 म - विज्ञेया वृत्तदर्शने 7 एते चत्वारः श्लोका भमयोरेव दृश्यन्ते 8 इदं श्लोकार्धं दसंज्ञित एव वर्तते 9 न - पादश्च 10 ढ - वर्णस्वराधिकैः ड - वर्णाः ।

[1]नैवातिरिक्तं हीनं वा यत्र संपद्यतेऽक्षरम्[2] ।
[3]विधाने छन्दसामेषा संपदित्यभिसंज्ञिता[4] ॥ १०३
यत्रार्थस्य समाप्तिः [5]स्यात्स विराम इति स्मृतः ।

---

एकादिकक्रमवशाद् द्विगुणादिपिण्ड्या-
च्छन्दः प्रमाणकलितानथ पिण्डयेत्तान् ।
एकं क्षिपेत्तदुपरीति समस्तवृत्त-
संख्याप्रकाशनविधौ लघुरभ्युपायः ॥

यथा त्र्यक्षरे तत्पिण्डयित्वा एकाक्षेपादेकसंख्यावत् । षड्विंशत्यक्षरे—"द्व्यंश उत्तक्रमेणेह द्वैगुण्यं यावदुत्कृतेः" ॥ इति । एकाक्षरे द्वौ, द्व्यक्षरे चत्वारः, त्र्यक्षरेऽष्टौ, चतुरक्षरे षोडशेत्यादिसंक्षेपः । अनेनैवोपायेन विचार्य ग्रन्थे पाठो निश्चेयः । सर्वेषां वृत्तानामित्यादावर्थः समासेन जयदेवोऽभ्यधात्—"सर्वादिमध्यान्तग्लौ त्रिकौ म्नौ भ्यौ ज्रौ स्तौ" इति (अ. १-२) त्रिकैरुपलक्षितेऽपि वृत्ते त्रिकसंख्यानतया छन्दो न पूर्यते, यथोष्णिक् अत्रैकमधिकमक्षरमधिकत्वेनोक्तं, अनुष्टुभि द्वे, तत्र त्रिकबीजानि गुरुलघुरूपाण्येव कर्तव्यानि। तथा चैकं गुरुलघु वा द्वे गुरुणी लघुनी लघुगुरुणी गुरु लघुनी वा तदाह यदेकमधिकमिति । ग्लावित्यादिश्लोकेन व्याचष्टे नैवातिरिक्तमिति । सम्पदिति स्वराद् विराद् भुरिक् निवृत् श्रुतावेव संभवो न काव्य इति तात्पर्यम् । *

---

1 भ - हीनं नैवातिरिक्तं च यत्तु स्यात्पादयोगतः । विधाने छन्दसामस्मिन् सा हि संपदुदाहृता । 2 ड - क्रमः 3 ड - विविधा 4 न - अभिधीयते 5 भ - तु

---

* स्वराडादयः काव्येष्वपि दृश्यन्त इति जनाश्रयीकारः । यथा विराड्—
शूरः सुमुखः सदयः शान्तो धीरस्त्यागी गुणवान् भक्तः ।
कुलजोऽस्माकं नित्यं मित्रं भवतु श्लाघ्यम् ॥
निवृत्—अम्भोदानामसितानां श्रुत्वा शब्दं सन्ततबर्हः ।
अम्भोभारान्मन्दगतीनामुद्ग्रीवोऽयं रौति मयूरः ॥
स्वराट्—अथ तत्र शुचौ लतागृहे कुसुमोद्गारिणि तौ निषीदतुः ।
मृदुभिर्मृदुमारुतेरितैरुपगूढाविव बालपल्लवैः ॥
भुरिक्—मनोज्ञमपि सिन्दुवारतः कुन्दकुसुमार्घ्यं च षट्पदः ।
न सर्पति तुषारशङ्कितश्चन्द्रालोकविशेषशीतलम् ॥

[1]पादश्च पद्यतेर्धातोश्चतुर्भागः प्रकीर्तितः[2] ॥ १०४
[3]अग्न्यादि दैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
शरीराश्रयसंभूतं[4] [5]दिगाश्रयमथापि वा ॥ १०५
[6][शारीरं मन्त्रसंभूतं छन्दोगायत्रसंज्ञितम् ।
क्रुष्टे मध्यन्दिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥ १०६
तृतीयसवनं चापि शीर्षण्यं जागतं हि यत् ।]
[7]ह्रस्वं दीर्घं प्लुतं चैव त्रिविधं चाक्षरं[8] स्मृतम् ॥ १०७

---

एतन्निरूपणं तु उपयुज्यते यत्र वेदवाक्यसदृश वाक्यं निर्णीयते, यथा अभिज्ञानशाकुन्तले । अर्थस्यावान्तररूपस्य समाप्तिलक्षणतो यतिः "मीलति सति राज्ञो" यथा "आयान्त्या तुल्यकालं" *इति, न तु "जम्भारातीभकुम्भोद्भवं" इति उच्छब्दोऽर्थसमाप्त्यभावात् । चतुर्भाग इति पादान्ते छेदः कर्तव्यः, न तु "ताम्बूलवल्लीपरिणद्धपूगास्वेला" † इति । प्रयोगी प्रतिपादमङ्कुरीकृत्य पठन्मध्ये विश्राम्यति । विश्रान्तौ चात्र वृत्तभङ्गोऽर्थभङ्गोऽभिनेयोऽत्र श्राव्यत्वाद्भट्टशङ्करादिभिरुपगतमेतत् "क्वचिदुपान्त्यो वा" इति । अधिष्ठात्री देवता वह्न्यादयः । शरीराश्रयेत्यादि । यथोक्तं कात्यायनेन—

---

1 च - पादस्य 2 भ - गत्यर्थात्संप्रकीर्तितः ड - इति स्मृतः 3 भ - देवाह्यग्न्यादयः प्रोक्ताः 4 भ - भूतं च 5 भ - ऋक्सामाश्रयमेव च ड - जिह्वाश्रय द - दिशाश्रय 6 सार्धः श्लोको जादिभान्तेष्वेव दृश्यते 7 भ - प्लुतं दीर्घं च ड - ह्रस्वदीर्घप्लुताश्चैव 8 म - ह्यक्षरम् ।

---

* गायत्रीप्रभृति जगतीपर्यन्तानां दैवतानि— अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणौ शक्रो विश्वेदेवाः ।

* जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥

† ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ (रघु-६-६४)

*श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यमश्च त्रिधा स्वरः[1] ॥ १०८
ध्रुवाविधाने चैवास्य[2] संप्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथा चार्थकृतोऽपि च[3] ॥ १०९
[वृत्तमर्धसमं चैव समं विषममेव च[4] ।
छन्दसो यस्य पादे[5] स्याद्धीनं वाधिकमेव वा ॥ ११०
[6]अक्षरं तन्निवृत्प्रोक्तं भुरुक्चेति द्विजातिभिः[7] ।
अक्षराभ्यां [8]यदा द्वाभ्यामधिकं हीनमेव वा ॥ १११
तच्छन्दो [9]नामतो ज्ञेयं [10]स्वराडथ विराडपि ।]
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रिकाः ॥ ११२

---

वीरस्य भुजदण्डानां वर्णने स्रग्धरा भवेत् ।
नायिकावर्णने कार्यं वसन्ततिलकादिकम् ॥
शार्दूललीला प्राच्येषु मन्दाक्रान्ता च दक्षिणे ॥ इत्यादि ।

प्लुतस्याप्यत्र प्रयोगो भवत्येव । यथा—"यतोऽपि मानेन स एष मूढो द्रोणारिरेयातिपद्मातिलग्नो (?)" स तु पाठो दीर्घवत्पठितव्यः प्रयोक्त्रा त्रिमात्र एव । श्वेतादय इति प्रातिशाख्यादौ छन्दांसि (छन्दसि ?) विविधवर्ण[1] कृतं तदनुपयोगान्नास्माभिर्लिखितम् । भगवते कृत इति केषांचिद्दोदकतोदकादीनां गीयमानतया शोभातिशयो भवति श्लोकः, स्रग्धरादीनां तु

---

1 ड - मध्यश्च त्रिविधः स्वरः ड - स्मृतः भ - द्विविधः स्वर उच्यते 2 भ - चैतेषां 3 म - कालकृतश्चापि तथा चैवार्थतो भवेत् 4 ड - विषमं सममेव वा 5 म - पादः 6 ड - वृत्तं निवृदिति प्रोक्तं 7 भ - द्विजोत्तमाः 8 ड - सदा 9 न - नाम तत् 10 ड - स्वराडिति ।

1 क - वर्णनम् ।

* गायत्री प्रभृतिजगतीपर्यन्तानां छन्दसां—सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः ।

दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च॥ ११३
त्रिष्टुप्च जगती चैव [1]दिव्योऽयं प्रथमो गणः।
[2]तथातिजगती चैव शक्वरी ह्यतिशक्वरी॥ ११४
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः।
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा॥ ११५
संकृत्यभिकृतीचैव ह्युत्कृतिर्दिव्यमानुषः।
[3]एतेषां छन्दसां भूयः प्रस्तारविधिसंश्रयम्॥ ११६
लक्षणं संप्रवक्ष्यामि नष्टमुद्दिष्टमेव च[4]।
प्रस्तारोऽक्षरनिर्दिष्टः मात्रोक्तश्च तथैव हि[5]॥ ११७

---

पाठेन। इति शब्देन प्रकारार्थेन व्याचष्टे दिव्य इति। प्रथम इति स्तोत्रशास्त्रेषु सप्तानामेव छन्दसां बाहुल्येन दर्शनात्। देवस्तुत्यादौ देवेषु वक्तृव्यं गण इत्यर्थः। गण इति द्वितीयो दिव्यनिवृत्तौ गण इत्यर्थः तेन मानुषेषु वक्तृव्यं प्रायेण। तृतीयस्तु दिव्यमानुषेषु च रामादिषु नरपतिषु च।

प्रस्तारस्तत्र संख्यादि सर्वमिति संश्रयशब्देनाह, तद्गुणसंविज्ञानाच्च प्रस्तारोऽप्युच्यते। प्रस्तरणं विताननं। लक्षणमङ्कसंख्येत्यर्थः। गतं नष्टमिति स्वरूपेणैव न ज्ञातं, उद्दिष्टं तु स्वरूपेण ज्ञातं न संख्यया। तज्ज्ञानोपायेन नष्टादयः [1]शुद्धाः (सिद्धाः?)।

---

1 भ - दिव्यस्तु 2 भ - मानुषश्चातिजगती शकरी चाति 3 ड - एवं तु छन्दसामेषां 4 ड नष्टोद्दिष्टं तथैव च 5 ब - समानोक्तं तथैव च न - समात्रोक्तस्तथैव च द - समाः प्रोक्तास्तथैव च।

---

1 ख - शब्दाः।

द्विकौ ग्लाविति वर्णोक्तौ मिश्रौ चेत्यपि मात्रिकौ[1] ।
[2]गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ॥ ११८
अग्रतस्तु समादेया गुरवः पृष्ठतस्तथा ।
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ॥ ११९
वृत्तं तु सर्वच्छन्दस्सु[3] प्रस्तारविधिरेव तु ।
गुर्वधस्ताल्लघुं न्यस्य ततो द्विद्वि यथोदितम् ॥ १२०
न्यसेत्प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्याविनिर्दिष्टो गणो मात्राविकल्पितः ॥ १२१
मिश्रौ ग्लाविति विज्ञेयौ पृथग्लक्ष्यविभागतः[4] ।
[5]मात्रागणो गुरुश्चैव [6]लघुनी चैव लक्षितः[7] ॥ १२२

---

तत्र वर्णगतो मात्रागतश्चेति प्रस्तारो द्विधा तमुदाहरति । द्विकौ ग्लाविति वर्णसंख्यादि नियमेन यौ गुरुलघू । द्विकै संख्यापरिमाणौ तौ मात्रिकौ मात्रागणनेषूक्तौ । अन्येनाधिकृतत्वादेकेन भेदेन मिश्रौ भवतः ।

अत्र प्रस्तारेऽप्युपायमाह गुर्वधस्तादिति । आद्यस्यैव गुरोरधो लघुः सर्वो न्यसनीयः । यत्र द्वौ भागौ मिश्रौ विषमसंख्यायां तदा द्विरिति भूयो भूयो मात्राप्रस्तारो निरूप्यते । मात्रापरिकल्पतौ यस्त्रिमात्रचतुर्मात्रादिः समूहो गणमात्रसंख्याया लघ्वक्षरसंख्यया तत्र प्रथमं प्रस्तार इत्याह पृथग्लक्षणीयो ऽपि भागोऽत्र संख्यायास्तत्र गुरुः सर्वतो न्यसनीयः । यत्र तु द्वौ भागौ मिश्रौ, विषमसंख्यायां तत्राद्यो लघुरन्यो गुरुः शेषं वर्णप्रस्तारेण तुल्यम् । केवलमात्रासंख्येति वचनाद्गुणनान्यासे पूर्वत्र मात्रा देया । यत्र वर्णप्रस्तारः विषममात्राप्रस्तारोऽप्युदाहृत एव । द्वितीयस्तु तदाह गुरुरिति जातावेकवचनं गुरू इत्यर्थः । लघुनी चकाराद्गुरू तथाशब्दादन्यद्भेदत्रयं, चतुर्मात्रा आर्याणां

---

1 ब - मातृका 2 द्वौ श्लोकौ चभयोर्न दृश्येते 3 ब - छन्दस्य 4 भ - विभागशः 5 भ - मात्रे द्वे गुरु विज्ञेयं लघ्वेका तु प्रकीर्तिता 6 प - लघुनीति च 7 प - विलक्षितैः ।

आर्याणां [1]तु चतुर्मात्राप्रस्तारः परिकल्पितः ।
[2]गीतकप्रभृतीनां तु पञ्चमात्रस्तथेष्यते[3] ॥ १२२
वैतालीयं पुरस्कृत्य षण्मात्राद्यास्तथैव च ।
[4]त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः[5] ॥ १२३
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
[6]अन्त्याद् द्विगुणिताद्रूपाद् [7]द्विद्विरेकं गुरोर्हरेत्[8] ॥ १२४
द्विगुणं च लघोः कृत्वा संख्यां पिण्डेन निर्दिशेत्[9] ।
आद्यं सर्वगुरु ज्ञेयं वृत्तं तु समसंज्ञितम्[10] ॥ १२५
[11]कोशं तु सर्वलघ्वन्तं मिश्रैः शेषाणि सर्वतः ।
वृत्तानां तु समानानां संख्यां संयोज्य तावतीम् ॥
राश्यूनामर्धविषमां समासादभिनिर्दिशेत्[12] ।

---

प्रस्तारे गणभेदः पञ्चदश इत्यर्थः, पञ्चमात्रोऽष्टधा, एवं षष्ठोऽत्र प्रस्तार्यातीत इति वर्णवृत्तेष्वेव च कृत इत्यर्थः । अन्यत्र तु मात्राकृतो गणविभागः तदपेक्षया गुरुलघुव्यवस्थानात्स्वातन्त्र्येण ।

तत्रोद्दिष्टमाह द्विगुणितादिति वर्णवृत्तेष्वेव चेदं सर्वं मन्तव्यम् । भेदं पश्यैकमेकमङ्कं द्विगुणितं च दत्वा द्विद्विरिति भूयो द्विगुणितादपि द्विगुणितं कृत्वान्त्यं परिसमाप्य गुरु संबन्धिनो ऽङ्कान् हरेत् पुंसथेत् (प्रस्तरेत् ?)। लघोः संबन्धिनोऽङ्कान् पिण्डीकृत्य तेन पिण्डेनातिक्रान्तेनैतावदयं भेद इति संख्यां निर्दिशेत्, यथा चतुरक्षरस्येदृशं क्रियाभेदं यच्च लघ्वङ्कगणनातिक्रान्तौ ।

---

1 न - स चतुर्मात्रः प्रस्तारे म - स चतुर्मात्रः प्रस्तारे गण इष्यते 2 भ - गीतिका 3 ड - पञ्चमात्रो गणः स्मृतः 4 न त्र्यक्षरस्तु 5 न - आश्रयाः 6 भ - आद्यात् 7 भ - ऊर्ध्वं 8 ड - भवेत् 9 ड - योजयेत् 10 ड - संश्रितम् 11 ड - कोशे भ - लघ्वन्तमपि चैवं तु कोशस्यस्य हि संख्यया 12 भ - समासादपि निर्दिशेत् ड - समासादिति निर्दिशेत् ।

[1]समानां विषमाणां च संगुणय्य तथा स्फुटम्[2]॥ १२७
राश्यूनमभिजानीया[3]द्विषमाणां समासतः।
एकादिकां तथा संख्यां छन्दसो विनिवेश्य तु[4]॥१२८
यावत्पूर्वं तु पूर्वेण पूरयेदुत्तरं गणम्[5]।
एव [6]कृत्वा तु सर्वेषां परेषां पूर्वपूरणम्[7]॥ १२९
[8]नैधनादेकमेकं तु प्रातिलोम्यक्रियात्मकम्[9]।
सर्वेषां छन्दसां न्यस्य[10] लघ्वक्षरविनिश्चयम्॥ १३०
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा[11]।

---

अथैकादिलघुज्ञानार्थं पीठं रचयति आद्यं सर्वगुर्वित्यादि। कोश इत्याद्यन्तयोर्मध्यगो भेदगणः। सोऽस्य लघोः संख्यया निश्चयं कुर्यात्। तद्यथा चतुरक्षरौ प्रथमान्तौ सर्वगुरुः सर्वलघुश्च, एकद्वित्रिलघवस्तु चतुः षट्चतुः प्रकाराः संक्षेपत इति एतदङ्कव्यामिश्रणेन संख्या लभ्यते षोडशभेदाश्चतुरश्चतुरश्चेति।

संख्यास्थान उपायान्तरमाह एकादिकामिति। छन्दोऽक्षरोपरि एकद्वित्रिचत्वारीत्यदीनि निक्षिपेत्। तत्र पूर्वेणोत्तरस्य पूर्वेण मिश्रणं कुर्यात् यावत्पर्यन्तं गणपिण्डस्तां चैकादिकामेकेन मिश्रितं कुर्यादित्येवं समवृत्तानां संख्या। लघूनामित्थं षोडशाभिर्गुणयेत्। ततो गुणराशेः षोडशसंख्यामवपातयेत्। तेन चतुरक्षरे विंशत्यधिकं शतमर्धसमवृत्तानां तामपि संख्यां गुणयित्वा गुणराशिं पातयेत्। तेन च सहस्राणीति शतान्यशीतिश्चेति चतुरक्षरे विषमवृत्तानि।

---

1 न - समार्धं भ - तां चार्धविषमाणां तु 2 न - संख्यां कृत्वा तु तावतीम् द - संख्यां संयोज्य तावतीम् 3 न - अभिजानीत द - अभिजानीते 4 द - च 5 द - तावतोऽन्तरम् 6 ड - कुर्यात्तु सर्वेषां 7 द - पूर्वपूर्वस्यपूरणम् 8 द - क्रमान्नैधनं 9 भ - प्रतिलोम क्रियान्वितम् ड - प्रतिलोमं विसर्जयेत् (न - विवर्जयेत्) 10 ड - वक्ष्ये न - एवं 11 द - संख्या चाङ्कं समासतः भ - व्याससंक्षेपतस्तथा।

[1]वृत्तार्धपरिमाणं तु छित्वार्धेन यथाक्रमम्॥ १३१
न्यसेल्लघु तथा सैकमक्षरं गुरु चाप्यथ[2]।
एवं विन्यस्य वृत्तानां नष्टोद्दिष्टविभागतः॥ १३२
[3]लघ्वादीनि गुरूण्यस्मिन्नक्षराणि निवेशयेत्।
[[4]इति छन्दांसि यानीह मयोक्तानि द्विजोत्तमाः। १३३
वृत्तान्येतेषु[5] नाट्येऽस्मिन् प्रयोज्यानि निबोधत॥]

इति भारतीये नाट्यशास्त्रे वाचिकाभिनये
छन्दोविधानं नाम चतुर्दशोऽध्यायः[6]॥

---

अथ नष्टमाह वृत्तार्धपरिमाणं त्विति संख्यामर्धेन छिन्द्यात् यत्र विषमाङ्कं न पूर्यते तत्र पूरणार्थमेकमधिकं कुर्यात् । तदाह यथाक्रममिति। तत्र गुरुः। सैककरणात्[1]प्रयत्नगौरवाल्लघुरन्यथा च्छेदनात्। एवं पुनः पुनर्यावदक्षराणि पूर्णानि यथावच्चतुरक्षरे पञ्चमो भेदः कीदृगिति—पूर्वं पञ्चाङ्कस्य सैकच्छेदात् गुरु, पुनरपि त्र्यङ्कस्य सैकच्छेदात् गुरु, द्वयोश्च समच्छेदाल्लघु एकस्य सैकच्छेदाद्गुरु, एतेनेदृशः पञ्चमो भेदः।

एतदुपसंहरन्नध्यायान्तरमासूत्रयति एवमिति। व्याकृतेन विभागेन लघुप्रधानानि वा लक्ष्ये निवेशयेत् कविरुपबध्नीयादिति शिवम्॥

पार्वतीवदनाम्भोजभृङ्गनेत्रत्रयीभुवः।
दासोऽभिनवगुप्ताख्यश्छन्दोध्यायमपप्रथत्॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायामभिनवभारत्यां नाट्यवेदविवृतौ[3] छन्दोऽध्यायश्चतुर्दशः
समाप्तिमगमत्।

---

1 भ - वृत्ताख्या द - वृत्ताक्षरनिर्माणं ड - वृत्ताङ्क 2 ड - छित्वार्धेन गुरुं न्यसेत् 3 ड - गुरुलघ्वक्षरानिह सर्वं छन्दस्सु दर्शयेत् (न - प्राग्वत्संख्यां विनिर्दिशेत्) 4 ब - छन्दांस्येतान्यथोक्तानि मयैवं तु द्विजोत्तमाः 5 न - एतानि 6 नादिषान्तेषु पञ्चदशोऽध्यायः द - श्लोकसंख्या आदितः २३७२॥

1 ख - करणात् 2 ख- छेदात् 3 ख - वृत्तौ।

श्री

# नाट्यशास्त्रम्

## अथ पञ्चदशोऽध्यायः†

[1]छन्दांस्येवं हि यानीह मयोक्तानि द्विजोत्तमाः ।
वृत्तानि तेषु[2] नाट्येऽस्मिन्प्रयोज्यानि निबोधत ॥ १
आद्ये पुनरन्त्ये द्वे द्वे[3] गुरुणी चेत् ।
[4]सा स्यात्तनुमध्या गायत्रसमुत्था[5] ॥ २

समस्तवृत्तानि विना न येन पटूद्भवश्रोत्ररसायनस्य (?) ।
छन्दांसि यस्मात्प्रभवन्ति वन्दे तं वाङ्मयं रूपमिहाष्टमूर्तेः ॥

यदुक्तमक्षराणि निवेशयेदिति (१४-१३३) तत्र अव्यताकृतं प्रविभागमाख्यातुमुपचक्रमे छन्दांस्येवमिति । एषां छन्दसां नाट्यप्रयोगयोग्यानि वृत्तानि निबोधतेति संबन्धः । गुरुलघुनियमेन अव्यता वर्तते येषु तानि वृत्तानि श्राव्यार्थत्वात्, अधिकरणे क्तः । गायत्रीत आरभ्य प्रयोगार्हतेति पूर्वाध्याये निरूपितत्वात् तदुपक्रममेवाह आद्ये पुनरिति, †मध्ये तु लघुन्यर्थात् । गायत्र्यैव गायत्रम् । तत्रेहाध्याये भरतमुनिकृतमिति त्रिकैर्मकारादिभिः कैश्चित्कं-

1 अयं श्लोको जादिवान्तेष्वादर्शेषु पूर्वाध्यायान्त्ये वर्तते । कादि चान्तेषु पाठस्तु—"इति छन्दांसि यानीह मयोक्तानि द्विजोत्तमाः" इत्यध्यायादौ दृश्यते । भमयोरेव व्याख्यातृपाठो विद्यते । 2 न - एतानि भ - एतेषु 3 भ - पादे 4 भ - वृत्तं 5 प - मध्ये लघुनी चेत् वृत्तं तनुमध्या ॥

† जादिवान्तेष्वादर्शेषु षोडशोऽध्यायः । अस्मिन्नध्याये वृत्तलक्षणं कासुचिन्मातृकासु मकारादित्रिकैरेवोक्तं, अन्यासु गुरुलघुनियमेन । पाठद्वयस्यापि पाठान्तरभूयिष्ठत्वात् केवलं सौकर्यायोभयपाठोऽपि मूलरूपेणैव मुद्रितः । पिङ्गलात्पूर्वं छन्दोलक्षणं गुरुलघुसंख्यानेनैव व्यवहृतमिति द्योत्यते, न तु त्रिकैरिति । अपि चास्मिन्नध्याये क्वचित् वृत्तजात्यैव लक्षणमुक्तं, क्वचिच्चानुष्टुभा । अयं विशेषो ध्रुवाध्यायेऽपि दृश्यते ।

यथा—संत्यक्तविभूषा भ्रष्टाञ्जननेत्रा।
हस्तार्पितगण्डा[1] किं त्वं तनुमध्या[2]॥ ३

लघुगण आदौ[3] भवति चतुष्कः।
गुरुयुगमन्त्ये [4]मकरकशीर्षा॥ ४

यथा—[5]स्वयमुपयान्तं भजसि न कान्तं।
भयकरि किं त्वं मकरकशीर्षा। ५

एकमात्रं षट्के स्याद् द्वितीयं पादे।
ख्यातरूपा वृत्ते मालिनी सा नाम्ना॥ ६

[षडक्षरकृते पादे लघु यत्र द्वितीयकम्।
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा॥]
स्नानगन्धाधिक्यैर्वस्त्र[6]भूषायोगैः।
व्यक्तमेवासौ[7] त्वं मालिनी प्रख्याता॥ ८

[8]द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम्।
शेषाणि च गुरूणि स्युर्मालती नाम सा यथा॥ ९
शोभते बद्धया षट्पदाविद्धया[9]।
मालतीमालया मानिनी[10] लीलया॥ १०

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु।

---

चिह्लक्षणं स्वीकृतमिति द्विविधः पुस्तकपाठो दृश्यते मध्ये च चिन्तनाय पुस्तकेषूभयमपि पठ्यत इति । एतन्नाम्ना प्रसिद्धा, ख्यातरूपा श्लाघनीयेत्यर्थः ।

---

1 द - वक्त्रा 2 द - तनुमध्ये 3 न - आद्यो 4 प - मधुरकशीर्षा 5 भ - कमलनिभास्ये परिजनमध्ये । वरतनु किं त्वं मकरकशीर्षा॥ 6 न - व्यक्तभूषायोग्यैः 7 ढ - एवैषां ड - एवैषा प - एष्वेषा 8 - मालतीलक्षणोदाहरणे नवभस्वेव विद्येते। 9 ब - आबद्धया 10 ब - मालिनी ।

यस्याः सप्ताक्षरे पादे ज्ञेया सा तूद्धता यथा ॥ ११

[सौत्रिकौ यदिपादे अक्षरश्च गकारः ।
उष्णिगुत्थितपादा उद्धता खलु नाम्ना[1]] ॥ १२

दन्तकुन्तकृतास्त्रं[2] व्याकुलालक शोभम्[3] ।
शंसतीव तवास्यं [4]निर्दयं रतयुद्धम् ॥ १३

आदौ द्वे निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया नाम्ना भ्रमरमालिका ॥ १४

[पादे यदि निविष्टौ सम्यग्विरचितौ त्सौ ।
अन्त्ये यदिगकारः [5]सा तु भ्रमरमाला ॥] १५

यथा—नानाकुसुमचित्रे प्राप्ते सुरभिमासे[6] ।
[7]एषा भ्रमति मत्ता कान्ते[8] भ्रमरमाला ॥ १६

आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलेखेति सा यथा ॥ १७

[जातु यस्य गौ च पादे संस्थितौ समस्तरूपौ[9] ।
तामनुष्टुभाश्रयस्थां [10]वावदन्ति सिंहलेखाम्[11] ॥]

यत्त्वया [12]ह्यनेकभावैश्चेष्टितं रहः[13] सुगात्रि ।
तन्मनो मम प्रविष्टं[14] वृत्तमत्र सिंहलेखम्[15] ॥ १९

---

त्वया यन्मदीयं मनःप्रविष्टं व्याप्तमाक्रान्तं तत्सिंहवन्नखविलेखनं 'त्व ताहशं वृत्तं तद्यथाक्रान्तं जातमिति यावत् ।

---

1 न - सा स्यात् 2 ड - घातकृताङ्कं द - नखाग्रं 3 द - केशसंलुलिताभ्रम् । शंसते तव वक्त्रं युद्धमुद्धतवेषम् । 4 न - निर्भरं 5 न - स्यात्सा 6 भ - काले मदनभोग्ये । 7 ड - पुष्पे मत्ता 8 भ - कुञ्जेषु मधुमत्ता रौति भ्रमरमाला 9 ड - समौ कृतौ चेत् 10 ड - ज्ञापयन्ति 11 न - सिंहलीलम् 12 प - हि नैक 13 - चेष्टितौ 41 प - प्रदिष्टं 15 च - सिंहलीलम् ।

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च ।
गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् ॥ २०
[यदा तु जात्परौ रलौ गकार एव च स्थितः ।
अनुष्टुबुद्भवं तदा [1]वदन्ति मत्तचेष्टितम् ॥] २१
यथा-[2]चरावघूर्णितेक्षणं विलम्बिताकुलालकम्[3] ।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥ २२
अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन्सा नाम्ना [4]विद्युन्मालेति कीर्तिता ॥
[मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च ।
सा चानुष्टुप् छन्दस्युक्ता नित्यं सद्भिर्विद्युन्माला ॥]
[5]साम्भोभारैरानदद्भिः श्यामाम्भोदैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा[6] दिक्षु भ्रान्ता विद्युन्माला ॥
[7]पञ्चमं सप्तमं चान्त्यं गुरु पादेऽष्टके तथा ।
छन्दोज्ञैर्ज्ञेयमेतत्तु वृत्तं चित्तविलासितम् ॥ २६
स्मितवशविप्रकाशैर्दशनपदैरमीभिः ।
वरतनुपूर्णचन्द्रं तव मुखमावृणोति ॥ २७
नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च[8] ।
गुरूणि यस्याः सा नाम्ना ज्ञेया मधुकरी यथा ॥

---

1 द - भवेत्तु 2 ड - विघूर्णितेक्षणा सदा 3 भ - प्रलम्बिलोहिताम्बरा 4 च - विद्युल्लेखेति संज्ञिता 5 भ - साम्भोम्भोदैर्व्याप्तैर्व्योम्ना गम्भीरोद्यैर्नाना-नादैः । आदित्यांशुप्रख्याह्येषा दिक्षु भ्रान्ता विद्युन्माला ॥ ड - सान्द्राम्भोभिर्नाना-नादैः श्यामाकारैर्व्याप्तैर्व्योम्नि । 6 द - स्पर्शिन्येषा 7 एतद्वृत्तलक्षणं सलक्ष्यं नभमवादर्शेष्वेवोपलभ्यते । 8 भ - तु ।

[षडिह यदि लघूनि स्युर्निधनगतमकारश्चेत् ।
बुधजनबृहतीसंस्था भवति मधुकरी नाम्ना ॥] २९

[1]कुसुमितमभिपश्यन्ती विविध[2]तरुगणैश्छन्नम् ।
[3]वनमतिशयगन्धाढ्यं [4]भ्रमति मधूकरी हृष्टा ॥ ३०

दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने[5] ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका[6] ॥ ३१

[त्रीण्यादौ यदि हि गुरूणि स्यु-
श्चत्वारो यदि लघवो मध्ये ।
पङ्क्तावन्तगतमकारः स्या
द्विज्ञेया कुवलयमालाख्या[7]॥] ३२

यथा—

अस्मिंस्ते [8]शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये ।
शोभा स्वां न वहति तां बद्धा सुश्लिष्टा कुवलयमालेयम् ॥

द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥ ३४

---

शोभां स्वां स्वभाववर्तने ये भेदाः । वैडूर्यच्छायानि यानि दलानि तत्तत्स्फुरत्सुवर्णतुल्यानि वर्णानि तदभ्यन्तरकेसराणि ।

---

1 भ - कुसुमितमपि पश्यन्ती शुभविहगगणैश्छन्नम् । 2 ङ - नग 3 ङ - वनमनिलस्तु च - नवनलिनस्तु 4 भ - सुतनु 5 द - नैधनानि तु 6 द - मालिनी 7 ङ - माला सा 8 ङ - भ्रमरनिभे कान्ते नानारत्नरचितभूषाढ्ये । शोभामावहति शुभां मूर्ध्नि प्रोत्फुल्ला कुवलयमालेयम् ।

[जौ त्रिकौ हि पादगौ तु यस्या
　　गौ च संश्रितौ[1] तथा समस्तौ ।
पङ्क्तियोग सुप्रतिष्ठिताङ्गी
　　सा मयूरसारिणीति नाम्ना ॥]　　३५

यथा-

नैव तेऽस्ति संगमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् ।
[2]गर्भिणीव दृश्यसे ह्यनार्ये किं मयूरसारिणी त्वमेवम्[3] ॥
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत् ॥　　३७

[भौ तु भगाविति यस्य गणाः स्युः [4]स्याच्च यतिस्त्रिचतुर्भिरथः
त्रैष्टुभमेव हि तत्खलु नाम्ना दोधकवृत्तमिति प्रवदन्ति ॥

यथा-

[5]प्रस्खलिताग्रपदप्रविचारं
　　मत्तविघूर्णितगात्रविलासम्[6] ।
पश्य विलासिनि कुञ्जरमेतं
　　दोधकवृत्तमयं [7]प्रकरोति ॥　　३९

---

मयूरवद्व्याकोचमस्याः, मयूरीभिर्वा (सारी) गतिविशेषो भवतीत्याहुः । मन्दं मन्दं दोधकेन गीयमानं वृत्तं दोधकवृत्तम् । (एष इति) यावन्मुरजघाततुल्यं गर्जितं श्रुत्वा ।

---

1 ढ - संस्थितौ　2 ब - गर्भिणीति　द गर्भिणी च　भ - गर्भिणी च जायसे
3 ड - त्वमेव　4 द - पाठवशाच्च गतिस्खलिता स्यात्　5 भ - प्रस्खलमानगतिप्रविचारो......विलासः । पश्य...कुञ्जर एषो...वृत्तगतिं प्रकरोति ।　6 ड - विनम्रम्
7 ड - वृत्तगतिं ।

[1]आदौ द्वौ पञ्चमं चैवाप्य ष्टमं नैधनं तथा[2]।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥ ४०

एषोऽम्बुदनिस्वनतुल्यरवः
[3]क्षीबः स्खलमानविलम्बगतिः ।
श्रुत्वा [4]घनगर्जितमद्रितटे
वृक्षान् [5]प्रतिमोटयति द्विरदः ॥ ४१

नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु[6]।
एकादशाक्षरे पाद इन्द्रवज्रेति सा यथा[7]। ४२

[8]त्वं दुर्णिरीक्ष्या [9]दुरतिप्रसादा
[10]दुःखैकसाध्या कठिनैकभावा[11]।
सर्वास्ववस्थासु च कामतन्त्रे
योग्यासि किं वा बहुनेन्द्रवज्रा[12]॥ ४३

एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यदा।
उपेन्द्रवज्रा विज्ञेया लघ्वादाविह[13]केवलम् ॥ ४४

---

उपेन्द्रवज्रो अस्या उपमानत्वेन सा तथा मत्वर्थीयो उपेन्द्र वज्रन्तु इन्द्रधनुषा उपमितमुपेन्द्रवज्रमुपमितसमासः, द्विगुप्राप्ते परवल्लिङ्गनिषेधः। स्मितेन कान्त्येति इन्द्रधनुषोऽपि वर्णवैचित्र्यं च भवति । (श्लो-४५)

---

1 भ - द्वे आद्ये 2 भ - गुरु एकादशाक्षरे 3 ड - क्षीणः 4 भ - घननिस्वनं 5 ढ - प्रतितोटयते ड - मोटयते 6 ब - लघून्यथ 7 द - स्मृता 8 भ - दुष्प्रेक्षणीया विगतप्रसादा दुःखेन साध्या कठिनाभिघाता । 9 ड - दुरितस्वभावा 10 द - दुःखेन 11 न - कठिनस्वभावा 12 ड - वज्रे 13 भ - आदावथ प - आद्ये त्वथ।

[1]प्रिये श्रिया वर्णविशेषणेन
[2]स्मितेन कान्त्या सुकुमारभावात् ।
अमी गुणा रूपगुणानुरूपा
भवन्ति ते किं त्वमुपेन्द्रवज्रा ॥ ४५

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा ।
[3]गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥ ४६

यथा-

किं त्वया [4]सुभट दूरवर्जितं[5]
नात्मनो न [6]सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥ ४७

[[7]किं त्वया कुमतिसङ्गया सदा
नाज्ञयेव सुहृदां प्रियं कृतम् ।
यद्गृहाद्वचनरोषकम्पिता
याति तूर्णमबला रथोद्धता] ॥ ४८

आद्यं तृतीयमन्त्यं च सप्तमं दशमं [8]गुरु ।
यस्यास्तु त्रैष्टुभे पादे विज्ञेया स्वागता हि सा ॥ ४९

---

आत्मने सुहृदे दूरवर्जितं प्रियं दूरत्यक्तं किं त्वया न कृतं दूरत्यक्तामित्यर्थः । कुत इत्याह यत्पलायनेति । मदनसंश्रयो भावो यस्य कामफलमिति यावत् ।

---

1 ड - श्रिया च वर्णेन विशेषणेन च - प्रेम्णा 2 भ - यथा च कान्त्या सुकुमारयुक्त्या 3 भ - गुर्वेकादशके 4 ड - सुभग 5 ब - वर्जितात्मना 6 ब - सुहृदः 7 एतदुदाहरणं भमयोरेव 8 न - तथा गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा ।

यथा-

अद्य मे सफलमायतनेत्रे
जीवितं मदनसंश्रयभावम्[1] ।
आगतासि [2]भवनं मम [3]यस्मा-
त्स्वागतं तव वरोरु निषीद ॥ ५०

षष्ठं च नवमं चैव [4]लघुनी त्रैष्टुभे यदि ।
[5]गुरूण्यन्यानि पादे तु सा ज्ञेया शालिनी यथा ॥ ५१

[6]दुःशीलं वा निर्गुणं वापरं वा
लोके धैर्यादप्रियं न ब्रवीषि ।
[7]तस्माच्छीलं साधुहेतोः सुवृत्त
[8]माधुर्यात्स्यात्सर्वथा शालिनी त्वम्[9] ॥ ५२

तृतीयं चैव षष्ठं च नवमं द्वादशं तथा ।
गुरूणि जागते पादे यत्र तत्तोटकं भवेत् ॥ ५३

[यदि सोऽत्र भवेत्तु समुद्रसम-
स्त्रिषु चापि तथा नियमेन यतिः ।
सततं जगतीविहितं हि ततो
गदितं खलु तोटकवृत्तमिदम्[10] ॥] ५४

---

(किमिदमिति) तोटकस्य छेदकस्य वृत्तं चेष्टितम् ।

---

1 भ - भावात् प - संश्रितभावम् 2 ड - सदनं 3 भ - यत्वं 4 ड - लघु स्यात् 5 ब - चतुर्भिराद्यैर्विच्छेदः 6 ड - शीलभ्रष्टे निर्गुणे पापकेवा (व्यात्त कोपे-ढ) लोके ज्ञात्वा ह्यप्रियं 7 ब - आर्ये ड - आर्य शीलं साध्वि ते तेनुऽवृत्तं प - आर्यं शीलं साध्वहो ते सुवृत्तं 8 ड - माधुर्याढ्या सर्वदा 9 च - शालिनीव 10 ब - इति ।

यथा-

किमिदं कपटाश्रयदुर्विषहं
[1]बहुशाठ्यमथोल्बणरूक्षकथम्[2] ।
[3]स्वजनप्रियसज्जनभेदकरं
ननु तोटकवृत्तमिदं कुरुषे ॥ ५५

[4]आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च ।
तथोपान्त्यं जगत्यां च गुरु चेत्कुमुदप्रभा ॥ ५६

[यौ त्रिकौ तथान्यौ यदि खलु पादे
षड्भिरेव वर्णैर्यदि च यतिः स्यात् ।
नित्यसंनिविष्टा जगतिविधाने
नामतः प्रसिद्धा कुमुदनिभा सा ॥] ५७

यथा-

[5]मन्मथेन विद्धा सललितभावा
नृत्तगीतयोगा प्रविकसिताक्षी ।
निन्द्यमद्य किं त्वं विगलितशोभा
चन्द्रपादयुक्ता कुमुदवती च ॥ ५८

---

(मन्मथेनेति) नृत्तगीतयुक्ता न भवसीति संबन्धः ।

---

1 न - बहुगण्डं ङ - बहुगर्जमिव 2 ढ - कृतम् च - पंथम् 3 भ - सुजन ङ - स्वजनप्रियदुर्जन 4 कुमदनिभालक्षणं सोदाहरणं समतान्तरं चमात्रुकायां न वर्तते 5 ब - कामबाणविद्धा किमसि नतभ्रु शीतपाददग्धा नवनलिनीव (मृदुकमलिनीव - ङ) पाण्डुवक्त्र शोभा कथमसि जाता (कथमपि - न) अग्रतः सखीनां कुमुदनिभा त्वम् ।

मतान्तरे-

[1]यदि खलु पादे न्यौ त्रिकौ यथा यौं
यतिरपि वर्णैः षड्भिरेव चेत्स्यात्।
जगति विधाने नित्यसंनिविष्टा
कुमुदनिभा सा नामतः प्रसिद्धा ॥ ५९

यथा-

कुमुदनिभा त्वं कामबाणविद्धा
किमसि नतभ्रूः शीतवातदग्धा।
मृदुनलिनीबापाण्डुवक्त्रशोभा
कथमपिजाता ह्यग्रतः सखीनाम् ॥ ६०

[2]द्वादशाक्षरके पादे सप्तमं दशमं लघु।
[3]आदौ पञ्चाक्षरच्छेदश्चन्द्रलेखा तु सा यथा ॥ ६१

वक्त्रं सौम्यं ते पद्मपत्रायताक्षं
[4]कामस्यावासं सु— नोच्चप्रहासम्[5]।
कामस्यापीदं काममाहर्तुकामं
कान्ते कान्त्या त्वं चन्द्रलेखेव भासि[6] ॥ ६२

तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु।
द्वादशाक्षरके पादे [7]यत्र सा प्रमिताक्षरा ॥ ६३

---

1 मतान्तर लक्षणंलक्ष्यं च टमातृकायामेव वर्तते 2 चन्द्रलेखालक्षणं सोदाहरणं चमातृकायां नास्ति 3 भ - यत्रान्यानि च दीर्घाणि 4 न - ईषत्पाण्डुवाभं 5 ड - स्वभ्रुवोश्चावभासम् 6 भ - का त्वम् 7 ड - तदा स्यात् प - यदा स्यात् ढ - तथा स्यात्।

यथा-

[1]स्मितभाषिणी ह्यचपलापरुषा
[2]निभृतापवादविमुखी सततम्[3] ।
अपि कस्यचिद्युवतिरस्ति सुखा
प्रमिताक्षरा स हि पुमान्जयति[4] ॥ ६४

द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे ।
गुरूणि द्वादशे पादे वंशस्था जगती तु सा[5] ॥ ६५

[यदि त्रिकौ ज्तौ भवतस्तु पादत-
स्तथैव च (ज्राव)वसानसंस्थितौ ।
तदा हि वृत्तं जगतीप्रतिष्ठितं
वदन्ति वंशस्थमितीह नामतः ॥] ६६

न मे [6]प्रिया त्वं बहुमानवर्जितं
प्रियं प्रिया ते परुषाभिभाषिणी ।
तथा च पश्याम्यहमद्य विग्रहं[7]
[8]ध्रुवं हि वंशस्थगतिं करिष्यति[9] ॥ ६७

चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु ।
[10]भवेद्धि जागते पादे [11]तदा स्याद्धरिणप्लुता ॥ ६८

(स्मितेति) प्रमिताक्षरा भण्यते सा यस्यां स्मितभाषित्वादिगुणा युक्ता सा तादृशी सुमुखी युवतिरपि कस्यचिद्भवेदिति शेषः ।

1 ड - स्मितहासिनी भ - स्मितभासिनी 2 भ - वशवर्तिनी मधुरवाङ् निभृता 3 ब - सुमुखी 4 ब - जगति भ - भवति या तु सदा 5 भ - गदिता तु सा 6 ढ - प्रियं यद्बहुमानवर्जिता कृता प्रिये ते परुषातिभाषणैः । यथा 7 ड - विक्रमं भ - अद्य सा ध्रुवं 8 भ - क्षणेन 9 प - इदं करिष्यासि 10 भ - 11 यस्यास्तु भ - सा ज्ञेया ।

यथा-

परुषवाक्य[1]कशाभिहता त्वया
भयविलोकनपार्श्वनिरीक्षणा[2] ।
वरतनुः प्रततप्लुतसर्पणै-
[3]रनुकरोति गतैर्हरिणप्लुतम् ॥ ६९

सप्तमं नवमं [4]चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे [5]कामदत्तेति सा यथा ॥ ७०

करजपदविभूषिता यथा त्वं
[6]सुदति दशनविक्षताधरा च ।
गतिरपि चरणावलग्नमन्दा[7]
[8]त्वमसि मृगनिभाक्षि [9]कामदत्ता[10] ॥ ७१

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु[11] ।
[12]पादे तु जागते यस्या अप्रमेया तु सा यथा ॥ ७२

न ते काचिदन्या समा दृश्यते स्त्री
[13]नृलोके विशिष्टा गुणैरद्वितीयैः ।

(परुषेत्यादि) भवत्पारुष्यं वाक्यं तदीयया कशया अभिहता वरतनुर्हरिणप्लुतमिव करोति ।

1 च - कथा 2 भ - निरीक्षणपार्श्वविलोकनैः । 3 भ - प्रकुरुते प्रगतं हरिणप्लुता 4 भ - चैव ह्यन्त्योपान्त्ये गुरूण्यथ । यत्र स्युर्जागते पादे कामदत्ता तु सा मता 5 च - काममत्ता 6 भ . सुतनु 7 न - सन्नमन्दा 8 भ - तदसि 9 ढ - समाक्षि 10 च - काममत्ता 11 भ - लघून्यथ 12 ढ - द्वादशाक्षरके पादे 13 ढ - गुणैर्याद्वितीया तृतीयापि चास्मिन् । ममेयं मतिर्लोकमालोक्य सर्वं... सृष्टा । (चास्मिंश्च कान्ते - न) ।

त्रिलोक्यां गुणाढ्यान् समाहृत्य सर्वान्
जगत्यप्रमेयासि दृष्टा विधात्रा ॥ ७३

द्वितीयं पञ्चमं चैव ह्यष्टमैकादशे तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा ॥ ७४

[राश्रिकाः सागराख्या निविष्टा यदा
स्यात् त्रिके च त्रिके युक्तरूपा यतिः ।
सन्निविष्टा जगत्यास्ततस्सा बुधै-
र्नामतश्चापि संकीर्त्यते पद्मिनी ॥] ७५

देहतोयाशया वक्त्रपद्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसस्मिता[1] ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ७६

[[2]फल्लपद्माननना त्वं द्विरेफेक्षणा
केशपत्रच्छदा चक्रवाकस्तनी ।
पीततोयावली बद्धकाञ्चीगुणा
पद्मिनीव प्रिये भासि नीरे स्थिता ॥] ७७

आदौ षट्दशमं चैव पादे यत्र लघून्यथ ।
शेषाणि तु गुरूणि स्युर्जागते [3]पुटसंज्ञिता ॥ ७८

[यदि चरणनिविष्टौ नौ तथा म्यौ
यतिविधिरपि युक्त्याष्टाभिरिष्टः ।

---

1 ह - हंसैः सिता 2 अयं श्लोको भमातृकायामेव 3 भ - पट्ट ।

भवति च जगतीस्थः सर्वदासौ
य इह हि पुटवृत्तं नामतस्तु ॥] ७९

यथा—

*उपवनसलिलानां बालपद्मै-[1]
भ्रमरपरभृतानां[2] कण्ठनादैः[3] ।
[4]मदनमदविलासैः[5] कामिनीनां
[6]कथयति [7]पुटवृत्तं पुष्पमासः ॥ ८०

द्वितीयान्त्ये चतुर्थं च नवमैकादशे गुरु ।
[8]विच्छेदोऽतिजगत्यां तु चतुर्भिः सा प्रभावती ॥ ८१

यथा—

[9]कथं न्विदं कमलविशाललोचने
गृहं धनैः[10]पिहितकरे दिवाकरे ।
[11]अचिन्त्ययन्त्यभिनववर्षविद्युत-
[12]स्त्वमागता सुतनु यथा प्रभावती ॥ ८२

त्रीण्यादावष्टमं चैव दशमं नैधनद्वयम् ।
[13]गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षिणी ॥ ८३

(उपवनेति) पुटस्य युगलस्य वृत्तं तथा चोपवनं सलिलं चेति युग्मं, एवमन्यत् ।

1 न - पत्रैः च - पद्मे 2 मधुकराणां......अङ्गनानां जनयति चतुरत्वं पुष्पमासः—इति जनाश्रयीकारपाठः 3 च - कण्ठनादे 4 ड - समदगति भ - मदनपर 5 च - विलासे 6 ड - कथयंसि 7 भ - पटुवृत्तं 8 भ पादे तु जगतीसंस्थे यत्र सा तु 9 भ - अदः कथं 10 भ - गता 11 भ - न मानसे भयमतिवृष्टिसंभवं पराक्रमैस्त्वमासि 12 प - समागता 13 भ - गुरूणि पादे ह्यत्रैव यस्याः सावै प्रहर्षिणी ।

* अयं श्लोको जनाश्रय्यामुदाहृतः ।

यथा—

भावस्थैर्मधुरकथैः [1]सुभाषितैस्त्वं
साटोपस्खलितविलम्बितैर्गतैश्च ।
[2]शोभाढ्यैर्हरसि मनांसि कामुकानां[3]
सुव्यक्तं ह्यतिजगती प्रहर्षिणी च[4] ॥ ८४

षष्ठं च सप्तमं चैव दशमैकादशे [5]लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥ ८५

यथा—

विद्युन्नद्धाः [6]सेन्द्रधनूरञ्जितदेहा
वातोद्धूताः श्वेतबलाकाकृतशोभाः[7] ।
एते मेघा गर्जितनादोज्ज्वलचिह्नाः[8]
प्रावृट्कालं मत्तमयूरं [9]कथयन्ति ॥ ८६

आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्वर्यां वसन्ततिलका* यथा ॥ ८७

चित्रैर्वसन्तकुसमैः [10]कृतकेशहस्ता
स्रग्दाममाल्यरचनासुविभूषिताङ्गी ।

---

(चित्रैरिति) वसन्तस्य यस्तिलकस्तस्यास्ति उपमानं त्वनेनेति

---

1 ब - मधुरसकैः द - तरैः 2 ब - मानाद्यैः ड - नानाङ्गैः 3 भ - मानवानां 4 भ - त्वम् ड - इव 5 भ - तथा । लघूनि यस्य पादे तु गच्छेन्मत्त मयूरताम् 6 भ - इन्द्रधनुर्द्योतितदेहा 7 भ - कृतचिह्नाः 8 भ - गर्जितगम्भीरनिनादैः 9 प - मत्तमयूराः 10 भ - हृत ढ - वृत ।

* वसन्ततिलका, उद्धर्षिणीति सैतवाचार्येण सिंहोन्नतेति काश्यपेन, मधुमाधवीति गोमानसेन, चेतोहितेति रामकीर्तिना लक्षिता "इन्दुमुखी सैतवस्य" इति जनाश्रय्यामुक्तं । "उद्धर्षिणी सैतवस्य" इति पिङ्गलः

[1]नानावतंसकविभूषितकर्णपाशा
साक्षाद्वसन्ततिलकेव विभाति नारी ॥ ८८

[2]पञ्चादौ शाक्वरी पादे गुरूणि त्रीणि नैधने ।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा यथा ॥ ८९

मानी लोकज्ञः श्रुतबलकुलशीलाढ्यो
यस्मिन्सम्मानं[3] न सदृशमनु पश्येद्धि[4] ।
गच्छेत्तं त्यक्त्वा तं द्रुतगतिरपरं देशं
कीर्णा नानार्थैरवनिरियमसंबाधा ॥ ९०

[5]चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा ।
अन्त्योपान्त्ये च शाक्वर्याः पादे तु शरभा यथा ॥ ९१

एषा कान्ता व्रजति ललितं वेपमाना
[6]गुल्मैश्छन्नं वनमभिनवैः संप्रविद्धम्[7] ।
[8]हा हा कष्टं किमिदमिति नो वेद्मि मूढो
व्यक्तं [9]कान्ते शरभललितात्वं करोषि ॥ ९२

आदौ षट् दशमं चैव [10]लघु चैव त्रयोदशम् ।
यत्रातिशाक्वरे पादे ज्ञेया [11]नान्दीमुखी* तु सा ॥ ९३

---

साक्षादिति छन्दानुवर्तिनीत्यर्थः ।

---

1 ङ - नागावतंसकविभूषितगण्डपाली भ नानावतंसकविलम्बितकर्णपूरा ब - नानावतंसकशिरोधृतमुण्डमाला 2 भ - चतुर्दशाक्षरे पादे पञ्चादौ त्रीणि नैधने । यस्या गुरूण्यसंबोधानाम्नाज्ञेया तु सा बुधैः 3 भ - सामान्यं 4 भ - पश्येत 5 भ - चत्वार्यादौ हि दशमं ततोऽन्यच्च भवेद्गुरु । ड - आदौ चतुर्गुरूणि 6 ङ - गुल्मच्छन्नं वनमुरुनगैः 7 न - प्रवृद्धम् 8 आहो कष्टं किमिदमिति संविग्नचेष्टा 9ङ - क्रोधाच्छरभललितं कर्तुकामा ढ - क्रोडाच्छरभललितं हर्तुकामा 10 ङ - लघूनि स्युस्त्रयोदशम् । यत्र पञ्चदशे 11 भ - नान्दीमुखा ।

* मालनीत्यस्या नामान्तरं नान्दीमुखीति प्राकृतच्छन्दसि प्रसिद्धम् ।

यथा—

न खलु [1]तव कदाचित्क्रोधताम्रायताक्षं
भ्रुकुटिवलितभङ्गं[2] दृष्टपूर्वं [3]मयास्यम् ।
किमिह बहुभिरुक्तैर्या [4]ममेच्छा हृदिस्था
त्वमसि मधुरवाक्या [5]देवि नान्दीमुखीव[6] ॥ ९४

आद्यं चतुर्थं षष्ठं च नैधनं च यदा गुरु[7]।
षोडशाक्षरके पादे [8]यत्रेभललितं तु तत् ॥ ९५

(भ्रौ यदि नाश्च नित्यमिह विरचितचरणाः[9]
गश्च तथा च वै भवति निधनमुपगतः ।
स्यादपि चाष्टमेव यदि सततमनुगतं
तत्खलु वृत्तमग्र्यवृषभगजविलसितम् ॥) ९६

यथा—

तोयधरैः सुधीरघनपटुपटहरवैः[10]
सर्जकदम्बनीपकुटचकुसुमसुरभिः ।
कन्दलसेन्द्रगोपकरचितमवनितलं
वीक्ष्य करोत्यसौ वृषभगजविलसितकम्[11] ॥ ९७

आद्यात्पराणि वै पञ्च द्वादशं सत्रयोदशम् ।
[12]अन्त्योपान्त्ये च दीर्घाणि ललितप्रवरं हि तत् ॥ ९८

---

(नान्दीमुखीति) नान्द्यां मङ्गलदुन्दुभेरिव मुखं यस्या ।

---

1 ङ - वद 2 भ - पुटतरङ्ग 3 ङ - तवास्यम् 4 ङ - ममैषा 5 न - वेद्मि नान्दीमुखा त्वम् । 6 च - च 7 च - गुरूण्यथ 8 च - गजं विलसितं 9 ढ - चरणाविरचिताः 10 भ - पटुविशदनिनदितैः ; 11 भ - मत्तगजविलसितकमसौ 12 च - अन्त्ये द्वे यत्र दीर्घाणि प्रवरं ललितं ।

(यदा यमौ पादस्थौ भवत इह चेत्सौ तथा गौ
तथा षड्भिश्चान्त्यैर्यतिरपि च वर्णैर्यथा स्यात्।
तदप्यष्टौ नित्यं समनुगतमेवोक्तमन्त्यैः
प्रयोगज्ञैर्वृत्तं प्रवरललितं नामतस्तु ॥) ९९

यथा—

नखालीढं गात्रं दशनखचितं[1] चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रविलुलित[2] केशालकान्तम्।
गतिः खिन्ना चेयं[3] वदनमपि संभ्रान्तनेत्रं[4]
अहो श्लाघ्यं वृत्तं प्रवरललितं कामचेष्टम्[5] ॥१००

आद्यात्पराणि पञ्चाथ द्वादशं सत्रयोदशम्।
अन्त्यं सप्तदशे पादे शिखरिण्यां गरूणि च[6] ॥ १०१

[चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणै-
र्यदा लौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते।
यदा षड्भिश्छेदो भवति यदि मार्गेण विहित-
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता॥]

यथा—

महानद्या भोगं[7] पुलिनमिव ते भाति जघनं
तथास्यं नेत्राभ्यां[8] भ्रमरसहितं पङ्कजमिव।

असाविति (तोयधरैरिति) गज एव वा गजोचितं विलासं करोति इदमिदं विक्ष्य।

1 न - विहितं द - विहतं ड - निहितं च - विकचदशनं प - विहतदशनच्छादगण्डं 2 भ - केशाग्रकान्तम् 3 न - मन्दायामा ड - मन्दा चेवं 4 न - चक्रान्तनेत्रं भ - तु ग्लाननेत्रं 5 ड - कामवेषम् 6 भ - गुरु स्मृतम् 7 ड - भोगे 8 ब : नेत्राढ्यं।

[1]तनुस्पर्शच्छायं सुतनु सुकुमारो न परुषः
स्तनाभ्यां [2]तुङ्गाभ्यां शिखरिणि [3]निभाभासि वनिते ॥
यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे ।
षोडशैकादशे चैव तत्स्याद्वृषभचेष्टितम् ॥ १०४
(यदि हि चरणे न्सौ म्रौ स्लौ गः क्रमाद्विनिवेशिताः
यदि खलु यतिः षड्भिर्वर्णैस्तथा दशभिः पुनः ।
यदि च विहितं स्यादत्यष्टिप्रयोगसुखाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा ॥) १०५
यथा—
[4]जलधररवं श्रुत्वा [5]श्रुत्वा मदोच्छ्रयदर्पितो
विलिखति महीं [6]शृङ्गाक्षेपैर्वृषः प्रतिनर्द्य च ।
स्वयुवतिवृतो गोष्ठाद्गोष्ठं प्रयाति च निर्भयो
वृषभललितं चित्रं वृत्तं करोति च शाद्वले ॥ १०६
चत्वार्यादौ च दशमं गुरु यत्र त्रयोदशम् ।
चतुर्दशं तथान्त्ये द्वे चैकादशमथापि च ॥ १०७
यदा सप्तदशे पादे शेषाणि च लघून्यथ ।
भवन्ति [7]यस्मिन्सा ज्ञेया श्रीधरा नामतो यथा ॥ १०८
(मो भ्नौ च स्युश्चरणरचितास्तौ गरू च प्रविष्टा-
श्छेदःश्लिष्टो यदि च दशभिः स्यात्तथान्यैश्चतुर्भिः ।

1 भ - गतिर्मन्दा चेयं सुतनु तव चेष्टा सुललिता 2 भ - पीनाभ्यां 3 भ सदा ब - ममाभासि दयिते 4 ड - जलदनिनदं 5 च - दीप्तसरोत्सवलालितो ड - गर्जन्मदोच्छ्रय ढ - गर्जन्मदोत्सव 6 ड - दर्पाच्छृङ्गैर्भृगः प्रतिनन्द्य च न - शृङ्गाग्राभ्यां मुहुः 7 म - यत्र ।

अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा
सा विज्ञेया द्विजमुनिगणैः श्रीधरा नामतस्तु ॥)

स्नानैश्चूर्णैः सुखसुरभिभिर्गन्धवासैश्च धूपैः[1]
पुष्पैश्चान्यैः[2] शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकखचितैरङ्गसंभोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलया श्रीधरेवाति भासि[3] ॥

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु ।
[4]तद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः ॥ १११

यथा—

एष गजोऽद्रिमस्तकतटे [5]कलभपरिवृतः
क्रीडति वृक्षगुल्मगहने कुसुमभरनते ।
मेघरवं निशम्य मुदितः पवनजवसमः[6]
सुन्दरि वंशपत्रपतितं पुनरपि कुरुते ॥ ११२

द्वितीयमन्त्यं षष्ठं चाप्यष्टमं द्वादशं तथा ।
चतुर्दशं पञ्चदशं पादे सप्तदशाक्षरे ॥ ११३
भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ ।
विलम्बितगतिः सा तु[7] विज्ञेय नामतो यथा ॥ ११४

(यदा द्विरुदितौ हि पादमभिसंश्रितौ ज्सौ त्रिकौ
तथैव च पुनस्तयोर्निधनमाश्रितो यो लगौ[8] ।

---

1 भ - वाहैः सधूपैः ब - गण्डवासैः सुधूपैः ढ - गण्डलेपैः प - गन्धलेपैः सुधूपैः 2 च - माल्यैः 3 ब - श्रीधरा त्वं विभासि प - श्रीधेरवावभासि 4 भ - यत्र सप्तदशे पादे वंशपत्राह्वयं तु तत् ॥ 5 भ - युवति 6 ड - पवनजव-वशात् भ - प्रतिजगरुवितः 7 च - तत्र 8 ढ - ग्लौ सगौ ।

तदाष्टिरतिपूर्विका यतिरपि स्वभावाद्यथा
विलम्बितगतिस्तदा निगदिता द्विजैर्नामतः॥)

[1]विघूर्णितविलोचना पृथुविकीर्णहारा पुनः
प्रलम्बरशना चलत्स्खलितपादमन्दक्लमा[2]।
न मे प्रियमिदं जनस्य बहुमानरागेण य-
न्मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये॥

पञ्चादौ पञ्चदशकं द्वादशैकादशे गुरु[3]।
चतुर्दशं तथान्त्ये द्वे चित्रलेखा धृतौ स्मृता[4]॥ ११७

यथा—

नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थै-
र्नानागन्धाढ्यैर्मदनजननैरङ्गरागैश्च हृद्यैः[5]।
केशैः स्नानाढ्यैः[6] कुसुमभारैस्तैर्वस्त्ररागैश्च[7] तैस्तैः
[8]कान्ते संक्षेपात् किमिह बहुना चित्रलेखेव[9] भासि॥

अन्त्यं सप्तदशं चैव षोडशं सचतुर्दशम्।
[10]त्रयोदशं द्वादशं च षष्ठमष्टममेव च॥ ११९
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके[11]।
पादे लघूनि शेषाणि शार्दूलक्रीडितं तु तत्॥ १२०

(म्सौ ज्सौ तौ गुरु च प्रयोगनियता यस्मिन्निविष्टास्त्रिका

---

1 भ - विघूर्णितविलोचना प्रसृतहारमालाधरा
प्रलम्बवसना चलत्स्खलितगात्र पादक्रमा।
न मे प्रियमसज्जनेति बहुमानरागेण ने
मदेन तु विलम्बितागतिकृता कदाचित्प्रिये॥ 2 ड - क्रमा न - मन्द-पादक्रमा 3 भ - धृतौ 4 भ - चित्रमाला गुरूणि तु ड - बुधैः स्मृता 5 ड - विचित्रैः 6 ड - स्नानार्द्रैः 7 ड - रचितैर्वक्त्ररागैश्च 8 ड - कान्तैः 9 भ - चित्रमालेव 10 च - द्वादशं सानुगं चैव 11 च - यस्मिन्स्त्वेकोनविंशके।

आद्या चान्त्ययतिश्चतुस्त्रिकयुता ज्ञेयापरा सप्तभिः
नित्यं यत्पदमाश्रिता ह्यतिधृतिर्नित्यं कवीनां प्रियं
तज्ज्ञेयं खलु वृत्तजातिनिपुणैः शार्दूलविक्रीडितम्॥)

यथा—

नानाशस्त्रशताघ्नितोमरहताः प्रभ्रष्टसर्वायुधाः
निर्भिन्नोदरपादबाहुवदना[1] निर्णाशिताः शात्रवः।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै-
र्वृत्तं ते रिपुघाति भाति समरे शार्दूलविक्रीडितम्॥

[2](तावत्त्वं विजितेन्द्रियः शुभमते सर्वात्मना प्रत्यहं
दाने शीलविधौ च योजय मनः स्वर्गापवर्गावहम्।
यावद् व्याधिजराप्रचण्डनखरो व्यायत्सटाभिर्भृशं
मृत्युस्ते न करोति जीवितमृगैः शार्दूलविक्रीडितम्॥)

चुत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम्।
तथा पञ्चदशं चैव षोडशं नैधनं तथा॥ १२४
एतानि च गुरूणि स्युः शेषाणि तु लघून्यथ।
पादे यत्र [3]कृतौ ज्ञेया नाम्ना सुवदना तु सा॥ १२५

(म्रौ भ्नौ य्भौ ल्गौ च सम्यग्यदि च विरचिता पादे क्रमवशात्
विच्छेदः सप्तभिः स्यात्पुनरपि च यतिः सप्ताक्षरकृता।
यद्येषा संश्रिता स्यात्कृतिमपि च पुनः श्लिष्टाक्षरपदा
विद्वद्भिर्वृत्तजातौ तत इह गदिता नाम्ना सुवदना॥)

---

1 ब - वक्रवदना च - हस्तवदना 2 भ - मातृकायामेवायं विद्यते 3 भ - तु सा ज्ञेया नाम्ना सुवदना यथा।

यथा—

नेत्रे [1]लीलालसान्ते कमलदलनिभे भ्रूचापविनते[2]
गण्डोष्ठं पीनमध्यं समसहितघनाः स्निग्धाश्च दशनाः।
[3]कर्णावंसप्रलम्बौ चिबुकमपि नतं[4] घोणा सुरुचिरा
[5]व्यक्तं त्वं मर्त्यलोके वरतनु विहिताख्येका [6]सुवदना॥

चत्वार्यादौ तथा षष्ठं सप्तमं च चतुर्दशम् ।
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः ॥ १२८
[7]अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥ १२९

(म्रौ भ्नौ यौ यश्च सम्यग्यदि हि विरचिताः स्युस्त्रिकाः पादयोगे
वर्णैः पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् ।
वृत्तं सम्यग्यदि स्यात्प्रकृतिमनुगतं तत्त्वविद्भिः प्रदिष्टं
विज्ञेयं वृत्तजातौ कविजनदयिता स्रग्धरा नामतस्तु ॥)

चूताशोकारविन्दैः कुरवकतिलकैः कर्णिकारैः शिरीषैः
पुन्नागैः पारिजातैर्वकुलकुवलयैः [8]किंशुकैः सातिमुक्तैः।
एतैर्नानाप्रकारैः कुसुमसुरभिभिर्विप्रकीर्णैश्च तैस्तै-
र्वासन्तैः पुष्पवृन्दैर्नरवरवसुधा स्रग्धरेवाद्य भाति[9]॥)

---

1 द - पर्यन्तताम्रे भ - नीलालकान्ते 2 ङ - रुचिरे 3 ङ - कर्णौ ह्रस्वप्रलम्बौ 4 भ - चिबुकतटनता 5 ब - सर्वेस्वं 6 न - ह्येका 7 भ - अन्यं च विंशकं चैव गुरुसंज्ञानि यत्र तु 8 च - कुरवकैः 9 न - अवभाति ।

चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥ १३२
द्वाविंशत्यक्षरे पादे शेषाणि च लघून्यथ ।
भवन्ति यत्र तज्ज्ञेयं मद्रकं नामतो यथा ॥ १३३

(भ्रौ चरणे यदा विनियतौ त्रिकौ क्रमवशादथाकृतिविधौ
भ्रौ च ततःपरं च रुचिरावनन्तरकृतौ नगावपि पुनः ।
तच्च दशाष्टवर्णरचिता चतुर्ष्वपि तथा यतिश्च सततं
मद्रकवृत्तमेव खलु नाट्ययोगकुशलैर्बुधैर्निगदितम् ॥)

उत्प्लुतमेकहस्तचरणं द्वितीयकररेचितं सुविनतं[1]
वंशमृदङ्गवाद्यमधुरं विचित्रकरणानुगं[2] बहुविधम्[3] ।
मद्रकमेतदद्य सुभगे[4] विदग्धगतिचेष्टितैः सुललितै-
[5]र्नृत्यसि विभ्रमाकुलपदं विविक्तरसभावितं शशिमुखि[6] ॥

अन्त्यमेकोनविंशं च सप्तमं सत्रयोदशम् ।
एकादशं सप्तदशं पञ्चमं च गुरूण्यथ ॥ १३६
शेषाणि च लघूनि स्युर्विकृत्याश्चरणे बुधैः[7] ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥ १३७

(यदि च नकार आदिरचितः पदे विराचितोन्त एव च लगौ
यदि च जभौ त्रिधा च निहितौ क्रमेण खलु मध्य-
मावपि तथा ।

---

1 ब - स्येकं सुविततं ड - सललितं 2 ड - करणान्वितं 3 भ - सुचरितम् 4 ड - एवमद्यसुभगैः 5 ड - नित्यसुविभ्रमाकुलपदं वरोरु ललिताङ्गचेष्टितयुतम् 6 न - ललितक्रियं समभवत् । 7 च - विकृतौ चरणेषु च ।

यदि च समाश्रितं हि विकृतिं यतिश्च दशभिस्तथैकसहितै-
स्तत इह कीर्तितं मुनिगणैर्विशुद्धचरितैस्तदश्वललि -
तम्॥) १३८

[1]विविधतुरङ्गनागरथयोधसंकुलमलं बलं समुदितं[2]
शरशतशक्तिकुन्तपरिघासियष्टिविततं[3] बहुप्रहरणम्।
रिपुशतमुक्तशस्त्ररवभीत[4]शङ्कितभटं भयाकुलदिशं[5]
कृतमभिवीक्ष्य[6] संयुगमुखे समर्पितगुणं [7]त्वयाश्व -
ललितम्॥ १३९

षडादावष्टमं चैव ह्येकादशचतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥ १४०
एतानि च लघूनि स्युः शेषाण्यथ गुरूणि च ।
[8]चतुर्विंशतिके पादे मेघमालेति सा यथा ॥ १४१

(यदि खलु चरणस्थितौ नौ त्रिकौ कृत्तिकाख्यास्तथा राः
स्युः क्रमाद्
भवति यदि यतिस्तथा सप्तभिः सप्तभिस्त्रिष्वतोऽन्या
यतिःपञ्च विद्यात्तथा ।

---

1 द -
रथहयनागयौधपुरुषैः सुसंकुलमलं समुद्रितशरा-
सनशरपङ्क्तिकुन्तपरिघासियष्टिविवृतं बहुप्रकरणम् ।
वसुगणमस्यभिन्नहतशत्रुनाशितशिरः प्रमथ्य तरसा (?)
कृतमभिवीक्ष्य संयुगमुखे समीक्षितगुणं त्वयाश्वललितम् ।
2 म - सुविदितं 3 ब - निशितं 4 च - भिन्न 5 म - भयानकरसं 6 म - अभिगाह्य 7 ब - तदश्वललितम् 8 च - चतुर्विंशाक्षरे ।

सततमभिनिविष्टदेहा तथा संकृतौ सूरिभिः सर्वदा दृश्यते
तत इह परिभाषिता शास्त्रविद्भिस्त्वियं मेघमाला यथा
दण्डकः ॥) १४२

पवनबलसमाहता तीव्रगम्भीरनादा बलाकावलीमेखला[1]
क्षितिधरसदृशोच्चरूपा[2] महानीलधूमाञ्जनाभाम्बुगर्भोद्भवा[3]।
सुरपतिधनुरुज्ज्वलाबद्धकक्ष्या[4] तडिद्द्योतसन्नाहपट्टोज्ज्वला
गगनतलविसारिणी[5] [6]प्रावृषेण्या दृढं [7]मेघमालाधिकं शोभते॥ १४३

आद्यं चैव चतुर्थं च पञ्चमं षष्ठमेव च।
नवमं दशमं चैव नैधनं च भवेद्गुरु॥ १४४
पञ्चविंशतिके पादे शेषाणि च लघून्यथ।
[8]वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः॥ १४५

(भ्मौ यदि पादे स्भावपि चेष्टावभिकृतिरपि च हि यदि खलु विहिता
नाश्च समुद्राः स्युर्विनिविष्टायदि च खलु गुरु भवति निधनगतम्।
पञ्चभिरादौ छेदमुपेता पुनरपि यतिरिह यदि खलु दशभिः
क्रौञ्चपदेयं वृत्तविधाने सुरगणपितृगणमुनिगणविहिता॥

---

1 ड - तीव्रनादा बलाकावलीमेखलाशोभिता 2 ब - शोभिता म - भूषिता 3 न - ऊर्ध्वरूपा 4 ड - गर्भोद्वहा म - गर्भालसा 5 च - शोभा 6 ब - विचारिणी 7 ब - प्रावृषिप्रोन्नता म - मेघमालावली 8 भ - भवन्ति तज्ज्ञैः साज्ञेया क्रौञ्चमालेति नामतः।

यथा—

यः किल दाक्षं[1] विद्रुतसोमं[2] क्रतुवरमचमसमपगतकलशं
पातितयूपं क्षिप्तचषालं विचयनमसमिधमपशुकचरु-
कम्[3]।
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगण[4] पितृगणमिषुणा
[5]नित्यमसौ ते दैत्यगणारिः प्रदहतु मखमिव रिपुगण-
मखिलम् ॥

[[6]या कपिलाक्षी पिङ्गलकेशी
कलिरुचिरनुदिनमनुनयकठिना
दीर्घतराभिः स्थूलसिराभिः
परिवृतवपुरतिशयकुटिलगतिः।
आयतजङ्घा निम्नकपोला
लघुतरकुचयुगपरिगतहृदया
सा परिहार्या क्रौञ्चपदा स्त्री
ध्रुवमिह निरवधि सुखमभिलषता ॥] १४८

अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशकम्।
एकविंशं च विज्ञेयं चतुर्विंशं सनैधनम् ॥ १४९
[7]एतानि गुरुसंख्यानि शेषाणि च लघून्यथ।

---

1 ब - दाक्ष्यं 2 म - विद्रुमसोमं 3 न - अपशुकमहितम् 4 ब - मुनिगणं 5 भ - सत्वतिमायो दैत्यगणारिस्तव नृप मखमिव दहतु रिपुगणम्। 6 टढढमातृकास्वेवायं श्लोको वर्तते। अयं तु हलायुधेन पैङ्गलवृत्तावुदाहृतः 7 च - एतानिगुरुसंज्ञानि पादे षड्विंशकाक्षरे। यत्र नाम्ना तथा ज्ञेयं तद्भुजङ्गविजृम्भितम् ॥

षड्विंशत्यक्षरे पादे तद्भुजङ्गविजृम्भितम् ॥ १५०

[यस्मिन्मौतौनाः सौ नित्यं प्रतिचरण-
मथगादितास्त्रिका ह्यनुपूर्वशः
षड्विंशत्यामेकोनायां च यदि हि
खलु यतिरभिधा चतुर्भिरथाष्टभिः ।
पश्चादन्त्यौ ग्लौ संयोज्यौ यदि भवति
मनुजदयिता समाश्रितमुत्कृतिं
नाम्ना वृत्तं लोके ख्यातं कविवदन-
विकसनपरं भुजङ्गविजृम्भितम् ॥ १५१

यथा—

[1]रूपोपेतां देवः सृष्टां समदगज-
विलसितगतिं निरीक्ष्य तिलोत्तमां
प्रादक्षिण्यात्प्राप्तां द्रष्टुं बहुवदन-
मचलनयनं शिरः कृतवान्हरिः[2] ।
[3]दीर्घं निश्वस्यान्तर्गूढं स्तनवदन-
जघनरुचिरां निरीक्ष्य तथा पुनः
पृष्ठे न्यस्तं देवेन्द्रेण प्रवरमणि-
कनकवलयं भुजङ्गविजृम्भितम् ॥ १५२

(रूपोपेतामिति) भुजङ्गविजृम्भितं कृत्वा भगवतो हस्ते न्यस्तम् ।

1 भ - रूपेऽनिन्द्यां 2 ड - वदननयनसहितं तिरस्कृतवान् हरः भ - मुदा
3 भ - ब्रह्मादीर्घं निश्वस्त्यान्तःस्तन

[[1]दण्डकं नामविज्ञेयमुत्कृतेरधिकाक्षरम् ।
मेघमालादिकं तत्स्यान्नौ चादौ कागुहात्रिंकाः॥ १५३

यथा—

मुदितजनपदाकुला स्फीतसस्याकरा
भूतधात्री भवन्तं समभ्यर्चति[2]
द्विरदकरविलुप्तहिन्तालतालीवनास्त्वां
नमस्यन्ति विन्ध्यादयः पर्वताः ।
स्फुटित[3]कलशशुक्तिनिर्गीर्णमुक्ता-
फलैरूर्मिहस्तैर्नमस्यन्ति वः सागराः
मुदितजलचराकुलाः संप्रकीर्णामलाः
[4]कीर्तयन्तीव कीर्तिं महानिम्नगाः ॥] १५४

एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः ।
[5]विषमार्धसमानां तु पुनर्वक्ष्यामि लक्षणम् ॥ १५५
यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः ।
ग्रथिताः पादयोगेन तद्वृत्तं विषमं स्मृतम् ॥ १५६

नानावृत्तसमुद्भवा इत्यनेन तुल्यच्छन्दसां वृत्तानां लक्षणं पृथक्पृथक्पादे विरचय्य स्वयं विषमा ऊह्या इत्याह ।

1 एतौ श्लोकौ प्रक्षिप्तौ टडढ मातृकास्वेवोपलभ्येते । उदाहरणं तु जनाश्रय्यां विद्यते । तद्ग्रन्थकारेण रुद्रस्वामिना कुत उद्धारितमिति निर्णेतुं न शक्यते । अयं दण्डकश्चण्डवृष्टिप्रयोग इति नाम्ना भासते । 2 ड - समभ्यर्च्यते 3 'विमल' इति जनाश्रय्याम् 4 'कीर्तयिष्यन्ति वर्ण' इति तत्रैव 5 भ - युग्मौजविषमाणां च संप्रवक्ष्यामि ।

[1]द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा।
सर्वपादैश्च[2] विषमैर्वृत्तं विषममुच्यते॥ १५७

[3]ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा।
युग्मौजविषमैः पादैर्वृत्तमर्धसमं भवेत्॥ १५८

पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम्।
[4]द्वयोरर्धसमं विद्यादेष छेदस्तु पादशः॥ १५९

[5]छेदतस्तु मया प्रोक्तं समवृत्तविकल्पनम्।
त्रिकैर्विषमवृत्तानां संप्रवक्ष्यामि लक्षणम्॥ १६०

[[6]नैधनेऽन्यतरस्यां वै प्रथमे पाद इष्यते।
द्वितीये चरणे च स्यादित्यनुष्टुप्समासतः] १६१

सौ गौ तु प्रथमे पादे स्रौ ल्गौ चापि द्वितीयके[7]।
[8]युग्मेऽर्धविषमे पादे ज्ञेया पथ्या तु सा त्रिकैः॥ १६२

यथा—

प्रियदैवतमित्रासि प्रियसंबन्धिबान्धवा।
प्रियदानरता पथ्या दयिते त्वं प्रियासि मे॥ १६३

द्वौ समाविति प्रथमतृतीयौ द्वितीयचतुर्थौ। द्वौ विषमाविति प्रथमद्वितीयौ तृतीयचतुर्थौ, वीप्सागर्भमेतत्। द्वाविति सिद्ध इति लक्षिते। सार्वपादिकमिति लक्षणीयमितिशेषः द्वयोरित्यत्रापि। छेद इति पादेषु विभाग इत्यर्थः। (समवृत्तविकल्पनं) समवृत्तेषु विकल्पिता ये चित्राश्छेदाः ते प्रोक्ताः।

1 ड - समावेकान्तरौ पादौ द्वौ द्वावर्धसमौ स्मृतौ 2 ब - तु 3 भ - ह्रस्वाद्यं नैधनाद्यं वा 4 भ - द्वयोश्च पादयोरोज एष च्छेदस्तु वृत्तजः ब - पादद्वयस्य संसिद्धौ सिद्धमर्धसमं पुनः। 5 प - भेदकस्तु च - छेदास्तु प - छेदे तु ढ - छेदकोऽयं मया प्रोक्तः 6 अयं श्लोकः कादि चान्तेषु च भ - संज्ञके च न दृश्यते 7 भ - यत्र तथापरे 8 ब - एवं युग्मौजयोर्ज्ञेयं पथ्यावृत्ते त्रिकौ यथा।

म्रौ गौ तु प्रथमेपादे[1] यूसौ लगौ च द्वितीयके।
पादे भौ लगौ तृतीये च चतुर्थे तु तसौ लगौ[2] ॥१६४

यथा—

[3]नैवाचारो न ते मित्रं न संबन्धिगुणप्रिया।
सर्वथा सर्वविषमा पथ्या न भवसि प्रिये॥ १६५

[4]अयुजोर्लक्षणं ह्येतद्विपरीतं तु यत्र च।
पथ्या हि विपरीता सा विज्ञेया नामतो यथा॥ १६६

कृतेन रमणस्य किं सखि रोषेण तेऽप्यर्थम्।
[5]विपरीता न पथ्यासि त्वं जडे केन मोहिता॥ १६७

चतुर्थादक्षराद्यत्र त्रिलघु स्यादयुक्ततः।
अनुष्टप्चपला* सा तु विज्ञेया नामतो यथा॥ १६८

यथा—

न खल्वस्याः प्रियतमः श्रोतव्यं व्याहृतं सख्या।
नारदस्य प्रतिकृतिः कथ्यते चपला हीयम्[6]॥ १६९

---

1 ब - खलुभवेत्पूर्व 2 ब - पथ्यास्तौ ग्लौ चतुर्थके (लक्षणविरुद्धःपाठः) 3 एतदुदाहरणं जादि बान्तेषु न विद्यते। 5 जादि बान्तेषु—युग्मयोः 4 ब - त्वं जडे केन मोहिता विपरीता न पथ्यासि। 6 भमयोर्विना—श्रूयते विपुला हीयम्।

*भमयोर्विना सर्वेष्वादर्शेषु 'विपुला' इति पाठः, स तु मतान्तरेण युज्यते। पिङ्गलादयस्तु "चपला युजोन्" इत्याहुः। रुद्रस्वामी "चपला" इति सूत्रयित्वा "अस्मिन्नेव वक्त्रनियमे अयुजोः पादयोरन्त्यात्पूर्वं नकारो भवतिचेत् चपला नाम भवति। यथा—भात्यशोकः किसलयः कुसुमस्तवकैरन्यैः। श्रियं हस्ताधरगतां लज्जयन्निव च स्त्रीणाम्॥" इत्युदाहरणेन विवृतवान्॥ ईशानदेवोऽपि छन्दःस्तुतौ चपलावक्त्रस्य "रौक्ममैन्द्रमभिनवं मण्डपं हृद्गतं ध्यायेत्। हैमवप्रं तु परितश्चपलावक्त्रशोभाढ्यम्" इत्याह। सैतवाचार्यमते इयं नकारविपुला। "चपलावक्त्रमयुजोः समुद्रान्नगणो यदि" इति मन्दारमरन्दे च। अत एव भमयोः पाठ एव गृहीतः।

विपुला तु युजि ज्ञेया लघुत्वात्सप्तमस्य तु ।
सर्वत्र सप्तमस्यैव* केषांचिद्विपुला यथा[1] ॥ १७०
संक्षिप्ता वज्रवन्मध्ये हेमकुम्भनिभस्तनी ।
विपुलासि प्रिये[2] श्रोण्यां पूर्णचन्द्रनिभानने ॥ १७१

यथा—

गङ्गेव मेघोपगमे आप्लावितवसुन्धरा ।
कूलवृक्षानारुजन्ती स्रवन्ती विपुलाचलात् ॥ १७२
[[3]आगता मेघसमये भीरुभीरुकुलोद्गते ।
एकरात्रौ परगृहं चोरि बन्धनमर्हसि ॥] १७३
एवं विविधयोगास्तु पथ्यापादा भवन्ति हि ।
युग्मौजविषमैः पादैः शेषैरन्यैस्त्रिकैरथ ॥ १७४
[4]सगुर्वन्तः सर्वलघुस्त्रिको नित्यं हि नेष्यते ।
प्रथमादक्षराद्यत्र चतुर्थात्प्राग्लघुः स्मृतः ॥ १७५
पथ्यापादं समास्थाय[5] त्रीण्यन्ते तु गुरूण्यथ ।
भवन्ति पादे सततं बुधैस्तद्वक्त्रमुच्यते ॥ १७६

यथा—

दन्तक्षताधरं सुभ्रु जागरग्लाननेत्रान्तम्[6] ।
[7]रतिसंभोगखिन्नं ते दर्शनीयतरं वक्त्रम् ॥ १७७

(सगुर्वन्त इति) गुर्वन्तः सः, सर्वलघुः नः त्रिकौ नेष्येते । प्रथमादक्षरादनन्तरः चतुर्थादक्षरादूर्ध्वं तु प्राक्लघुः यकारं तु न प्रयोज्यानि

1 ब - विपुलैरनु 2 ब - कश्यां सरच्चन्द्र 3 अयं श्लोको भमातृकायामेव वर्तते 4 ब - गुर्वन्तकः 5 भ - समान्यत्र 6 ब - नेत्रं च 7 ड - प्रागसंभोगः ।

* सैतवाचार्यादीनां मते रकारतकारभकारमकारनकारविपुलाः प्रसिद्धाः ॥

[[1]इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते ।
तद्विदां मतवैषम्यं त्रिकादक्षरतस्तथा ॥] १७८

पादे षोडशमात्रास्तु गाथांशकविकल्पिताः[2] ।
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका ॥ १७९

असंस्थितपदा [3]सुविह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
क्व यास्यसि वरोरु सुरतकाले विषमा किं वानवासिका त्वम्

स्जौ स्गौ च प्रथमे पादे तथा चैव तृतीयके ।
केतुमत्यां गणाः प्रोक्ता भ्रौ न्गौ गश्च सदा बुधैः ॥ १८१

यथा—

स्फुरिताधरं [4]चकितनेत्रं रक्तकपोलमम्बुजदलाक्षम् ।
किमिदं रुषापहृतशोभं [5]केतुमतीसमं वद मुखं ते ॥

[6]वक्त्रस्यापरपूर्वस्य चादौ नौ रो लगौ त्रिकाः ।
नजौ जरौ द्वितीये च शेषाग्रं पुनरेव तु[7] । १८३

([8]प्रथमे च तृतीये नौ रलौ गश्च प्रकीर्तितः ।
गणाश्चापरवक्त्रे तु नजौ जौ द्विचतुर्थयोः ॥ १८४

यथा—

सुतनुजलपरीतलोचनं जलदनिरुद्धमिवेन्दुमण्डलम् ।
किमिदमपरवक्त्रमेव ते शशिवदनेऽद्य मुखं पराङ्मुखम् ॥

---

1 श्लोकोऽयं बमातृकायामेव दृश्यते 2 भ - यस्या नित्यं भवन्ति हि 3 ब - सविह्वलाङ्गी 4 ड - चलितनेत्रं 5 ब - केतुमतीमुखाकृतिमुखं 6 च - अपरवक्त्रस्यादौ तु म्लौगिति त्रिकं त्रिकम् । नजौ जरौ द्वितीये तु चतुर्थे पुनरेव तु 7 भ - प्राग्वदेव तु 8 अयं लक्षणश्लोकः जादि बान्तेषु दृश्यते ।

नौ यौ तु प्रथमे पादे न्जौ ज्रौ गश्च तथापरे।
यत्र तत्पुष्पिताग्रा स्याद्यदि शेषं तु पूर्ववत्[1] ॥ १८६

यथा—

[2]पवनबलविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम्।
मधुकरपरिगीयमानशब्दं[3]
वरतनु पश्य वनं सुपुष्पिताग्रम् ॥ १८७

स्जौ स्लौ चादौ यथा न्सौ ज्गौ भ्नौ ज्लौ गश्च तथा पुनः।
स्जौ स्जौ गश्च त्रिका ह्येते उद्गतायाः प्रकीर्तिताः॥ १८८

यथा—

तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी।
नाभिकमलविवरोत्पतिता भ्रमरावलीव कुसुमात्समुद्गता॥

स्जौ स्लौ च ततो न्सौ ज्गौ नौ सौ चेति तृतीयके।
स्जौ स्जौ गश्च चतुर्थे तु ललितायाः गणाः स्मृताः॥

यथा—

ललिताकुलभ्रमितचारुवसनकरचारुपल्लवा[4]।
[5]प्रविकसितकमलकान्तिमुखी प्रविभासि देवि सुरत-
श्रमातुरा ॥ १९१

एवमेतानि वृत्तानि समानि विषमाणि च।

---

1 ब - यथैतावपरौ तथा 2 ड - पवनस्य 3 न - शोभं ड - वृक्षं 4 ड - वसनकरपल्लवा हि मे। 5 भ - ललितावलि भ्रमरजासु वदनकरचारुपल्लवा। ललितासुतासुतनुवदतेऽद्यलोचने वलिता लतेव चलबालपल्लवा।

नाटकाद्येषु काव्येषु प्रयोक्तव्यानि सूरिभिः ॥ १९२
सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पिण्डशः[1] ।
न च तानि प्रयोज्यानि हतशोभानि तानि हि[2] ॥ १९३
[3]यान्यत्र प्रतिषिद्धानि गीतके तानि योजयेत्
[4]ध्रुवायोगे तु वक्ष्यामि तेषामेव विकल्पनम् ॥ १९४
वृत्तलक्षणमेवं तु[5] समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्याणामपि लक्षणम् ॥ १९५
पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्याः पञ्च प्रकीर्तिताः ॥ १९६
[[6]आसां [7]तु संप्रवक्ष्यामि यतिमात्राविकल्पनम् ।
[8]लक्षणं नियमं चैव विकल्पगुणसंश्रयम् ॥ १९७
यतिश्छेदस्तु विज्ञेयश्चतुर्मात्रो गणः स्मृतः ।
द्वितीयान्त्यौ युजौ पादावयुजौ त्वपरौ[9] स्मृतौ ॥ १९८
गुरुमध्यविहीनस्तु चतुर्गुणसमन्वितः ।
अयुग्गणो विधातव्यो युग्गणस्तु यथेप्सितः[10] ॥ १९९

ननु हतशोभानीति चेत् कथं प्रयोज्यानीत्याह यान्यत्र प्रतिषिद्धानीति गीतं पाठ्यमानत्वाभावात् न वृत्तगता श्रव्यतापेक्षते केवलं तालयोजनार्थसाम्यमवश्यकर्तव्यमिति मात्राणां वर्णानां नियमस्तत्राश्रीयते ।

1 ङ - पण्डितैः 2 ङ - न शोभां जनयन्ति हि 3 ब - यान्यतःपरमत्र स्युर्गीतकैः 4 ब - ध्रुवाविधाने व्याख्यास्ये तेषां चैव 5 न - एतत्तु 6 यतिमात्राविकल्पस्वरूपोऽयं ग्रन्थभागः कुण्डलीकृतः जादिभान्तेष्वेवदृश्यते । वृत्तिकारेण प्रक्षिप्त इति न पठितः। मसंज्ञितेऽपि वर्तमानत्वात्कीर्तिधरेणाप्ययं पठित इति ज्ञायते । 7 ब - चैव प्रवक्ष्यामि 8 ब - लक्षणे नियतांश्चैव विकल्पान्गुणसंश्रितान् (ङ - गण) 9 ङ - शेषौ चेव युजौ स्मृतौ 10 ङ - युग्गणः पञ्च चैव तु ।

[1]षष्ठो वै द्विविकल्पस्तु नैधनो ह्येकसंस्थितः[2]।
पश्चार्धे तु षष्ठः स्यादेकमात्रस्तु केवलः[3]॥ २००
द्विविकल्पस्तु षष्ठो यो[4] गुरुमध्यो भवेत्तु सः।
तथा[5] सर्वलघुश्चैव यतिसंज्ञासमाश्रितः॥ २०१
[6]द्वितीयादिलघुर्ज्ञेयः सप्तमे पञ्चमे यतिः[7]।
[8]प्रथमादिरथान्त्ये च पञ्चमे [9]वा विधीयते॥ २०२
गणेषु त्रिषु [10]पादस्य यस्याः पथ्या तु सा भवेत्।
[11]अतश्च विपुलान्या तु विज्ञेया यतिलक्षणा॥ २०३
अयुजः सर्वगुरवो गुरुमध्या गणा युजः।
यस्याः स्युः पादयोगे तु विज्ञेया [12]चपला हि सा॥
[13]त्रिंशदाद्यस्तु विज्ञेयः सप्तविंशति चापरे।
उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः॥ २०५
[14]त्रिंशत्तस्याश्च यदि स्युरेतानि द्विगुणानि तु।
[15]त्रीण्यक्षराणि चान्यानि न्यस्य संख्याविभागशः॥
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः।
[16]सर्वेषां चैवमार्याणामक्षराणां यथाक्रमम्॥ २०७

1 न - षष्ठोऽस्य द्विविकल्पःस्यात् 2 न - संश्रितः 3 प - यो गणः षष्ठ एक-मात्रः स इष्यते 4 ड - अत्र 5 ड - सर्वयतिश्चैव यदिसंज्ञां 6 ढ - सद्वितीया-द्विलघुनी सप्तमे सप्तमाद्यदि 7 भ - सप्तमे वा यतिस्तथा 8 भ - प्रथमादि तथान्ते च 9 ड - तु 10 न - पादौ तु 11 अस्य श्लोकस्थाने नबढादिषु—प्रथमे च द्वितीये च सा त्वन्या विपुला मता। (न - प्रथमतृतीयौ पादौ) द्वितीयश्च चतुर्थश्च जकारौ गुरुमध्यगौ 12 ड - विपुला 13 अस्य श्लोकस्य पूर्वं जाढ्बान्तेषु "पूर्वार्धे... । मुखचपला ॥ कार्यौ...उत्तमाः ॥ इति द्वौ श्लोकौ वर्तेते । पाठस्तु—त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिः सप्तचापरे 14 ड - अधिकानि यानि त्रिंशद्भ्यस्तानि द्विगुणितानि तु 15 ड - अक्षरत्रययुक्तानि ज्ञेयान्यत्र लघूनि तु 16 ड - सर्वासां चैवमार्याणामक्षराणि ।

अर्धाष्टमगणार्धा च सर्वैवार्या प्रकीर्तिता ।
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः ॥ २०८
पश्चाद्वा यो गणः षष्ठ एकमात्रः स उच्यते ।
द्विविकल्पस्तु यः षष्ठो गुरुमध्यो भवेत्तु सः ॥ २०९
यथा सर्वलघुश्चैव यतिसंख्यासमाश्रिता ।
सा द्वितीया द्विलघुका सप्तमे प्रथमे यतिः ॥ २१०
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यः [1]युग्गणस्तु स एव च ॥ २११
प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥ २१२

पथ्या यथा—

रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी ।
कस्य तु पृथुमृदुजघना तनुबाह्वंसोदरी पथ्या ॥

---

अर्धोऽष्टमो गणः सान्ताः सप्त गणाश्च । चतुर्मात्रा यस्मात्तादृगर्धे यः स्यात् षष्ठो गणो द्विभेदः एकभेदमाह पश्चादर्धे यः षष्ठो गणस्तस्मिन् कर्तव्ये लघुरेकः कर्तव्यस्तस्य स्थान इत्यर्थः। गुरुमध्यो जः सर्वलघुः चतुर्लघुस्तत्र च द्वितीयादारभ्य लघ्वोर्यतिरर्धे तदनन्तरं पादारम्भः कर्तव्यः, अन्ते च प्रथमादिर्यतिः, पञ्चमे च गणे समाप्ते यतिः। अयुग्गण इति विषयं प्रथमतृतीयपञ्चमसप्तमरूपं । युग्गणः समः स एव चेति जकारस्तत्र न वर्ज्य इति यावत्। अर्धद्वयेऽपि गणत्रये छेदः कर्तव्यः स चैव पाद उच्यते तदाह प्रथमतृतीयौ पादौ द्वादशमात्राविति । प्रथमेऽर्धे गणत्रयं प्रथमः पादः द्वितीयपादे चान्यं गणत्रयं तृतीयपादम् । पथ्येति पथि साध्वित्यर्थः ।

---

1 म - प्रमाणश्चैव पञ्चमः ।

विपुला यथा—

विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥ २१४
द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला यथा ॥ २१५
उद्भटगामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥ २१६
पूर्वार्धे लक्षणं ह्येतदस्याः सा च मुखेन तु[1] ।
[2]पश्चिमार्धे तु चपला यस्याः सा जघनेन तु ॥ २१७

मुखचपला यथा—

आर्यामुखे तु चपला तथापि चार्या न मे यतः सा तु ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥ २१८

जघनचपला यथा—

वरमृगनयने चपलासि वरोरु शशाङ्कदर्पणनिभास्ये ।
कामस्य सारभूते न पूर्वमद्चारुजघनेन ॥ २१९
उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि[3] ।
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला तु सा ॥ २२०
कार्यौ द्वादशमात्रौ च पादावाद्यौ तृतीयकौ ।
अष्टादश द्वितीयं च तथा पञ्चदशोत्तमाः ॥ २२१

---

1 न - यस्याः सा चपलामुखे 2 न - पश्चिमार्धं भवेद्यत्र जघने चपला तु सा
3 भ - यत्रैवं लक्षणं भवेत् ।

[1]चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ २२२
पञ्चपञ्चाशदन्त्या तु त्रिंशदाद्या तथैव च ।
आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः ॥ २२३
त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् ।
शेषाणि गुरुसंख्यानि ह्येवं सर्वत्र निर्दिशेत् ॥ २२४
सर्वेषामेव चार्याणामक्षराणां यथाक्रमम् ।
सर्वेषां जातिवृत्तानां पूर्वमुत्तरसंख्यया ॥ २२५
विकल्पं गणनां कृत्वा संख्यां पिण्डेन निर्दिशेत् ।
आर्यागीतिरथार्धे च केवलं चाष्टभिर्गणैः ॥ २२६

---

आर्याणां भेदं दर्शयितुं तत्प्रस्तारमित्याह ।

चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ इति

अयुक्स्थानगतानां चतुष्प्रकाराश्चतुर्गणाः । समस्थानगताः पञ्चप्रकारास्तेषां यो विशेषः परस्परसंकीर्णतातत्कृतमार्याणां प्रस्तारबाहुल्यं निरूपयेत् । अन्त्या सर्वलघु कार्या पञ्चपञ्चाशदक्षराणि, प्रथमार्धे एकान्न त्रिंशत्, द्वितीये षड्विंशतिः ।

शिशिरतरकिरणपरिकरसकलकलविरचितकपिशकचनिचय ।
समहृदय (तनुविनिहितधरणिधरवरसुत जयजय शिव ॥)

लघुद्वयं द्वितीये षष्ठे स्थाने लघुः तथा च लघुवर्णत्रयमिति । अत्र मात्रावृत्तानां संज्ञाज्ञानार्थमाह । सर्वेषामेवेति । पूर्वं कृत्वा यो विकल्पसंख्याभेदः तस्योत्तरसंख्यया सह गुणसंहननं कृत्वा यो भवति पिण्डस्तेन संख्यां वदेत् ।

---

1 अयं श्लोको भारतीयमातृकासूपलब्धासु कुत्राचिन्न दृश्यते; वृत्तिकारेण पठितत्वान्मूलेऽत्र निवेशितः ।

इतरार्धे तु षष्ठस्तु न लघुर्गण इष्यते ।
वृत्तैरेवं तु विविधैर्नानाछन्दस्समुद्भवैः ॥ २२७
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥

इति भारतीये नाट्यशास्त्रे छन्दोविचिति-
नामाध्यायः पञ्चदशः ॥

---

तत्र समस्तासां पञ्चभेदः विषमश्चतुर्भेदः षष्ठो द्विभेदः द्वितीयेऽर्धे त्वेकभेदः, अष्टममेकभेदम्। तदत्र पूर्वाङ्केनोत्तराङ्कस्य गुणनं तेनान्याङ्कस्य षोडश स्थानानि । संख्यालाभः तत्र चतुर्भिः पञ्चानां गुणने विंशतिस्तया चतुर्णां गुणने विंशतिस्तया च गुणानां गुणने विंशतिरित्यादि मन्तव्यम् । तदाह—

आर्याः शतसहस्राणि ज्ञेया ह्येकान्नविंशतिः ।
अष्टौ कोट्यः सहस्राणि विंशतिश्च प्रमाणतः ॥

न लघुरिति । अपि तु प्रथमार्धवदपरार्धेऽपि षष्ठो द्विभेदो गणः आर्यागीतास्वित्यर्थः ।

अध्यायार्थमुपसंहरन् भाविनं विषयमासूत्रयति वृत्तैरित्यादि। काव्यबन्धा इत्यनेनेदमाह यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः, तद्वत्काव्ये निर्मातव्ये भूमिकल्पः शब्दच्छन्दोविधिः क्षेत्रपरिग्रहं वृत्तसमाश्रयमित्यादि विरचयन् भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेशनं गवाक्षवातायनादिदेशीयो दशरूपकविभागः, उपयोगनिरूपणाप्रख्या काकादिप्लुतिः, एवंभूतवाचनिकाभिनयस्वरूपं चतुर्दशादिभिः षड्भिरध्यायैरुच्यते । तत्राध्यायद्वयं वृत्तलक्षणविधानं तु भविष्यति ।

यद्यपि रूपकविरचनकाले परिपक्वप्रज्ञस्य न क्रमप्रतिभासस्तथाप्यपोद्धारधिया कल्प्यत इत्याहुः । प्रबन्धस्य यो युक्तोऽभ्यासः तन्निष्पत्तिः प्रबन्धाभ्यासः तत्संपत्तिः अभिनयार्थनिर्वर्तनं तदभिनयोपारोहणमिति स एव क्रम इत्युपाध्यायाः। यदाहुः—

महाकवीनां पदवीमुपात्तामारुरुक्षताम् ।
नासंस्मृत्य पदस्पर्शान्संपत्सोपानपद्धतिः ॥ इत्यादि ।

क्रमोल्लङ्घने हि सति नाटकादिविरचयतां महान्तः प्रमादापभ्रंशा भवन्ति । न हि सर्वो वाल्मीकिर्व्यासः कालिदासो भट्टेन्दुराजो वा, तेषामपि प्राग्जन्मार्जितक्रमाभ्याससमुदितसंस्कारपाटवोत्पादितः कुलप्रतिभङ्गज्ञानातिशय इति शिवम् ॥

इति पञ्चदशाध्याये ध्यायिना परमेश्वरम् ।
कृताभिनवगुप्तेन गुप्तार्थप्रकटीक्रिया ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां वृत्तविधिर्नाम
पञ्चदशोऽध्यायः.

श्री

# नाट्यशास्त्रम्

## षोडशोऽध्यायः*

†विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयः सहेतुः ॥
सारूप्यमिथ्याध्यवसायसिद्धि-
पदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाच्ञाप्रतिषेधपृच्छा-
दृष्टान्तनिर्भासनसंशयाश्च ॥ २

विचित्रं रूपकभुवो लक्षणं भूषणं भुवः ।
भास्यते येन तं वन्दे प्राच्यधीसाधितं शिवम् ॥

(ननु) काव्यबन्धाः षट्त्रिंशल्लक्षणान्विताः कर्तव्या इत्युक्तं, तत्र गुणालङ्कारादिरिति वृत्तयश्चेति काव्येषु प्रसिद्धो मार्गो, लक्षणानि तु न प्रसिद्धानि, किं च पुरुषस्येव काव्यस्य लक्षणगुणालङ्कारव्यवहारो न युक्तः पुरुषस्य शरीरचैतन्यभेदात् कटकादीनां ततोऽपि भेदात्, काव्यस्य पुनर्विरचनकाले प्रति-

* जादिबान्तेषु सप्तदशोऽध्यायः ।

† अस्मिन्नध्याये षट्त्रिंशल्लक्षणसमुद्देशनिर्देशयोर्गुणदशकस्य लक्षणे च द्विविधः पाठो दृश्यते । तत्र वृत्तिकारेणैकः पाठो गृहीतः, कीर्तिधरधनञ्जयसर्वेश्वरादिभिश्च स एव प्रमाणीकृतः । भिन्नः पाठश्चिरन्तनैः कैश्चिद्व्याख्यातृभिः पठितः, स तु विश्वनाथसिङ्गभूपालादिभिरनुसृतः । वृत्तिकारस्तेषां वैषम्यपरिहरणाय नामनिर्वचनयोर्भिन्नानामपि केषांचिल्लक्षणानां स्वपाठोक्तलक्षणेष्वन्तर्भावं प्रकटीकृत्य षट्त्रिंशत्त्वं सम्यगस्थापयत् । भोजदेवस्तूभयोः पाठयोः समानानि भिन्नानि च गृहीत्वान्यानि द्वादश संकल्प्य चतुःषष्टिलक्षणानि नामनिर्वचनाभ्यां प्रापञ्चयत् । तन्मतमेव शारदातनयेनानु-

आशीः प्रियोक्तिः [1]कपटः क्षमा च
प्राप्तिश्च पश्चात्तपनं तथैव[2]।
[3]अर्थानुवृत्तिर्ह्युपपत्तियुक्ती
कार्योऽनुनीतिः परिदेवनं च ॥ ३

षट्त्रिंशदेतानि [4]तु लक्षणानि
प्रोक्तानि वै भूषणसंमितानि।
काव्येषु [5]भावार्थगतानि तज्ज्ञैः
सम्यक्प्रयोज्यानि यथारसं तु[6] ॥ ४

पत्तिकाले वा प्रापकसत्तायां तेषामगणितत्वाच्च । दण्डिनापि

"काव्यशोभाकरान्धर्मानलङ्कारान्प्रचक्षते"

इति ब्रुवता गुणमध्य एव तत्र प्रसादादीनभिदधता च गुणालङ्कारविभागेऽप्यसंभवीति सूचितं भवति। सत्यमेतत्, किं तु विरचनविवेचनसामर्थ्यसमर्थनायावश्यं काल्पनिकोऽपि विभाग आश्रयणीयः। तत्र कल्पनायां विप्रतिपत्तयः केचिदाहुः—इह गुणास्तावदात्मनि चिन्मये शृङ्गारादौ वर्तन्ते, शृङ्गारे चावश्यं च लक्ष्यत इति पृथक्सिद्धत्वादलङ्कारः, शरीरनिष्ठमेव यत्पदं पृथक्सिद्धं तल्लक्षणम्, येन शरीरस्य सौन्दर्यं जायते। तच्च सिद्धरूपं साध्यरूपं वा, यथा श्यामेति, 'मदमन्थरगामिनी' इति च। एतदेव लक्षणं, तच्चालंक्रियते। अलङ्कारैर्युक्तं काव्यं लक्षणैर्विना न शोभते। क्रियावाच्योपमेयभेदेन तदेतल्लक्षणं द्विधेति यथा 'श्यामा विशालाक्षी', 'मत्तमातङ्गगामिनी' इति च।

अन्ये मन्यन्ते—इतिवृत्तखण्ड[ल]कान्येव सन्ध्यङ्गकानि लक्षणानीति च व्यपदिश्यन्ते। निमित्तभेदात् पूर्वापरसंबन्धेन बीजोपक्षिप्तेऽर्थे निर्वहणपर्यन्ते

1 भ - कपटक्षमे 2 भ - ग्रहश्च 3 भ - अर्थानुवृत्ती उपपत्ति 4 भ - मया समासात् 5 भ - सोदाहरणेषु 6 भ - रसानि।

सृतम्। अतः प्रथमं वृत्तिकारपाठविलसितमध्यायं समाप्यानुबन्धरूपेण पाठान्तरभागो निर्वचनोदाहरणसहितो महामतीनां चित्तविलासोद्योतनाय सूक्ष्मविषयीविवेचनलालसानां हिताय च संप्रयोजितोऽध्यायान्ते यथालब्धग्रन्थपरिकरः।

विजृम्भितं निःश्वसितं मुहुर्मुहुः[1] कथं विधेयस्मरणं पदे पदे
यथा च ते ध्यानमिदं पुनःपुन[2]र्ध्रुवं गताते रजनी विनाविना

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः।
चतुर्व्यवसितं नाम तद्विज्ञेयं बुधैर्यथा॥ ८१

वारणानामयमेव कालो वारणानामयमेव कालः।
वारणानामयमेवकालो वा रणानामयमेव कालः॥ ८२

नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत्।
तन्मालायमकं नाम विज्ञेयं [3]काव्यकोविदैः॥ ८३

यथा—

[4]हली बली हली माली खली माली सली जली।
खलो बलो बलो मालो मुसली त्वभिरक्षतु॥ ८४

[5]असौ हि रामा रतिविग्रह[6]प्रिया
रहःप्रगल्भा रमणं मनोगतम्[7]।
रतेन रात्रौ[8] रमयेत्परेण वा[9]
न [10]चेदुदेष्यत्यरुणः पुरोरिपुः॥ ८५

---

वारणपुष्पाणामयं संबन्ध्ययं कालः शरल्लक्षणः। वारणानां हस्तिनां अनामयं आमयाभावे सति समदत्वे सति वारणानां वारणं निवारणं विद्यते येषां तेषां शत्रूणामयं, कालः कृतान्तोऽथवा। रणानां संग्रामाणां कालः क्षेपः चिन्ताप्रवर्तयितेत्यर्थः।

---

1 ङ - यथाभिधानं च - कथाभिधानं स्मरणे न - तथागता 2 न - भावैः 3 न - पण्डितैर्यथा 4 न - ललीं 5 एतौ द्वौ श्लोकौ ङढदयपफब मातृकास्वेव वर्तेते। एतयोः पूर्वश्लोक एव न - मातृकायां वर्तते। 6 ङ - विग्रहः 7 ङ - सोगतम् ढ - मनोद्गतम् 8 ढ - रात्रिं 9 द - ते 10 द - चेदुदस्यति न - चेदुषस्यति।

सपुष्कराक्षः क्षतजोक्षिताक्षः
क्षरत्क्षतेभ्यः क्षतजं दुरीक्षम्[1] ।
क्षतैर्गवाक्षैरिव संवृताङ्गः[2]
साक्षात्सहस्राक्ष इवावभाति[3] ॥ ८६

एभिरर्थक्रियापेक्षैः* काव्यं [4]कुर्यात्तु लक्षणैः ।
अतःपरं[5] प्रवक्ष्यामि काव्यदोषान् गुणांस्तथा[6] ॥ ८७

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसन्धि [7]शब्दच्युतं वै दश काव्यदोषाः

[8]पर्यायशब्दाभिहितं गूढार्थमिति संज्ञितम्[9] ।
अवर्ण्यं वर्ण्यते यत्र[10] तदर्थान्तरमिष्यते ॥ ८९

लक्षणानां प्राधान्यमित्युक्तपूर्वं तत्तथैवोपसंहरति एभिर्लक्षणैरिति अर्थः क्रियायां रसचर्वणायां युक्तं योगं येषां, विभावादित्वं ह्येतत् प्रसादादीत्युक्तमधस्तात् । अतःपरमिति वक्तव्यान्तरमाह । केषुचित्पुस्तकेषु चैतद्ग्रन्थः पश्चाद्दृश्यते, बाहुल्येन प्रथमं दृश्यत इति तथैव व्याचक्ष्महे । तत्र पादानां वाक्यस्य तदर्थानां च यथा दशरथ इति वक्तव्ये बलात्परिकल्पितेन वस्तुतो पर्यायशब्देनाभिधानं 'अधिकनवविमान' इति । न हि यदृच्छाशब्दाः पर्यायभाजः ।

अर्थान्तरं यथा—"चिन्तामोहमनङ्गमङ्ग तनुते विप्रेक्षितं सुभ्रुवः" इति अत्र कामः स्वीकृतः चिन्तादिशब्देनावर्णनीयमपि वर्णितम् । यत्तु प्रसक्तानुप्रसक्तिकया बहुतराप्रकृतवर्णनं तत्प्रबन्धदोषरूपं सन्धितदङ्गविधानेन पराकृतमिति नेह निरूपणार्हम् ।

1 ङ - दुरीक्षः 2 ढ - संप्रतीक्षः 3 द - अवभासे 4 ङ - कार्यं तु
5 ङ - ऊर्ध्वं 6 भ - समासतः 7 भ - च्युतं च शब्दात् ङ - शब्दाच्च्युतं
8 "पर्याय" इत्यादिपद्यश्लोकाः ङधयोरेव न दृश्यन्ते । 9 च - अभिसंज्ञितम्
10 न - यत्तु ।

* 'क्रियायुक्तैः' इति पाठः स्यात् ।

अर्थहीनं [1]त्वसंबद्धं सावशेषार्थमेव च।
भिन्नार्थ[2]मभिविज्ञेयमसभ्यं ग्राम्यमेव च॥ ९०
[3]विवक्षितोऽन्य एवार्थो [4]यत्रान्यार्थेन विद्यते।
भिन्नार्थं [5]तदपि प्राहुः काव्यं काव्यविचक्षणाः[6]॥ ९१
अविशेषाभिधानं यत्तदेकार्थमिति स्मृतम्।
[7]अभिप्लुतार्थं विज्ञेयं यत्पदेन समस्यते[8]॥ ९२

अर्थहीनं यथा—"अद्यापि स्मरसि रसालसं मनो मे मुग्धायाः स्मरचतुराणि"। अत्रपूर्वापरव्याघातादसंबन्धता। यथा वा "स महात्मा भाग्यवशान्महापथमुपागतः" इति। अत्र हि सावशेषः प्रकरणापेक्षो वस्तुनिश्चयः, अभाग्यवशादित्यपि संभाव्यत्वात्।

भिन्नार्थं त्रिधा—तत्र मृष्यो दूरसंबन्धव्यवधाने सति यत्रार्थो यथा—

ज्वरं भुञ्जीतसञ्जातमलपाकं चिरस्थितम्।
अजादुग्धोदनं हन्यात् त्रिदोषोत्कोपसंभवम्॥ इति

ग्राम्यं यथा— "भद्रे भजस्व मामिदं ते दास्यामि" इति। तृतीयं भिन्नार्थं यथा—"स्याच्चेदेष न रावणः" इत्युक्त्वा, "क नु पुनः सर्वत्र सर्वेगुणाः" इति। उद्दिष्टं ह्यत्र रावणस्यानुपादेयत्वं क नु पुनीरत्येननान्यथाकरणाद्भेदितम्।

एकार्थं यथा—"कुन्देन्दुहारहरहाससितं" इति। एकप्रयोजनं हि सर्वमेतत्। न हि काव्यं शास्त्रवदुपदेश्यं कश्चित्किंचिज्जानीयादिति प्रवर्तते।

अभिप्लुतार्थं यथा—

स राजा नीतिकुशलः सरः कुमुदशोभितम्।
सर्वप्रिया वसन्तश्रीर्ग्रीष्मे मालतिकागमः॥

अत्र प्रतिपादमर्थस्य परिसमाप्तत्वादभिप्लुतत्वं, एकवाक्यत्वेन निमज्जनाभावात्।

---

1 न - असंबद्धं 2 न - अपि विज्ञेयं 3 ढ - विवक्षितान्य भ - अर्थ उद्दिष्टो 4 न - यत्त्वन्यार्थेन भिद्यते 5 ढ - तत्तु ते 6 ढ - विदो जनाः 7 भ - अति न - अवि 8 न - समाप्यते।

न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम्[1] ।
वृत्तभेदो[2] भवेद्यत्र विषमं नाम तद्भवेत् ॥ ९३

[3]अनुपश्लिष्टशब्दं यत्तद्विसन्धीति कीर्तितम् ।
[4]शब्दच्युतं च विज्ञेयमवर्णस्वरयोजनात्[5] ॥ ९४

[6]एते दोषा हि काव्यस्य मया सम्यक् प्रकीर्तिताः ।
गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः ॥ ९५

---

न्यायादपेतं देशकालविरुद्धं कलाशास्त्रादिविरुद्धं च यथा—

सुवीरेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः ॥ इत्यादि ।

विषमं यथा—"अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्" इत्यादि । यदि दोषोऽनेनैव संगृहीतः सन्धानं द्वयोर्नैरन्तर्यं विचारयोगः अन्योन्यलयो वेति त्रिधा तदनुपारूढमयुक्तं पारुष्याद्युत्पादकं वा यत्नापशब्दः स्मृतो मुनित्रयेणादृतः । एतन्मध्ये तु केचित् 'नित्यदोषाः, यथा अपशब्दः, केचिदनित्या यथा—ग्राम्यं हास्यादौ तस्येष्टतमत्वात् । एतदाह यथास्थूलमिति । आनुपूर्व्यं, अव्ययेनाव्ययीभावः तेनोत्तरोत्तरम् । एते दोषाः स्थूलाः यथा च गूढार्थं गूढलेखप्रहेलिका(दि) पताकास्थानकादिषु प्रयोज्यम्, अर्थान्तरमनुवादे, अर्थहीनादि हास्ये, भिन्नार्थं श्रोत्रियादौ वक्तरि, एकार्थं परप्रत्यायने, अभिप्लुतार्थमुन्मादादौ, भिन्नवृत्तं च विसन्धि स्वविषये । एवमेते दोषाः क्रमेणापातविषयाः । इह यतोऽर्थप्रतीतिस्तावदस्ति अपशब्दस्तु दोष एव ततः कस्याश्चिदर्थप्रतीतेरभावात् स हि न कांचिद्भाषामनुपतति सङ्केताभावात्तमर्थं प्रतिपादयेत् ।

अथ गुणेषु प्रतिजानीते—एषां विपर्ययाद्गुणा भवन्ति, एतद्दोषविघात एव गुणो भवतीत्यर्थः । किं अविशेषेण नेत्याह माधुर्यौदार्यलक्षण-

---

1 भ - नोपपन्नं भवेत्तु यत् । न - परिवर्तितम् 2 ढ - भेदे 3 द - अनुपारूढशब्दश्च विसन्धिः परिवर्जितः । 4 न - शब्दाच्च्युतं ढ - शब्दहीनं 5 च - अशब्दस्य च योजनात् 6 ङ - एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः । एत एव विपर्यस्ताः गुणाः काव्येषु कीर्तिताः ॥ (न - पादे, द - प्रकीर्तिताः ।

श्लेषः प्रसादः समता समाधि-
माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च
कान्तिश्च काव्यस्य गुणा दशैते*॥ ९६

[1]ईप्सितेनार्थजातेन संबद्धानां परस्परम्।
श्लिष्टता या पदानां स श्लेष इत्यभिधीयते॥ ९७

---

मङ्गो येषाम्। एतदुक्तं भवति—एतद्दोषविहीनं श्रुतिसुखं दीप्तरसं च यदि भवति तावता गुणान्तरैरलङ्कारैश्च हीनमपि काव्यं लक्षणयोगाव्यभिचारीत्युक्तम्।

अन्येऽपि गुणाः सन्तीति दर्शयति श्लेषः प्रसाद इत्यादि। काव्यस्येति पदस्य वाक्यस्य तदुभयगतस्यार्थस्य वेत्यर्थः। तत्रश्लेषमाह ईप्सितेनार्थजातेनेति। अर्थभागानां कविसमुत्प्रेक्षितया परस्परसंबद्धया योजनया संपन्नं यदीप्सितमर्थजातं तेनोपलक्षितार्थस्योपपद्यमानस्योपपद्यमानतात्मा गुणः श्लेषः। यथोदाहृतं वामनेन—

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य पिहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥

अत्र मनोरथातीतोऽप्येककालनायिकायुगलहृदयग्रहणलक्षणार्थस्तथोपपादितो येनासंभावनास्पदं न भवति तेन कुटिलोऽप्ययं क्रमो न हृदये उल्बणत्वं भजते मज्जति हृदये यतः सर्वस्येति।

---

1 गुणलक्षणानि भमातृकायां न सन्ति।

* गुणानां लक्षणश्लोकाः भमातृकायां न वर्तन्ते। जादियान्तासु सर्वासु प्रसादमाधुर्यसौकुमार्यकान्तिलक्षणानामेव पाठे संवादित्वं दृश्यते। पाठद्वैविध्यं क्वचित् त्रैविध्यं च विद्यते। वृत्तिकारेण श्लेषस्यैव पाठान्तरं सूचितम्। हेमचन्द्रेण तदन्यानां भरतमतमनुवदता तदन्यपाठ एव स्वीकृतः, सर्वेश्वरेण तु तथैव पाठान्तराण्येव गृहीतानि, अपि तु कान्त्यौदार्यलक्षणयोर्विपर्यासग्रहणं विशेषः। मम्मटादयो गुणत्रयत्ववादिनः भोजविद्यानाथादयश्चतुर्विंशतिगुणानूचुः। परे त्वालङ्कारिका वामनमतमनुसृताः॥

[विचार[1]गहनं यत्स्यात्स्फुटं चैव स्वभावतः ।
[2]स्वतः सुप्रतिबद्धं च श्लिष्टं तत्परिकीर्तितम् ॥] १८
अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसंयोगात्प्रसादः [3]स तु कीर्त्यते ॥ १९

अथ शब्दगुणमाह नित्यार्थे पदानां श्लिष्टता परस्परं योनिः सन्धिबन्धनतयानेकमेकपदमिव भाति तदेव मास्तृण्यमुच्यते । अतश्च पदान्तरपाठस्यावश्यापेक्षतायां यथा ब्रह्मसूत्रमिति । उक्तं चैतच्छन्दोऽध्याये । तथा सन्धीयमानयोस्तथासन्धेः साजात्यं सावर्ण्यं च संपद्यते वस्त्रखण्डयोरिव सूत्रस्येव च । यथा—"अस्त्युत्तरस्यां दिशि देवतात्मा" (कुमा १-१) अस्ति शब्दस्योत्तरशब्दस्य सन्धीयमानयोस्तकारेण तकारेण संयोगे तयोश्च साजात्यं, 'स्यान्दिशि' इत्यनयोः सन्धेर्नकारस्य वर्ग्यत्वाद्दकारेण सावर्ण्यं, 'दिशि देवता' इति नैरन्तर्यसन्धौ दकारेण साजात्यं, इकारैकारयोस्तालव्यांशत्वेन सादृश्यं, 'देवतात्मा' इत्यत्र तकारेणाकारेण च । न चानुप्रासमात्रमेतत्, एकपदानुप्रासेऽपि प्रामाण्यभावात्—'इन्दिन्दिराणां ललितो निनादः' इत्यनुप्रासे च सावर्ण्येनोपयोगीति । अन्ये पठन्ति—विचारगहनं यत्स्यात् स्फुटं चैव स्वभावतः । इत्यर्थश्लेषः वक्रघटमानं वेत्यर्थः सुप्रतिबद्धश्च श्लेष इति पदश्लेषः ।

प्रसादमाह—अप्यनुक्तो बुधैरिति । यत्रार्थे अनुक्तेऽपि बुधैः कष्टकल्पनया अव्याख्यातोऽप्यर्थः प्रयोजनं स्वयं जायते सोऽर्थो वैमल्याश्रयोऽपि वैमल्यमुपचारात् सोऽर्थो वा काव्यस्य वैमल्यं स्वयं जानंश्चानुपयोगिपरिवर्जनात् । वैमल्यशब्दवाच्याज्जलस्येव पांसुभिरसंपर्काद्भवतीति वैमल्यमर्थस्य प्रसादः । यथा—"सवर्णा कन्यका रूपयौवनारम्भशालिनी" इति विवाह्यत्वं प्रापणीयताहृद्यत्वं संभोगयोग्यता, गृहस्थसहधर्मचारिणीत्वमित्युपयोगी सर्वोऽयमर्थः । तेनाबुध्वैतदुदाहरणान्तरं वृथा भ्रमणम्—"आविलपयोधराग्र" मिति (विक्रमो ५-८) एतदपि तूदाहरणं पददूषणं तु सम्यगज्ञाने प्रयुक्तम्(?) । अप्रसादस्तु "उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदम्" अत्र विमलमन्यथोपयोगात् पांसुरिव जलेऽत्राप्रसन्नतां करोति । सुख इति न प्रयत्नमपेक्षते ।

1 ड - ग्रहणं युक्त्या 2 द - भ्रान्तमप्रति न - स्वन्तमप्रति 3 ड - परि

नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः।
दुर्बोधनैश्च न कृता समत्वात्समता मता॥ १००

यः शब्दार्थो यः संयोगः शब्दविषय इत्यर्थः, कलामात्ररूप एव यत्र सन्धिः अत एव शैथिल्यात्मा स शब्दगुणः प्रसादः। प्रसन्नता स्फुटत्वं लक्षणीय-विभागता पदानाम्। यथा—

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्। *

इत्यादि। अत्र निरन्तरतां मुक्त्वा नान्योन्यलयो नान्योन्यापत्तिसन्धिरस्तीति शिथिलता। एकश्च गुणः कोऽपि शोभत इति स्वानुभवसिद्धः, तेन व्यावृत्तात्मेति गाढता कृता, ककुदं दत्त्वेति चापरः सवर्णपक्षे।

समतामाह—नातिचूर्णपदैरिति। शब्दानां समत्वात्समः चूर्णपदैरस-मासरचना यत्र सातिशया न भवति, अतिशयश्च प्रतियोगिनमपेक्षते इति। दीर्घसमासोऽत्यन्तसमासश्च विषमता, तद्विपर्ययेण समता उपक्रान्तमार्गापरि-त्यागरूपेत्युक्तं भवति। यथा—

गाहन्तां महिषा निपानसलिलैः शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥ इति

(अत्र) अवान्तरवाक्ये समस्तद्विपदा हि नातिदीर्घा वृत्तिः।

"प्रसीद चण्डि त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः।
किमित्थं—

इति चूर्णपदैरुपक्रम्यासमाप्त एव वाक्यान्तरे वाक्यार्थेऽपि दीर्घः समासः कृतः—

उत्कम्पितपीवरस्तनद्वयोन्मिषत्सुप्तविलासमास्यते"॥

पूर्वत्र ('गाहन्ता' मित्यत्र) त्ववान्तरार्थसमाप्तावर्थान्तरोपक्रम एव समासेन 'छायाबद्धकदम्बक' मित्युपक्रान्तोऽपि न चैत्यात्कूपपतनमिव चूर्णपदं प्रयुक्तं 'मृगकुल' मिति। सेयं समता जाता शब्दगुणा अर्थोऽपि समत्वात्, किं तत्समत्वं आह व्यर्थाभिधायिभिरिति निष्प्रयोजनमर्थं येऽभिदधति शब्दानां

* मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥ रघु (३-७०)।

[अन्योन्यसदृशा यत्र तथा ह्यन्योन्यभूषणाः ।
अलङ्कारा गुणाश्चैव[1] समाः स्युः समतामताः[2] ॥][§] १०१
अभियुक्तैर्विशेषस्तु[3] योऽर्थस्येहोपलक्ष्यते[4] ।
तेन चार्थेन[5] संपन्नः समाधिः परिकीर्तितः ॥ १०२

न त्वेतद्वैमल्यमिति प्रसादेन निरस्तम् । नैतत्, नहि सर्वथा निष्प्रयोजनता, अपि तु सदपि प्रयोजनं दुर्बोधं, तदाह—दुर्बोधनैरिति । अभिधीयतेऽस्मै इत्यभिधानं प्रयोजनम् । यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमाः
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥

इत्यत्र ऋतुसन्धिवर्णनप्रक्रमे मलयमरुतः प्रक्रमं भिनत्ति न च सर्वथा निरर्थको विप्रलम्भोद्दीपनत्वात् । किं तु प्रक्रमं स्फुटं न पुष्णातीति विषमता । समता तु "मनसि च गिरं गृह्णन्तीमे किरन्ति न कोकिलाः" इति (द्वितीयपादस्थाने यदि पठेत् )।

समाधिमाह—अभियुक्तैर्विशेषस्त्विति । यस्यार्थस्य द्वितीयस्यार्थस्य अभियुक्तियुक्तैः प्रतिभातिशयवद्भिः विशेषो अपूर्वः स्वोल्लिखित उपपद्यते स-समाहितमनःसंपाद्यविशेषत्वादर्थो विशिष्टः समाधिः, यत्र कवेस्तत्पूर्विकयो-ल्लेखस्तत्सर्वमिहोदाहरणम् । यथा—

आश्वपैहि मम सीधुभाजनाद्यावदग्रदशनैर्न दश्यसे ।
चन्द्र मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥ इति ।

अयोनिरन्यच्छायायोनिश्चेति, एतत्तदेवज्ञानं विषयः न चानेकं किंचित् सारस्वतस्य हि सर्वोऽर्थमनिमित्तत एव । तदन्यस्य सर्वोऽन्यच्छायायोनि । व्यक्तभाव्यवास्यत्वादपि कविहृदयगतप्रतिभातिशयतारतम्यादनवस्थितम् (?)।

शब्दगुणश्च समाधिः, तमाह तेन चेति । समाधिशब्दस्य योऽर्थः परि-

1 द - सा बुधैः ड - समा स्यात् 2 म - तु सा ड - यथा 3 न - विशेषैस्तु 4 द - एवोपलभ्यते । 5 भ - सोऽर्थोऽभि

§ अयमेव पाठः 'परस्परविभूषणगुणालङ्कारप्रायः समं' इति वदता हेमचन्द्रेण "शब्दार्थौ समतान्योन्यं सालङ्कारौ सुसंस्कृतौ" इति सर्वेश्वरोण च गृहीतः

[[1]उपमाद्युपदिष्टानामर्थानां यत्नतस्तथा ।
प्राप्तानां [2]चापि संक्षेपात्समाधिर्निर्णयो यतः[3]] ॥

हारलक्षणस्तेन यः परिकीर्तितः परितः समन्तादाक्रान्त्या उच्चारणे संपन्नः स च समाधिः । आक्रान्त्या उच्चारणे आरोहावरोहक्रममेव आक्रमणेन गतितुल्यम् । आरोहश्चोर्ध्वगमनद्वारः प्राणमारुतरूपाया उच्चरूपः, अपक्रमणमवरोहो विपर्ययः । उच्चत्वं स्थानकरणवशात्, बाह्याभ्यन्तरप्रयत्नवशाच्च । तथा हि—

निरानन्दः कौन्दे मधुनि †परिभुक्तोज्झितरसे
(न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि चरति
स्मरलक्ष्मीलीलाकमलमधुपानं मधुकरः) ॥

तत्र नकारादन्त्यान्मूर्धन्यो रेफ उच्चस्थानस्थितो यद्यपि दन्त्यः तथापि संयोगो निरन्तरप्रयत्नाधिक्येन विवृततमेन चाकार द्वयेन द्विवारप्रयत्नकेन च जिह्वामूलीयेन चोच्चत्वभाजा आरोहणमस्फुटीकरणमिति नशब्दोऽवरोहणं संपन्नमप्यसंपन्नकल्पम् । आरोहणसौकर्यायैव प्रत्युत मध्ये ह्यत्र का विश्रान्तिः । अभावे उच्चतमसङ्कलनसोपानारोहखेदायैव भवति निरास्वाद्यः कौन्द इति यथा एव निरानन्द इत्यत्र यावन्महाप्राणो जिह्वामूलीयश्च श्वासानुप्रदानो द्विवारयुक्तस्तावदारोहयत औकार आकारमवेक्ष्य रूपविवृत औकारतोऽपि नकारः ततोऽपीकारोकारयोः ऊनं विवृतत्वं, अकारस्तु संवृतः इत्यवरोहः । औकारस्तु मध्येऽवरोहसौकर्यायैव दूरारोहाद्धि दूरावरोहणं चेति चूलिकायाः कूपपतनकल्पम् । खेदो यथा—

"कुर्वाणाः परमं महच्च मनस" इति आकारोपध्मानीयेभ्यो झटिति संवृतेऽकारे निपातनात् । "निवेशः स्वःसिन्धोः"—इत्यत्र क्रमेण विवृततरः स्पर्श इति क्रमेणारोहः । "तुहिनगिरिवीथीषु जयति"—अत्र विवृतेभ्यः उकारादिभ्यः संवृतेऽकारद्वये पातः इकारस्त्वन्यत्वान्न च विश्रान्तिस्थानमिति नारोहः । यदि वा (सि)न्धोरिति विवृततरापेक्षया आरोह-

1 ढ - उपमित्युपदिष्टानां ड - उपमात्यपदिष्टानां 2 ढ - चातिसंयोगात् ड - चातिसंयोगः 3 ड - परिकीर्त्यते ।

† विधुरो बालवकुले—पाठा.

**बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।**
**नोद्वेजयति [1]यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥ १०४**

संस्कारे उकारेऽवरोहबुद्धिरेव स्फुटत्वेऽवरोहः । जयतिमपास्यं तदयमिति पाठः (?) अनुस्वारो हि संवारप्रयत्नः । "नराः शीलभ्रष्टाः व्यसन इव-मज्जन्ति तरवः" इति अकार इकार अकारेभ्योऽवरोहमयेभ्यो विवृते इकारे आरोहः, अन्ते च विसर्जनीये आरोह एव । तेन स्वभावप्रतिभादर्शनानुविद्धा भगवती वाणी स्वरसोपनिपतिता स्वरसंभारप्रभावानुरोधेनैवारोहावरोहक्रमं भजते । प्रतिभादृष्टिशून्यत्वात् अन्ध पदवदारोहादि न भजेत् ।

नन्वियता पाठसौकर्यं स्यात्, श्रोतुस्तु किमायातम्, अनभिज्ञो देवानां प्रियः, यथा हि कर्कशशर्करानिकरकण्टकिते देशे दुस्सञ्चरे संचरज्जनं पश्यन्त्या अपि सुकुमारहृदयायाः प्रमदायास्तदात्मानुप्रवेश इव जायमानं खेदमतित-रामादत्ते प्रहारपातादौ वा, तथा सहृदयस्य स एव मार्गः, सुकुमारता हि वैमल्यापरपर्याया सहृदयत्वं हृदयस्य हि कविहृदयतादात्म्यापत्तियोग्यतैव उत्कर्षः । तत एवोक्तं—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ (ध्वन्या-१-७) इति ।

अभिधानकोशमपि हि पठतां सुप्तिङ्विभक्तीश्च विदुषामपि न काव्यतत्त्वाव-बोधः तस्माद्वर्णोच्चारणप्रयत्नेन परुषपठनस्पर्शजनितो यः खेद उच्चारयितुः स एव श्रोतुरपि पारुष्यमाधत्ते । "नीरन्ध्यध्वब्धूनिर्नन्ध्यनुगतप्राणैकबन्ध-क्रमः" (?) इत्यादौ । वर्णगतं च लालित्यपारुष्यादि पुष्कराध्यायेऽपि (अ-३४) वक्ष्यते । अन्यैरप्युक्तं "तेन वर्णा रसच्युतः" इत्यादि । स्वभावतो हि केचन वर्णाः सन्तापयन्तीव निकृन्तन्तीव रेफककारादय इव परुषवृत्तिपूर्वकाः, अन्ये तु निर्वापयन्तीवोपनागरिकोचिताः । लोकगोचर एवायमर्थः स्वसंवेद्योऽपीति न वितत इत्यास्तां तावत् ।

माधुर्यमाह—बहुशो यच्छ्रुतमित्यादि । यदिति यस्माद्धेतोर्वाक्यं श्रुतं संशयविपर्ययोरास्पदं न भवतीति तन्माधुर्यम् । द्राघीयसि समासे तावत्रयं भवत इति तद्विरह एव माधुर्यं शब्दगुण इत्युक्तं भवति । यथा—"गाहन्तां

1 द - तस्मात् ।

समासवद्भिर्बहुभि[1]र्विचित्रैश्च पदैर्युतम्।
सानुरागैरुदारैश्च तदोजः परिकीर्त्यते॥ १०५
[*[2]अवगीतोऽपि हीनोऽपि स्यादुदात्तावभासकः[3]।
यत्र [4]शब्दार्थसंपत्तया[5] तदोजः परिकीर्तितम्[6]॥] १०६

महिषा निपानसलिलं" (शाकु २-६) इत्यादि। पुनः पुनरप्युक्तमर्थजातं यस्माद्धेतोरपनीतमवगाहनेन वैरस्येन तद्वचनवैचित्र्यात्मकं माधुर्यमर्थगुणः वचनान्तराभिधेयतया हि स एवार्थो विचित्रो भवति। यथा—

रसवदमृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम्।
(सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात्॥)

अत्र रसवदमृतमिति य एवार्थः स एव कः सन्देह इत्युक्तया विचित्रया परिनिश्चयस्थैर्याभिधायिन्या निश्चयीकृतः। निश्चयस्थैर्यमेव च नान्यथेतिवचनान्तरेण विपर्ययनिराकरणसंभावनान्तरनिरासं च क्रमेण विदधता विचित्रीकृतमिति मधुरोऽयमर्थः।

ओजो लक्षयति—समासवद्भिर्बहुभिरिति। बहुभिरेकसमाससंज्ञायुक्तैरथ च विचित्रैर्यमकैः पदैर्यदुक्तं यो बन्धस्तदोजः। यथा—

मन्थायस्तार्णवाम्भःप्लुतिकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितनभोदुन्दुभिस्ताडितोऽसौ॥ (वेणी) इति

यथा सानुरागैर्यत्र वर्णो वर्णान्तरमपेक्षते तत्र सानुरागत्वम्।

1 च - विविधैः 2 ड - अवगीताविहीनो ढ - अवगीतविहीनो 3 ड - भाषकः 4 द - शब्दो 5 ड - संपत्तिः 6 न - परिकीर्त्यते।

* "अवगीतस्य हीनस्य वा शब्दार्थसंपदा यदुदात्तत्वं निषिञ्चन्ति कवयस्तदोजः" इति वदता हेमचन्द्रेणायमेव पाठो गृहीतः।

सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं [1]सौकुमार्यं तदुच्यते ॥ १०७

"विलुलितमकरन्दा मञ्जरी नर्तयन्तो"

अत्र र् इति शब्दो न्दशब्दं स्वगुरुत्वायापेक्षते, न इत्ययंशब्दो य इत्ययं च न्ते शब्दं च, नो इत्ययं च न्ते गुरुत्वात् । स्वविश्रान्तिजनितकालोपचयलभ्यं गुरुत्वं नाकांक्षतीति द्वितीयपादपाठं समनन्तरमेवापेक्षते ।

"विलुलितमधुधारा मञ्जरीर्लोलयन्तः ।"

इति पाठे धाशब्दो लोशब्दो तिशब्दश्च जात्यापेक्षत इति । स तदेव गाढत्वमुच्यते निबिडावयवतैव समासेन संक्षेपेण युक्तानि पदानि यत्रार्थभूयानिति संक्षेपो नामार्थगुण ओजः ।

ओजस्वी किमतोऽपि भूयः समाक्षिपति, तथा एकमपि वस्तु उदारैर्बहुभिः पदैरुपनिबध्यते विस्तरात्मकत्वमप्योजोऽर्थगुणः । संक्षेपो यथा—

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ (कुमा - ६ - ९३)

विस्तरस्तु—

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् । (रघु २ - ७५)

सौकुमार्यमाह—सुखप्रयोज्यैरिति । क्वचित्पदस्य स्वयं पारुष्यं भवति यथा द्राढा अजड्ढा निर्द्वैतं†, सद्दक्त्वव्यवसितिः, इति । क्वचित्संहिता—दर्व्यारूयार्वीविधूयते । तदुभयरहितत्वं सौकुमार्यं शब्दगुणः । यथा—"गाहन्ता"मित्यादि । अत्र च यद्वक्तव्यं तत्समाधिलक्षणे निर्णीतम् । परुषेऽपि चार्थे सुकुमारेणार्थेन या संपत्तिस्तदर्थगुणः सौकुमार्यमपारुष्यरूपम्, एकाकिनि देवतासहाय इति, मृते यशःशेष इति, जडे देवानांप्रिय इति ।

---

1 द - सुकुमारं ।

---

† निद्रानं निर्द्वैतं—इति वामनः ।

सुप्रसिद्धाभिधाना तु लोककर्मव्यवस्थिता।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥
[[1]यस्यार्थानुप्रवेशेन मनसा[2] परिकल्प्यते।
अनन्तरप्रयोगस्तु सार्थव्यक्तिरुदाहृता[3] * ॥] १०९
दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम्।
अनेकभावसंयुक्तमुदारत्वं[4] प्रकीर्तितम् ॥ ११०

अर्थव्यक्तिमाह—सुप्रसिद्धाभिधानेति, प्रसिद्धमभिधानमभिधाव्यापारो यस्यां काव्यक्रियायां सार्थव्यक्तिः शब्दगुणः। यथा "गाहन्ता" मिति। विपर्यये तु किरातादिनिदर्शनं यच्चार्थे वर्ण्यते स तथैव लोके प्रसिद्ध इत्यर्थस्य गुणोऽर्थव्यक्तिः। यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः।
गोरोचनाहरितबभ्रुबहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥

उदारतामाह—दिव्यभावपरीतं यदिति। यत्र मानुषोचितमपि दिव्यतया करुणादियुक्तमपि शृङ्गारेण विस्मयस्थानमप्यद्भुतेन युक्तं वर्ण्यते तद्गतैर्वा विभावानुभावादिभिः तदुदीर्यं तत्रौदार्यमर्थगुणः। एतदेवाग्राम्यत्वमित्यन्यैरुक्तम्। ग्राम्यं हि वस्तु यथास्थितमयोजितरचनाविशेषं प्रसिद्धिमात्रप्रमाणमुच्यते, ततोऽन्यदग्राम्यम्। यथा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वां
अतः शेषं चेत्स्याज्जितमथ तदानीं गुणितया ॥ इति।

यत्राद्भुतेन यत्कृतोऽर्थः अनेकभावसंयुक्तमिति शब्दगुणस्य लक्षणम्, एकभाषाचित्रत्वादनेकताचित्रत्वं पदान्तस्यैकस्यानेकव्यक्तिरक्षरसंख्यावैचित्र्यं सन्धा-

1 द - यस्यार्थो 2 द - मनसः 3 ड - उदाहृता ढ - प्रकीर्तिता 4 च - उदारं तत्।

* हेमचन्द्रेणायमेव पाठोऽनूदितः।

[अनेकार्थविशेषैर्यत्सूक्तैः सौष्ठवसंयुतैः[1] ।
[2]उपेतमतिचित्रार्थैरुदात्तं तच्च कीर्त्यते]* ॥ १११
[3]यन्मनःश्रोत्र[4]विषयमाह्लादयति हीन्दुवत्[5] ।
[6]लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥ ११२

नसाजात्यं च पिण्डीबन्धनृत्तसादृश्येन, तत्र हि गुल्मजातशृङ्खलिकादिभेदेनेत्थंभूतो नर्तकीसंनिवेशो भरते तदुक्तं विकटत्वं नरीनृत्यमानत्वमिति पदानामौदार्यमिति । यथा—

स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झटिति रणितमासीत्तत्र चित्रं कलं च ॥

अत्र प्रथमपादे एकाक्षरत्र्यक्षरचतुरक्षरमिति विचित्राणि पदानि, रेफे तद्द्वितीयपदाक्रमणाद्व्याप्तिः, तकारयोः सन्धानात्सन्धिसाजात्यं, तकारसकारयोः संस्थाननयैर्नैकव्यं च । विपर्ययस्तु—

"चरणकमललग्नैर्नूपुरैर्नर्तकीनां झटिति रणितमासीन्मञ्जु चित्रं च तत्र"

अत्र द्वे अपि पदे त्र्यक्षरे । तत्रैवेदं भाषितविचित्रत्वम् । यथा—

"अथ यदि तव वक्त्रं चण्डि भूयोऽपि नाम"

इति न हृद्यं, "रणितमासीन्मञ्जु चित्रं च तत्र" इति तकारमकारयोरसाजात्यं सकारमकारयोश्च संस्थानत्वमिति ।

कान्तिमाह—यन्मनः श्रोत्रविषयमिति । यन्मनोविषयमाह्लादयति यथा शृङ्गारविभावरूपं लीलादिचेष्टालङ्कारसुन्दरं काव्यार्थरूपं तत्कान्तिगुणयुक्तं तदेव दीप्तरसत्वमित्युक्तमन्यैः ‡ । विभावादीनां दीप्तत्वमिति यावत् । यथा—

---

1 द - संश्लिष्टैः   2 द - उपेतमनतिग्राह्यैरुदारं   3 ड - यो मनःश्रोत्रविषयः 4 द - जननं   5 ड - प्रसादजनको भवेत्   न - प्रह्लादजननं भवेत्   द - प्रह्लादजननं तथा   6 ड - शब्दबन्धोऽत्रयोगेन स कान्त इति भण्यते   न - शब्दबन्धार्थयोगेन तत्कान्तिरिति भण्यते ।   द - शब्दनत्वार्थसंयोगे तत्कान्तिरिति कीर्त्यते ।

* "बहुभिः सूक्ष्मै (क्तैः?)श्च विशेषैः समेतमुदारत्वमिति भरतः" इत्युदाहरता हेमचन्द्रेणायमेव पाठो गृहीतः ।

‡ वामनभोजादिभिः ;

एवमेते ह्यलङ्कारा गुणाश्च दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् ॥ ११३
लघ्वक्षरप्रायकृतमुपमारूपकाश्रयम् ।
काव्यं कार्यं तु [1]नाट्यज्ञैर्वीररौद्राद्भुताश्रयम् ॥ ११४
गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्वीररौद्राभ्यां [2]यदाधर्षणजं भवेत् ॥ ११५
[3]रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम् ।
शृङ्गारे तु रसे कार्यं मृदुवृत्तं तथैव च[4] ॥ ११६

प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्यात्मना ।
तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥

अत्र ह्रीर्ष्यानुभावस्य, रत्यनुभावस्य, औत्सुक्यानुभावस्य च दीप्तत्वमित्यर्थ-गुणः श्रोत्रविषयीभूतमिव यदाह्लादि काव्यं तत्कान्तिर्नाम शब्दगुणः ।

कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः—

अत्र हि समासवत्यपि रचना [न] श्रोत्रेन्द्रियैकतानतामावहति । तदेतल्लोके मधुरकाव्यमिति प्रसिद्धम् । माधुर्यमभ्यस्तपदत्वमुक्तम् । अन्ये त्वौदार्यकान्त्यो-र्लक्षणद्वयं विपर्यासेन पठन्ति ।

एतदुपसंहरति - एवमेत इति । चकाराच्छन्दांसि वृत्तानि जातयश्च । एषामिति [नि] वृत्तच्छन्दः प्रभृतीनां दोषान्तानाम् । अनित्यदोषा हि विनि-युज्यन्तेऽपीत्युक्तम् ।

लघ्वक्षरप्रायेति यत्र अतनुत्वावाही चित्तवृत्तिपरिस्पन्दः, तत्र लघ्वक्षर-प्रधानं वृत्तं वीरादावुपमारूपके, मसृणवाहिनि तु हृदयस्पन्दे गुर्वक्षरप्रायं करु-णादौ । रौद्रादावपि कदाचित्तद्भवति । यदा विलम्ब्य परखलीकारं

1 द - शास्त्रज्ञैः 2 ढ - यथा 3 सार्धः श्लोको द - मातृकायां न वर्तते ।
4 ढ - काव्यं स्यान्नाटकाश्रयम् ।

उत्तरोत्तरसंयुक्तं वीरे[1] पाठ्यं तु यद्भवेत् ।
जगत्यातिजगत्या तु संकृत्या चैव योजयेत्[2] ॥ ११७

[3]युद्धसंफेटयोस्तज्ज्ञैरुत्कृतिः संप्रकीर्तिता ।
करुणे शाक्करी चैव[4] तथा चातिधृतिर्भवेत्[5] ॥ ११८

यद्वीरे कीर्तितं छन्दस्तद्रौद्रेऽपि प्रयोजयेत् ।
शेषाणामर्थयोगेन छन्दः कार्यं प्रयोक्तृभिः ॥ ११९

[6]यच्छन्दः पूर्वमेवोक्तं विषमार्धसमे समम् ।
[7]उदारमधुरैः शब्दैस्तत्कार्यं तु रसानुगम् ॥ १२०

शब्दानुदारमधुरान् प्रमदाभिधेयान्[8]
[9]नाट्याश्रयासु कृतिषु प्रयतेत कर्तुम् ।
तैर्भूषिता भुवि विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ १२१

स्मृत्वा ब्रवीति "कर्ता धूतच्छलानां" इति तथा "यो यः शस्त्रं बिभर्ति" इत्यादौ । अत एव भयानके हास्ये शान्ते वा यथायोगं संवेदनस्पन्दताचर्व्यमाणस्वाद्यताश्चर्यकृतो विभागो वृत्तानां मन्तव्यः । *उदारमधुरैरिति । औदार्यं शब्दगुणो दीप्तेषु प्राधान्येन तदनुयायि च गुणान्तरं माधुर्यं, स्वानुयायिगुणसंहितमसृणेषु रसेषु । अर्थगुणास्तु यथायोगं सर्वत्र, तदाह प्रमदाभिधेयै-

1 ड - काव्यं 2 ड - तद्भवेत् 3 ड - तथैव युद्धसंफेटावुत्कृत्यां संप्रकीर्तितौ न - तथैव युद्धसंस्फोटावुत्कृत्यां संप्रकीर्तितम् 4 ड - ज्ञेया 5 द - स्मृता 6 द - ये चार्थाः ड - ये बन्धाः पूर्वमुद्दिष्टा विषमार्धसमा समा । 7 ड - उदारशब्दैर्मधुरैः कार्यास्तेऽर्थवशानुगाः 8 न - प्रमदाभिनेयान् 9 ड - नाट्याश्रयान् द - नाट्याश्रितान् ।

* अयं श्लोको भमयोर्विना सर्वासु मातृकासु ह्रस्वदीर्घाद्यक्षररूपनिरूपणानन्तरमेव वर्तते । सर्वत्र "शब्दानुदारमधुरान् प्रमदाभिधेयान्" इति द्वितीयान्तपाठ एव विद्यते न तु तृतीयान्तः ।

त्रिविधं ह्यक्षरं[1] कार्यं कविभिर्नाटकाश्रयम् ।
[2]ह्रस्वं दीर्घं प्लुतं चैव [3]पदबन्धसमाश्रयम्[4] ॥ १२२

एकमात्रं भवेद्ध्रस्वं द्विमात्रं दीर्घमुच्यते ।
प्लुतं चैव त्रिमात्रं स्यादक्षरं वर्णसंश्रयम्[5] ॥ १२३

स्मृते चासूयिते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥ १२४

आकारस्तु स्मृते कार्य [6]ऊकारश्चाभ्यसूयिते ।
परिदेविते च ह्राकार ओंकारोऽध्ययने तथा[7] ॥ १२५

ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
[8]काव्यबन्धेष्वशेषेषु ह्यक्षराणि प्रयोजयेत् ॥ १२६

चेक्रीडितप्रभृतिभिर्विकृतैश्च शब्दै-
[9]र्युक्ता न भान्ति ललिता भरतप्रयोगाः ।
[10]यज्ञक्रियेव रुरुचर्मधरैर्घृताक्तै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥ १२७

रिति । प्रमदो हर्षः हर्षजनको गुणसाकल्यवानभिधेयोऽर्थो येषां भावार्थो हृदयगतोऽभिप्रायः क्रियाविशेषश्च तं दर्शयति स्मृते चेत्यादि । एतदेव च क्रमेण विभजति आकार इत्यादि । द्वावेतावनुस्वारेणानुनासिक्येन वा युक्तौ कार्यौ आण्डदण्डादि । ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् । काव्यबन्धेष्वशेषेष्विति वचनादन्यत्र विषये दूराहूत्यादिषु प्लुत उक्तः तत्रासौ प्रयोज्य एवेति दर्शितम् । चेक्रीडितं यङन्तम् । आदिग्रहणेन ण्यन्तसमन्ताः (सन्नन्ताः ?) ।

1 ड - काव्ये विज्ञेयं 2 न - प्लुतं ह्रस्वं च दीर्घं च 3 ड - रसभावविभावकम् 4 ड - इष्यते 5 ड - स्वरयोजनम् 6 च - हुंकारः 7 द - चाप्यधीतिनः 8 द - एतानि काव्ययोगेषु त्वक्षराणि निवेशयेत् ड - काव्ययोगेषु सर्वेषु ह्यक्षराणि तु योजयेत् (न - पाठ्य) च - काव्ययोगेष्वक्षराणि यथाशोभं निवेशयेत् । 9 द - मुक्ता 10 ड - कृष्णाजिनाक्ष ।

[[1]मृदुललितपदार्थं गूढशब्दार्थहीनं
[2]जनपदसुखभोग्यं [3]युक्तिमन्नृत्तयोज्यम् ।
बहुकृतरसमार्गं[4] सन्धिसन्धानयुक्तं
भवति [5]जगतियोग्यं नाटकं प्रेक्षकाणाम् ॥] १२८

इति भारतीये नाट्यशास्त्रे वागभिनये काव्यलक्षणो नाम षोडशोऽध्यायः[6] ॥

एते नटोचिताः प्रयोगाः न भान्ति । ते यतो ललिता यथा वेश्यापरिग्रहे द्विजैर्यज्ञक्रिया मृगाजिनदण्डकमण्डलुघृताभ्यङ्गादि संभवद्भिरपि न भाति । एवं तद्व्याख्याने रौद्रादिस्वविषये यत्पुरुषस्याभ्यनुज्ञानं तद्वियुक्तं स्यादितीत्थं व्याख्या—ललिताः सुकुमारप्रयोगास्ते परुषैः पदैर्न भान्तीति विशेषनिषेधः शेषाभ्यनुज्ञापक इति न्यायादन्यत्र तत्प्रयोग इत्युक्तं भवति । तथा हि—"वयोद्वितीयाः सरिति सगेश्रम (?)" इत्येवमादिरपि विधिप्रयोज्य एव, "आख्यातामर्षतर्ष्यं" इत्यादौ । एतदेव साधर्म्यवैधर्म्यद्वारेणोपपादयति वेश्या यथा मृगचर्मघृताभ्यङ्गदण्डादियुक्तैर्द्विजैर्न शोभते । वैधर्म्येण दृष्टान्तमाह यथा तैरेव यज्ञक्रिया भाति न तथा वेश्या तदङ्गत्वात् । बहुव्रीहेर्वा यज्ञक्रियापत्न्यप्युच्यत इति शिवम् ॥

इति षोडशमध्यायं ग्रन्थनिर्ग्रन्थिकं व्यधात् ।
यशोराशेर्यशोरागनाम्नो दौहित्रदेहजः ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यां लक्षणा-
लङ्कारदोषगुणाध्यायः
षोडशः समाप्तः ॥

---

1 अयं श्लोको नभमासुविना सर्वासु मातृकासु वर्तते, प्रक्षिप्तइव भाति
2 ड - बुधजन 3 ड - बुद्धि प - नृत्तयोग्यम् 4 ड - रसकृतमार्गं 5 ज - सुकविकाव्यं नाट्यकाले मनोज्ञम् 6 चभम संज्ञासु विना सर्वासु सप्तदशोऽध्यायः द - मातृकायामध्यायश्लोकसंख्या १२८ - आदितः २६१८ ॥ इतिं च वर्तते ।

# नाट्यशास्त्रम्

## षोडशोऽध्यायः ।

### अनुबन्धः ।

भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्त्यभिप्राय एव च ॥ १

समस्तार्थालङ्कारवर्गस्य बीजभूताश्चमत्काराः कथाशरीरवैचित्र्यदायिनो वक्रोक्तिरूपा लक्षणशब्देन व्यवह्रियन्ते । लक्षणानि गुणालङ्कारमहिमानमनपेक्ष्य स्वसौभाग्येनैव शोभन्ते । लक्षणं महापुरुषस्य पद्मादिरेखादिवत्काव्यशरीरस्य सौन्दर्यदायि । अलङ्कारस्तु रत्नाभरणादिवदेव, येन विनापि स्वसौन्दर्येणैव पुरुषः प्रविभासते । गुणस्तु मन्त्रिद्योतितो धैर्यादिवत्काव्यस्य शब्दार्थरचनामाश्रयति । यथा लक्षणरहितः पुरुषो न सुन्दरशब्दवाच्यस्तथा-लक्षणवर्जं कथाशरीरं गुणालङ्कारोज्ज्वलमपि नीरसत्वं भजत्प्रौढकाव्याभिधानं नार्हति । कथाशरीरसंपन्नेषु काव्येष्वेव लक्षणानि निर्वर्त्यन्ते न तु मुक्तकादिषु खण्डकाव्येषु, अतएव 'काव्यबन्धास्तु कर्तव्या' इति मुनिनैव मुक्तकादिवारणपरमुक्तम् । लक्षणान्यसंख्येयानि, तेषां चमत्कृतिविशेषगरिष्ठाणि षट्त्रिंशदेव मुनिना संगृहीतानि । कोहलादिभिस्तच्छिष्यैः प्रकीर्तितान्यपराणि कानिचिल्लक्षणत्वेन प्रसिद्धिमुपगतानि कालप्रवाहे भरतग्रन्थ एव पाठान्तरनिबन्धरूपेण प्रक्षिप्तानि स्युः । सौन्दर्यजनकत्वकारणेन भोजादिभिरुभयपाठगतान्यपि लक्षणानि स्वीकृत्यान्यैरपि कैश्चिच्चमत्कृतिभूतैर्लक्षणैः सह चतुःषष्टित्वेन प्रकटितानि ।

यद्विवेचितमतिगम्भीरप्रौढवाचा भगवता वृत्तिकारेण लक्षणान्यसंख्यानीति तदुपष्टभ्यैव भिन्नपाठोऽपि बालानां समुपयोग्य इत्यभ्यूह्य तन्मध्य एव संक्षेपेण प्रकाशितः ।

भूषणं लक्षयति—अलङ्कारैरिति भरतोक्तैरुपमादिभिर्गुणैश्च यत्र कथाशरीररचना समुल्लासिता तद्भूषणं नाम लक्षणम् । चित्रार्थैरिति विभावादि-

निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् ।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥ २
[1]दिष्टं चैवोपदिष्टं च विचारोऽथ विपर्ययः ।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥ ३
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च संक्षोभो गुणकीर्तनम् ॥ ४

---

सामग्रीप्रत्यायकतया रसोद्द्योतकैरर्थविशेषैः मतान्तरे वक्रोक्तिरूपैः । यथा कृत्यारावणे सप्तमेऽङ्के कञ्चुकिनं दृष्ट्वा लक्ष्मणविभीषणौ—आर्य, कथय कथय ।

काञ्चु—का गतिः श्रूयतां—आर्या खलु सीता रावणाज्ञया किङ्करोपनीतं भर्तुर्मायाशिरोऽवलोक्य सखीभिराश्वास्यमानापि निवृत्तप्रयोजनापि 'नाहमात्मानं क्लेशयामि' इति (इत्यर्धोक्तौ तिष्ठति) ।

सर्वे—किं कृतवती

काञ्चु—यन्न शक्यते वक्तुम् ।

शशिन इव कला दिनावसाने कमलवनोदरमुत्सुकेव हंसी ।
पतिमरणरसेन राजपुत्री स्फुरितकरालशिखं विवेश वह्निम् ॥ इति ।

यथा वा रत्नावल्यां प्रथमेऽङ्के यौगन्धरायणस्य वचनं विश्रान्तविग्रहेतिश्लोकः। भूषणाख्यलक्षणेन काव्यं सामान्यवचसो भिद्यते, "तात्पर्यमेव वचसि ध्वनिरेव काव्ये," "यत्रालङ्कारवर्गोऽयं सर्वोऽप्यन्तर्भविष्यति" "शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः । द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्" "द्वे वर्त्मनी गिरो देव्याः शास्त्रं च कविकर्म च । प्रज्ञोपज्ञन्तयोराद्यं प्रतिभोद्भवमन्तिमम्" इत्यादिना भोजकुन्तलक भट्टनायकलोतादिभिरुक्तरीत्या गुणालङ्कारवर्गः सर्व एव लक्षणशब्देन परिगृहीतः । गुणालङ्कारैरेव यत्र कथारूपा वक्रोक्तिरतिशयिता तत्र भूषणम् । अक्षरसंघातो विविधश्लेषोक्त्या वा अक्षरविपर्यासेन वोक्तिप्रत्युक्तिवैचित्र्यं यथा उभयाभिसारिकायां विटः—भगवति वैशिकाचलोऽहमभिवादये ।

---

1 ड - दृष्टं ।

[1]ज्ञेयाभ्यनुक्तसिद्धिश्च प्रियं वचनमेव च ।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥ ५
अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम् ॥ ६
यत्राल्पैरक्षरैः श्लिष्टं विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥ ७
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र श्लिष्टा विचित्रार्था सा शोभेति विधीयते ॥ ८

---

परिव्राजिका—न वैशिकाचलेन प्रयोजनं, भवेद्वैशेषिकाचलेन ।

विटः—अस्त्येतत्कारणं·········

परि—षट्पदार्थबहिष्कृतैः सह संभाषणमस्मद्गुरुभिर्निरुद्धम् ।

विटः—युक्तमेवैतत् । कुतः—

द्रव्यं ते तनुरायताक्षि दयिता रूपादयस्ते गुणाः
सामान्यं तव यौवनं युवजनः संस्तौति कर्माणि ते ।
त्वय्यार्ये समवायमिच्छति जनो यस्माद्विशेषोऽस्ति ते
योगस्ते तरुणैर्मनोऽभिलषितैर्मोक्षोऽप्यनिष्टाज्जनात् ॥

परि—सांख्यमस्माभिर्जायते अलेपको निर्गुणः क्षेत्रज्ञः पुरुषः ।

विटः—हन्त निरुत्तराः स्मः ।

यथा वा शाकुन्तले सप्तमेऽङ्के "तापसी—सर्वदमन, शकुन्तलावण्यं पश्य" इत्यत्र शकुन्तलाशब्दः सूचितः ॥

शोभा—सिद्धैः प्रयोजनैरसिद्धस्य शुभसंघटनं यत्र निर्णीयते सूच्यते वा श्लेषवक्रोक्तिध्वनिविशेषमहिम्ना चमत्कृतोऽर्थः । केचित्स्वभावस्य प्रकटनमित्याहुः, अपरे तु यूनोः प्रभावप्रकटनमित्याचक्षते । अर्थप्रधाने वस्तुन्येषापरं शोभते । यथा रत्नावल्यां प्रथमेऽङ्के यौगन्धरायणः-(द्वीपादि त्यादिपठित्वा) "कः सन्देहः ।

---

1 ढ - ज्ञेयाह्यनुक्त ।

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यते निपुणैरर्थस्तदुदाहरणं स्मृतम् ॥ ९

प्रारम्भेऽस्मिन् स्वामिना वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धे भ्रान्ति नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मिभर्तुः ॥

यथा वा कथाशरीरसंघटनवैचित्र्यरूपशोभाया अभिज्ञानशकुन्तलायां मधुररप्रसक्तिः ।

परेषां दुर्भेद्यपरमार्थेन तुल्यार्थप्रयुक्तेन वाक्येनः निगूढाशय कस्मैचिन्निपुणैर्यत्र प्रकाश्यते तदुदाहरणं, यथा देवीचन्द्रगुप्ते प्रावेशिकी ध्रुवा कुमारचन्द्रगुप्तस्य संशयाकुलमानसस्य प्रवेशावसरसूचकमर्थमुद्द्योतयति—

एसो सिअकरवित्थरपणासिआसेसवेरितिमिरोहो ।
निअविहवरोणचन्दो गअणगिहं लंघिउं विसइ ॥

यथा वा प्रद्युम्नाभ्युदये तृतीयेऽङ्केऽन्तर्नाटिकायां सूत्रधारवचनं—

देव दनुजाधिप त्वां त्रिभुवनलक्ष्मीरिव स्वयंरागात् ।
अभिरूपमभिसृतवती नलकूबरमत्र नाटके रम्भा ॥

सामाजिकीभूतयोः सखीप्रभावत्योः सखी "पिअसहि एसो एव्व मग्गो मअणपरवसाणं इत्थिआणं" इत्युपदिशति । अत्राभिसरणमेव प्रद्युम्नसङ्गमोपाय इत्यर्थः साध्यते ।

हेतुः—फलसाधनशक्तियुक्तं मितशब्दार्थं विचित्रभङ्ग्युक्तं वचनम् । यथा तापसवत्सराजे षष्ठेऽङ्के कृतमरणनिश्चयां वासवदत्तां परिबोधयन्यौगन्धरायण आह—देवि प्रसीद,

आसृष्टेः प्रतिपार्थिवं युवतयो जाता मनोवल्लभाः
मग्नास्ते व्यसनार्णवे च बहवस्ताभिः सहैवेश्वराः ।
देव्या यत्तु कृतं तदाविकलतामुत्सृज्य लोकोत्तरं
तस्यैषा कृपणोचितेन विधिना किं ग्लानिरुत्पद्यते ॥ इति ।

देव्यायत्कृतं तदिष्टार्थसाधनमेव अचिरेणैव शुभफलमनुभवसीति ।

संशयोऽसमाप्तवाक्यत्वात्साधनीयविषयस्वरूपे सन्दिग्धावस्था । एषोऽर्थकामप्रधानेषु रूपकेषु निपुणं प्रयुज्यते । यथा कुन्दमालायां षष्ठेऽङ्के रामायणकथावाचकौ कुशलवौ सीतावृत्तान्तं पठन्तौ—

यत्प्रयोजनसामर्थ्याद्वाक्यमिष्टार्थसाधनम् ।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः ॥ १०
अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां ससंशय इति स्मृतः ॥ ११
सर्वलोकमनोग्राही यस्तु[1] पक्षार्थसाधकः ।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥ १२

---

सीतां निर्जनसंपाते चण्डश्वापदसङ्कुले ।
परित्यज्य महारण्ये लक्ष्मणोऽपि न्यवर्तत ॥
ततः प्राणैः परित्यक्ता निराशा जनकात्मजा ।

इति तूष्णींभवतः ।

रामलक्ष्मणौ—

अप्रियाख्यानभीतेन कविना संहृता कथा ।

किमितः कल्याणमावेदयति । एवं तावदनुयोक्ष्ये (इति पृच्छतः) ।

संशयालङ्कारस्तु संशयाख्यलक्षणाद्भिन्नचमत्कारतया भिद्यते ।

संक्रुद्धस्य ललाटलोचनभुवा सप्तार्चिषा धूर्जटे-
निर्दग्धे मकरध्वजे रतिरसौ किं स्याद्गृहीतव्रता ।
संवादाद्वनदेवता मुनिवधूवेषप्रपञ्चे मनः
कृत्वेत्थं रमतेऽत्र विग्रहवती किं वा तपश्श्रीरियम् ॥

इत्यादिषु संशयोऽलङ्कार एव न तु संशयाख्यलक्षणम् ॥

धर्माविरुद्धतया सर्वलोकमनोग्राहि वचनं निदर्शनोपष्टम्भं दृष्टान्तसंज्ञकं लक्षणम् । यथा धूर्तविटे—"स्त्रीषु प्रसङ्गो न कर्तव्यः" इत्यत्र "भावः किं पश्य" तीत्युक्ते "विटः—भोः उपदेशमात्रं खल्वेतत् । तमहं न पश्यामि यः स्त्रीषु प्रसङ्गं न गच्छेत्, श्रूयन्ते हि महेन्द्रादयोऽप्यहल्याद्यासु विकृतिमापन्नाः" इति ।

यथा वा पद्मप्राभृतके स्वसोदरीप्रेयसोऽनुयोगे संदिग्धमानसां देवसेनामाह शशः—

---

1 प - यःस्व  ड - यश्च ।

दृष्ट्वैवावयवान् कांश्चि[1]द्भावो[2]यत्रानुमीयते।
[3]प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम्॥ १३

अभूतपूर्वो [4]यो ह्यर्थः सादृश्यात्परिकल्पितः।
लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः॥ १४

दक्षात्मजाः सुन्दरि योगताराः किं नैकजाताः शशिनं भजन्ते।
आरुह्यते वा सहकारवृक्षः किं नैकमूलेन लताद्वयेन॥ इति।

प्राप्तिर्यथाकुन्दमालायां तृतीयेऽङ्के लक्ष्मणः कानिचित्पदचिह्नानि सैकते दृष्ट्वा राममाह—

विलासयोगेन परिश्रमेण वा स्वभावतो वा निभृतानि मन्थरम्।
पदानि कस्याश्चिदिमानि सैकते प्रयान्ति तुल्यं कलहंसविभ्रमम्॥

रामः—(निर्वर्ण्य सहर्षं) किमुच्यते कस्याश्चिदिति, ननु वक्तव्यं सीतायाः पदानीति। पश्य—

समानं संस्थानं निभृतललिता सैव रचना
तदेवैतद्रेखा कमलरचितं चारुतिलकम्।
यथा चेयं दृष्ट्वा हरति हृदयं शोकविधुरं
तथा ह्यस्मिन् देव्या सपदि पदपङ्क्तिर्विनिहिता॥ इति।

अभिप्रायः—

अभूतपूर्व इत्यसत्पदार्थः केवलकल्पितः। केचित्स्वाद्यवस्तुन्यभिमान इत्याहुः तद्वैचित्र्यरहितत्वादुपेक्ष्यम्। यथा तापसवत्सराजे चतुर्थेऽङ्के सांकृत्यायनी यौगन्धरायणोद्योगं विमृश्य प्रणिधिं प्राह—

दूरमुदीर्णे च रिपावत्यकिञ्चित्करे च विजिगीषौ।
भवता तु नयगुणशतैः सोऽयममूलः पटः क्रियते॥ इति।

यथा वा वत्सराजचरिते द्वितीयेऽङ्के चोरः—

भूमिः कराग्रेण विवर्तिताद्य श्वासेन भग्नो हिमवान्महाद्रिः।
आसारवृष्ट्या शमितोऽग्निरौर्वो विनिर्हतः कीटशतैरनन्तः॥ इति।

1 ढ - अवयवं किंचित् 2 प - यत्रोपमीयते 3 द - अप्राप्तिंचैवतां प्राप्तिं ज्ञानीयाल्लक्षणं बुधः प - प्राप्तिन्नाम विजानीयात् ड - प्राप्तिं तामपि 4 फ - अप्यर्थोयः।

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
[1]परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥ १५
निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये[2] ।
[3]यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥ १६
बहूनां तु प्रधानानां[4] नाम यत्राभिकीर्त्यते[5] ।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥ १७

---

निदर्शनं—यथा उभयाभिसारिकायां—

शान्तिं याति शनैर्महौषधिबलादाशीविषाणां विषं
शक्यो मोचयितुं मदोत्कटकटादात्मा गजेन्द्राद्वने ।
ग्राहस्यापि मुखान्महार्णवजले मोक्षः कदाचिद्भवेद्
वेशस्त्रीवडबामुखानलगतो नैवोत्थितो दृश्यते ॥

निरुक्तं—यथा वत्सराजचरिते प्रथमेऽङ्के भरतरोहकः राजानमाह—प्रसह्य हरणे केवलं प्रमादिता ख्यातिः ।

राजा—किमेतत् ।

भर—सदोषेषु कार्येषु यदल्पदोषं तत्प्रारब्धव्यम् ।

वसुवर्मा—स्वामिन् तत्राप्यहं वाच्यदोषं न पश्यामि । कुतः—

नीता बलात्प्रकृतिभद्रतरा सुभद्रा यद्वासुभद्रभगिनी कपिकेतनेन ।
देवस्य तेन समभूद्वचनीयता किं तेजःप्रकाशयशसां यदुदन्तिनां वा ॥

शाल—साधु, निरुक्तमभिहितं वसुवर्मणा ।

सिद्धिः—प्रधानानां स्पृहणीयानां प्रयोजनान्तराणामतर्कितोपलब्धानां परिकीर्तनम् । यथा कौमुदीमहोत्सवे चतुर्थेऽङ्के मन्त्रगुप्तवचनं—

सङ्गतिश्चिरमचिन्तितपूर्वा निर्वृतप्रणयिनी मिथुनानाम् ।
आधिराज्यमधिरोहति तस्याः षोडशीमपि कलां न मघोनः ॥ इति ।

---

1 न - परोपेक्षा ढ - परपक्ष द - पराक्षेप 2 द - अर्थः प्रसिध्यति 3 द - तदप्यागमसंभूतं निरुक्तमभिनिर्दिशेत् 4 ढ - च प्रयुक्तानां 5 फ - अभिधीयते ।

सिद्धान् बहून् प्रधानार्थानुक्त्वा यत्र प्रयुज्यते।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम्॥ १८
गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः।
गुणातिपातो मधुरैर्निष्ठुरार्थै[1] भवेद्यथा[2]॥ १९
बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान्।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः॥ २०

विशेषणं—यथा तापसवत्सराजे तृतीयेऽङ्के राजा विदूषकमाह—अयि मूढ—

वृत्तिर्मूलफलादिभिः क्षितितले शय्या जटाधारणं
वासो वल्कलमीदृशं कृतमिदं सामान्यमन्यैरपि।
संवेगाभिभवे विमूढमनसा यत्रानुयाता प्रिया
तन्मिथ्यापरिबोधितेन न कृतं स्नेहानुरूपं मया॥ इति।

गुणातिपातो—यथा धूर्तविटे विटः—

जात्यन्धां सुरतेषु दीनवदनामन्तर्मुखाभाषिणीं
हृष्टस्यापि जनस्य शोकजननीं लज्जापटेनावृताम्।
निर्व्याजं स्वयमप्यदृष्टजघनां स्त्रीरूपबद्धां पशुं
कर्तव्यं खलु नैव भोः कुलवधूकारां प्रवेष्टुं मनः॥

अत्र कुलस्त्रीसमुचिता विनयलज्जादयो गुणा विपरीतार्थयोजिताः।

अतिशयो विलक्षकुरुपतौ धृतराष्ट्रं प्रति भीष्मः—

एतत्ते हृदयं स्पृशामि यदि वा साक्षी तवैवात्मजः
संभ्रत्येव तु गोग्रहे यदभवत्तत्तावदाकर्ण्यताम्।
एकः पूर्वमुदायुधैः स बहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवप्रणयिनस्तावन्त एवार्जुनाः॥ इति।

तुल्यतर्को—यथा वत्सराजचरितेऽष्टमेऽङ्के राजा—

नवार्कभापल्लवितामलोदरे सुगन्धिरेणूत्करकेसरोज्ज्वले।
रसामृतज्ञो भ्रमरः सरोरुहे किमर्कपुष्पे प्रणयं करिष्यति॥ इति।

1 फ - निष्ठुरार्थो 2 ड - अथ.

रूपकैरुपमाभिर्वा [1]तुल्यार्थाभिः प्रयोजितः[2] ।
[3]अप्रत्यक्षार्थ[4]संस्पर्शस्तुल्यतर्कः प्रकीर्तितः[5] ॥ २१

बहूनां [6]तु प्रयुक्तानां [7]पदानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ २२

यथादेशं यथाकालं यथारूपं[8] च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा [9]दृष्टं तद्वर्णतो[10]ऽपि वा ॥ २३

---

पदोच्चयो यथा वत्सराजचरिते षष्ठेऽङ्के राजोत्तमसचिवं वर्णयति—

खड्गो रक्षान्धकारे रविररितिमिरे कार्यभारेषु धुर्यः
दीपो मन्त्रान्धकारे सुरगुरुरनये सङ्क्रमो व्यापदोघे ।
उत्कण्ठायां सभागी गतिरनवसरे चन्दनं शोकतापे
संक्षेपान्मानुषाभो हितशिवसुखदो भव्यचिन्तामणिर्मे ॥

दृष्टं प्रत्यक्षं यथा मालविकाग्निमित्रे—

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायताक्षम् ॥ इति ।

परोक्षं यथा पादताडितके मदनसेनाया वर्णनं—

उत्क्षिप्तालकमीक्षणान्तगलितं कोपाञ्चितान्तभ्रुवा
दष्टाधरोष्ठमधीरदन्तकिरणं प्रोत्कम्पयन्त्या मुखम् ।
शिञ्जन्नूपुरया विकृष्य विगलद्रक्तांशुकं पाणिना
मूर्धन्यस्य सनूपुरः स मदया पादोऽर्पितः कान्तया ॥ इति ।

---

1 ड - उपमानैर्वा 2 ड - प्रयोक्तृभिः 3 ड - अप्रत्ययार्थ 4 द - संस्पृष्टः 5 द - इतिस्मृतः 6 द - संप्रयुक्तानां 7 ड - पादानाम् 8 फ - पात्रं 9 फ - दिष्टं 10 द - वर्णको ।

परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते ।
[1]विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥ २४
[2]पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः ।
[3]अनेकोपाधिसंयुक्तो विचारः परिकीर्तितः ॥ २५
विचारस्यान्यथाभावस्तथादृष्टोपदिष्टयोः[4] ।
सन्देहाज्जायते यत्र[5] स विज्ञेयो विपर्ययः ॥ २६

उपदिष्टं यथाविचारके प्रथमेऽङ्के राजा—

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः॥ इति ।

यथा वा तन्त्रान्तरविषये धूर्तविटे—

शून्ये वासं प्रमर्द्य द्विरद इव लतां यो हरत्याशु नारीं
मत्तां वा यो विदित्वा ह्यभिभवति शनै रञ्जयन्वाक्यलेशैः ।
अन्यं कृत्वोपधिं वा छलयति कुरुते भावसङ्गूहनं वा
तस्यैतच्चेष्टितं भो न भवति विफलं वामशीला हि नार्यः ॥ इति ।

प्रवृत्तार्थानुसारि परोक्षार्थसाधकं बहूपायोपाधिदर्शनं वाक्यं विचारः—
यथा मुद्राराक्षसे पञ्चमेऽङ्के राक्षसवाक्यं—

साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे स्थितिं
व्यावृत्तं च विपक्षतो भवति यत्तत्साधनं सिद्धये ।
यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च य-
त्तस्याङ्गीकरणेन वादिन इव स्यात्स्वामिनो निग्रहः ॥

अथवा विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्णमिति न विकल्पितुमर्हामि ॥ इति ।

1 द - विदुर्मनोहरं 2 द - पूर्वशेष 3 द - तिरस्कृतार्थविषयो फ - अनेकोपाय 4 द - दिष्टोपदिष्टयोः ड - दृष्टोपयोगतः न - उपदृष्टयोः 5 ड कल्प्यते यस्तु ।

वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादाशुभ्रंशः स इष्यते[1] । २७
उभयोः प्रीतिजननो विरुद्धाभिनिवेशयोः[2]
[3]अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥ २८

विपर्ययो यथा रावणं प्रति सचिवः—

उदर्कसिद्धिमिच्छद्भिः सद्भिर्न खलु दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीफालपट्टिका ॥

रावणः— परस्त्रीकुचकुम्भेषु कुम्भेषु वरदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः ॥

यथा वा मत्तविलासे शाक्यभिक्षुः—परमकारुणिएण भअवदा तहागएण पासादेसु वासो पज्जंकेसु सअणं पुव्वण्हे भोअणं·· एदेहिं उवदेसेहिं भिक्खुसङ्घस्स अणुग्गहं करन्तेण किं णु हु इत्थिआपरिग्गहो सुरापाणविहाणं अणादिट्ठं । अहवा सव्वञ्ञो एदं उणपेक्खदि । अवस्सं एदेहि दुट्ठबुद्धत्थविरेहि णिरुच्छाएहि अह्माणं तरुणजणाणं मच्छरेण पिडअपुत्थएसु इत्थिआसुरापाणविहाणाणि पळामुट्ठाणि इति तक्केमि ॥

भ्रंशो यथा वेणीसंहारे द्वितीयेऽङ्के कञ्चुकिनमाह दुर्योधनः—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥

कञ्चु—(कर्णौ पिधाय सभयं) श[ा]न्तं पापं प्रतिहतममङ्गलम् ॥ इति ।

अनुनयो यथा रामाभ्युदये द्वितीयेऽङ्के रामपराक्रमस्तुतिव्यग्रं मारीचमाह रावणः—आप्रतिपक्षपक्षपातिन् क्षुद्र राक्षसापशद ! किं बहुना—

तवैव रुधिराम्बुभिः क्षतकठोरकण्ठस्तुतैः
रिपुस्तुतिभवो मम प्रशममेतु कोपानलः ।
सुरद्विपशिरस्स्थलीदलनदष्टमुक्ताफलः
स्वसुः परिभवोचितं पुनरसौ विधास्यत्यसिः ॥

1 ड - इह भ्रंशः स उच्यते फ - तद्भ्रंशितमिहेष्यते 2 ड - निविष्टयोः
3 द - ह्यर्थस्य ।

[1]अभिप्रेतार्थसिद्ध्यर्थं कीर्त्यन्ते यत्र सूरिभिः।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता॥ २९
हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्तनम्[2]।
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमुदाहृतम्[3]॥ ३०
यत्र संकीर्तयन्दोषं[4] गुणमर्थेन दर्शयेत्।
[5]गुणातिपाताद्दोषान्वा [6]गर्हणं नाम तद्भवेत्॥ ३१

इति खड्गमाकर्षति। तदा प्रहस्तः (उभयोर्मध्ये निपत्य)—प्रसीदतु प्रसीदतु, महाराजः, नेदमनुरूपं स्वामिनः। देव—

लोकत्रयक्षयोद्वृत्तप्रकोपाग्रेसरस्य ते।
ईदृशश्चन्द्रहासस्य भृत्येष्वनुचितः क्रमः॥ इति।

माला यथा तापसवत्सराजे राजा—

दृष्टा यूयं निर्जिता विद्विषन्तः प्राप्ता देवी भूतधात्री च भूयः।
संबन्धोऽभूद्दर्शकेनापि सार्धं किं दुष्प्रापं यन्न लब्धं भवद्भ्यः॥ इति।

दाक्षिण्यं यथा रत्नावल्यां द्वितीयेऽङ्के शीर्षवेदनव्याजेन गन्तुमुद्यतां वासवदत्तां पटान्तेन गृहीत्वा निरुन्धन् वत्सराजः "प्रिये, प्रसीदेति ब्रूयाम्" इत्यादि वदन्निष्क्रान्तायां प्रेयस्यां "अलमरण्यरुदितेन" इति ब्रुवन्तं विदूषकमाह—"मूढ! न लक्षितस्त्वया देव्याः कोपः तत्सर्वथा देवीप्रसादनं मुक्त्वा नान्यमत्रोपायमाकलयामि। तदेहि देवीं प्रसादयितुमभ्यन्तरमेवप्रविशावः" इति। अत्र राज्ञोऽनुवर्तनं दाक्षिण्यम्।

गर्हणं दोषस्य गुणीकृतत्वं * यथा धूर्तविटे—

प्रणष्टा न व्यक्तिर्भवति वचसः सैव मृदुता
न रागो नेत्राब्जे त्यजति न च लज्जा व्यपगता।
स्मृतिः प्रत्यायाता परिहृषितमद्यापि च मुखं
मदो दोषांस्त्यक्त्वा त्वयि परिणतस्तिष्ठति गुणैः॥

1 द - अनीप्सितार्थं ड - ईप्सितार्थप्र- 2 न - वर्णनम् 3 द - इतिस्मृतम्
4 न - दोषान् 5 प - गुणाभिवादात् 6 ड - दोषाद्वा।

* अन्ये तु कुत्सेव क्रोधान्मानान्मत्सराद्वा गर्हणमित्याहुः

[1]अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते[2]
[3]वाक्यमाधुर्यसंपन्ना सार्थापत्तिरुदाहृता ॥ ३२
वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः[4] ।
लोकप्रसिद्धैर्बहुभिः[5] प्रसिद्धिरिति कीर्तिता ॥ ३३

---

गुणातिपाते दोषो यथा वत्सराजचरिते द्वितीयेऽङ्के विष्णुत्रातः—

नृपाः प्रभुत्वात्प्रतिषेधवामा जिह्मो विधिस्तद्वशवर्ति कार्यम् ।
साचिव्यतो नापरमस्ति पुंसां विषाददुःखायशसां निदानम् ॥

यथा वा तापसवत्सराजे तृतीयेऽङ्के लामकायनः—

पूर्वाह्णे कृतभोजनव्यतिकरान्नित्यैव नीरोगता
कण्डूतिर्वपनादपैति शिरसः स्नानं यदा रोचते ।
जात्याचारकदर्थनाविरहितं ब्राह्मण्यमात्मेच्छया
धूर्तैः सत्त्वहिताय कैरपि कृतं साधुव्रतं सौगतम् ॥

अर्थापत्तिर्यथा धूर्तविटे—

आदष्टस्फुरिताधरे भवति यो वक्त्रारविन्दे रसः
प्रीतिर्या च हृतांशुके च जघने काञ्चीप्रभोद्द्योतिते ।
लक्ष्मीर्या च नखक्षताङ्कुरधरे पीने कपोले स्त्रियो
रक्तं तेन विरज्यते न हृदयं जात्यन्तरेऽपि ध्रुवम् ॥

अत्र जन्मान्तरेऽपि तस्या अनुरक्तिरनुवर्तेत एवेत्युक्ते जन्मान्तरेष्वपि विरागो न प्रभवति तस्माद्भवबन्धविमुक्तिर्न स्यादित्यर्थापत्तिर्नाम लक्षणम् ।

प्रसिद्धिः—प्रसाधकैः प्रकृष्टसाधकैः, प्रसिद्धैः पूर्वमेव सिद्धैः । यथा गदायुद्धे बलदेवः दुर्योधनमाह—भीमसेन इदानीं तव युद्धवञ्चनामुत्पाद्य स्थास्यति ।

दुर्यो—किं चाहं भीमसेनेन वञ्चितः ।

बल—अथ केन भवानेवंविधः कृतः ।

---

1 द - अन्यमर्थं समालोच्य 2 द - प्रकाश्यते 3 ड - वाक्यं माधुर्यसंयुक्तं
4 द - स्ववाक्यार्थप्रकाशकैः 5 द - बह्वर्थैः ।

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम्।
[1]पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता॥ ३४
दृष्ट[2]श्रुतानुभूतार्थ[3]कथनादिं समुद्भवम्।
सादृश्यं क्षोभजननं [4]सारूप्यमिति संज्ञितम्॥ ३५

दुर्यो—श्रूयतां,

येनेन्द्रस्य च पारिजाततरुर्मानेन तुल्यं हृतो
दिव्यं वर्षसहस्रमर्णवजले सुप्तश्च यो लीलया।
दीप्त्या भीमगदां प्रविश्य सहसा निर्व्याजयुद्धप्रियः
तेनाहं जगतां प्रियेण हरिणा मृत्योः प्रतिग्राहितः॥

अत्र वाक्यार्थस्य साधका एव भगवतो विष्णोः पारिजाताहरणलीलावटपत्रशयनादयः। अन्ये तु प्रसादकैरलङ्कारिभिरिति गृह्णन्ति।

पृच्छा शोकादिपरवशतयात्मानं वा परं वा परोक्षे संबोध्य पृच्छन्निवाभिधानम्। तत्रोत्तरमपेक्षते तस्यैव प्रत्यायकत्वात्।

यथा रामचरिते हनुमान् सीतां दृष्ट्वाह—

स्थानेऽवसीदसि रघूद्वह किं विधातः
अस्यास्त्वयेक्षितमलक्षणमङ्गकेषु।
अद्यापि जीवसि दशानन हे हनूमन्
केयं तवाभिमुखवर्ति रिपोः प्रतीक्षा॥ इति।

सारूप्यं—आदिशब्देन दर्शनश्रवणानुभवनान्युपलक्षितानि। अत्र रूपविभ्रान्त्या न क्षोभजननमेव लक्षणस्य चमत्कृतिः। यथा छलितरामे लक्ष्मणेन बध्वानीतो लवो रामयज्ञशालायां हिरण्मयीं सीतां दृष्ट्वाह—"अये कथमियमम्बा राजद्वारमागता" इति सहसोत्थाय प्रणम्य तदनन्तरं काञ्चनमयीति निर्वर्ण्योपसृत्योपविशति॥

यथा वा वेणीसंहारे—दुर्योधनं हत्वागच्छन्तं भीमसेनं दुर्योधनमिति चार्वाकवार्तयैव भ्रान्त्वा धर्मसूनुस्तं गाढं गृहीत्वाह···

आशैशवादनुदिनं जनितापराधो
मत्तो बलेन भुजयोर्हतराजपुत्रः।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पापः॥ इति

1 द - पृच्छेत्प्रज्ञापयन्नर्थं ड - पृच्छ्यते चाभिधत्ते चार्थं 2 द - श्रुतादि
3 ड - कथनाभिः 4 ड - जनितं।

हृदयस्थस्य वाक्यस्य गूढार्थस्य विभावकम्[1] ।
अन्यापदेशैः[2] कथनं मनोरथ इति स्मृतः ॥ ३६
यद्वाक्यं [3]वाक्यकुशलैरुपायेनाभिधीयते ।
[4]सदृशार्थाभिनिष्पत्त्या[5] स लेश इति कीर्तितः ॥ ३७

---

मनोरथो यथा विकटनितम्बाप्रहसने विकटनितम्बाह

अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धाननामरजसं कलिकामकाले
बालां कदर्थयसि किं नवमालिकायाः ॥

अत्रात्मानमेव सुमनोलतात्वेनापादिशति ॥

लेशो यथाविमारके द्वितीयेऽङ्के धात्री नायकमाह—अय्य किं चिंतीअदि अविमारकः—भवति शास्त्रं चिन्त्यते ।

धात्री—किं णाम एदं रमणिज्जं सत्थं चिंतीअदि ।

अवि—भवति योगशास्त्रं चिन्त्यते ।

धात्री—(सस्मितं) पडिग्गहीदं मंगलवअणं, जोअसत्थं एव्व होदु ।

अवि—को नु खलु वाक्यार्थः । अन्यदप्यभिलाषवशादन्यथा संकल्पयामि । इत्यादि ।

अन्ये तु लेख इति पठन्निङ्गितज्ञानाभिधानमिति च लक्षयन्ति ।

क्षोभो यथा रत्नावल्यां तृतीयेऽङ्के सागरिकैवेति मत्वा वासवदत्तामुपलालयतो राज्ञः सा स्वावकुण्ठनमपनीय वैलक्ष्यमुत्पादितवती ।

राजा (अञ्जलिं बध्वा)—प्रिये वासवदत्ते, प्रसीद प्रसीद ।

---

1 फ - सुश्लिष्टार्थप्रकाशकम्, न - गूढस्यार्थप्रकाशकम् 2 फ - देश 3 ड - वाद 4 फ - सादृश्या 5 द - निष्पन्नः ।

परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते[1]।
[2]अदृष्टोऽन्योऽपि वा कश्चित्स तु क्षोभ इति स्मृतः ॥
लोके गुणातिरिक्तानां [3]गुणानां यत्र नामभिः।
एको हि[4]शब्द्यते[5]तत्तु विज्ञेयं गुणकीर्तनम् ॥ ३९
प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते[6]।

---

वास (अश्रु निपातयन्ती) मा एव्वं भण। अण्णगदाइ एदाइ अक्खराइ।

विदू—भोदि, महाणुभावा खु तुमं ता क्खमीअदु दाव एक्को अवराहो पिअवअस्सस्स।

वास—णं पुढमसंगमे विग्घं करन्तीए मए जेव्व एदस्स अवरद्धं ण अज्जपुत्तस्स।

अन्ये तु "आत्मन्यभूत तद्भावभावन" मिति, परे "त्वन्यगते हेतावन्यस्मिन् कार्यकल्पन" मिति च लक्षयन्ति ॥

गुणकीर्तनं यथा वत्सराजचरिते चतुर्थेऽङ्के शालङ्कायनः—नीलनागव्यपदेशेन समन्ततः शस्त्रप्रभाभासुरैरस्मद्योधैः परीतेन महति भयस्थाने विगतसंभ्रमं—

तेन प्रोक्तं धैर्यगाम्भीर्यशौर्यप्रज्ञातेजोनीतिदाक्षिण्यगर्भम् ।
वाक्यं सामाढ्यं सोर्जितं श्रोत्ररम्यं शास्त्रीकर्तव्यं तद्बुधैः स्वार्थकामैः ॥

भरतरोहकः—एष संक्षिप्तविस्तरो नाम ।

राजा—ततस्ततः—

शाल—देव, यस्तस्य युद्धे महति प्रवृत्ते पराक्रमः साहसलाञ्छनः सः
प्रद्युम्नरामार्जुनभीमकर्णसाम्बाभिमन्युष्वविचिन्त्य एव ॥
इत्यादि

राजा—अहो तु खलु स्वभावसिद्धानां गुणानामव्यभिचारिता । कुतः—

अविदित इति नैकधा प्रयत्नाद्बहुदिवसं बहुधापरीक्षमाणः।
द्विगुणमभिविराजते गुणैः स्वैर्मणिरिव जातिविशेषवान्महार्हः ॥

---

1 द - चाभिधीयते 2 दफ - अदुष्टो 3 द - बहूनां 4 ड - अपि 5 न - शप्यते द - अभिगद्यते 6 द - प्रदीयते।

वचनेन विनानुक्तसिद्धिः[1] सा परिकीर्तिता ॥ ४०
यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥ ४१
[2]एतानि काव्यस्य च लक्षणानि षट्त्रिंशदुद्देशनिदर्शनानि
[3]प्रबन्धशोभाकरणानि तज्ज्ञैः सम्यक्प्रयोज्यानि यथारसानि[4]

---

सिद्धिर्यथा तापसवत्सराजे यौगन्धरायणो डोलायितचित्तां वासवदत्तामाह—

कौशाम्बीं परिभूय नः कृपणकैर्विद्वेषिभिः स्वीकृतां
जानास्येव तथा प्रमादपरतां पत्युर्नयद्वेषिणः ।
स्त्रीणां च प्रियविप्रयोगविधुरं चेतः सदैवात्र मे
वक्तुं नोत्सहते मनः परमतो जानातु देवी स्वयम् ॥

यथा वा तत्रैव द्वितीयेऽङ्के विनीतभद्रो देवीप्रस्थानं वर्णयन्नाह—

मामुद्दिश्य तथा देव्या बाष्पसंरुद्धकण्ठया ।
आर्यपुत्रं प्रतीत्युक्तं वक्तव्यं न समाहितम् ॥

प्रियोक्तिर्यथा वत्सराजचरिते सप्तमेऽङ्के भरतरोहको वत्सराजाय वासवदत्तां वीणाभ्यासार्थमर्पयितुकामस्तं दृष्ट्वाह—

या शेते कौस्तुभस्य द्युतिकिसलयिते शारदव्योमनीले
विष्णोर्वक्षस्युदारे रजनिकरकराकारहारोपहारे ।
साभ्येत्यालिङ्गतु त्वां प्रशिथिलगलितेनोत्तरीयेण लक्ष्मी-
रीर्षादापीडयन्ती नवकमलरजोरोचनाभ्यां स्तनाभ्याम् ॥ इति

(एवमेव अन्यप्रबन्धेष्वपि कथाशरीरसंविधानसंभाषणवैदग्ध्यरूपः कविव्यापारो लक्षणाख्यो द्रष्टव्यः ।)

इति षोडशाध्यायानुबन्धः समाप्तः ।

---

1 ड - जातु सिद्धिः 2 ड - वै काव्यविभूषणानि फ - काव्यस्य विभूषणानि 3 ड - काव्येषु सोदाहरणानि 4 ड - बलानुरूपम् न - रसानुरूपम् ।

श्रीः

# नाट्यशास्त्रम्

## सप्तदशोऽध्यायः*

---

[1]एवं तु संस्कृतं पाठ्यं मया प्रोक्तं समासतः[2]।
[3]प्राकृतस्य तु पाठ्यस्य संप्रवक्ष्यामि लक्षणम् ॥ १

---

यदान्तररसास्वादकाकुविश्रान्तिसुन्दरम् ।
रसाक्षपक्षगं वन्दे तद्वपुः पारमेश्वरम् ॥

चतुर्दशाध्याये वाचिकोक्तक्रमे संस्कृतं प्राकृतं च वाक्यमित्युक्तम् । तत्र संस्कृतप्रसङ्गेन छन्दोवृत्तलक्षणादि निरूपितम् । अनेन त्वध्यायेन प्राकृतस्य स्वरूपं निरूप्यते । शास्त्रप्रसिद्धसंस्कृतविपरीतप्राकृतप्रसङ्गेन नामधेयविभागरूपरूपणं शास्त्राविहितानां विपरीतरूपत्वात्, नाट्यसमयपातिनो भावमारिषादिनामसमूहस्य पठनधर्माश्च प्राकृतेऽपि किमन्यथा संस्कृतवद्वेति चिन्तायां प्रसङ्गेन कार्यस्वरूपं निरूपितम् । दशरूपकनिर्णयानन्तरं समुचितनिर्णयमपि तथा—

अलङ्कारा विरामाश्च ये पाठ्ये संस्कृते मताः ।
त एव यत्नतः कार्याः स्त्रीपाठ्येऽपि च संस्कृते ॥ (१७-१३३)

इत्यध्यायोपान्ते प्राकृतपाठ्यमेवोपसंहरिष्यामीत्यध्यायसङ्गतिः । एतामेव दर्शयति एवं तु संस्कृतमित्यादि । पाठविशेषमर्हति, यत्नेन वा पठनीयं, विशिष्टेन रूपेण वा पठनार्हं आन्तरचित्तवृत्तिवशादेव वा तथा पठितुं शक्यं,

---

1 दर - एतत्तु भ - पाठ्यं तु संस्कृतं विप्राः 2 ड - द्विजोत्तमाः 3 ज - प्राकृतस्यापि.

* जादिबान्तेषु रसंज्ञके चाष्टादशोऽध्यायः । अस्मिन्नध्याये प्राकृतलक्षणपाठः सर्वेष्वादर्शेषु सर्वाबद्धमयः । नययोरेव तेषां साधिष्ठ इति वृत्तिकारेण दत्तानां प्रतीकानां च संवादबहुलत्वाच्च तयोः पाठ एव मूलरूपेण निवेशितः । प्राकृतलक्षणश्लोकानां व्याख्यानसापेक्षत्वादग्रेऽनुबन्धरूपेण संक्षेपेण टीका योज्यते ।

एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ २
त्रिविधं तच्च[1] विज्ञेयं नाट्ययोगे[2] समासतः ।
समानशब्दं विभ्रष्टं[3] देशीगतमथापि च[4] ॥ ३
[5]पाठ्यमेकं तु विज्ञेयं संस्कृतं प्राकृतं यथा[6] ।
[7]कमलामलरेणुतरङ्गलोल[8]सलिलादिवाक्यसंपन्नम् ॥
प्राकृतबन्धेष्वेवं[9] [10]संस्कृतमपि योगमुपयाति ।
ये वर्णाः [11]संयोगस्वरवर्णान्यत्वमूनतां चापि[12] ॥ ५

आचार्ययत्नेन वा पठनीयमिति पाठ्यम् । तत्र प्राकृतस्य सामान्यलक्षणमाह (संस्कारेति) संस्कृतमेव संस्कारगुणेन यत्नेन परिरक्षारूपेण वर्जितं प्राकृतं, प्रकृतेरसंस्काररूपाया आगतम् ।

नन्वपभ्रंशानां को नियम इत्याह नाना यान्यवस्थान्तराणि देशविशेषास्तेष्वात्मा नियतस्वभावो यस्यां, देशविशेषेषु प्रसिद्ध्या नियमितमित्येव संस्कृता एव वाचकाः अनुमानात्त्वन्ये ते त्वन्यत्वे प्रसिद्धिं गता इत्युक्तम् । अवतिष्ठन्तेऽन्यस्मिन्नित्यवस्थाः देशाः । संस्कृते समेऽपि प्रातिपदिके विभक्तौ भवितव्यं विपर्यासेन स्वरेण वा देशीपदमपि स्वरस्यैव प्रयोगावसरे प्रयुज्यत इति तदपि प्राकृतमेव, अव्युत्पादितप्रकृतेस्तज्जनप्रयोज्यत्वात् प्राकृतमिति केचित् । संस्कृतेन समानशब्दानुदाहरति कमलामलेति । विभक्तौ लिङ्गस्य प्राकृते स्वातन्त्र्यादवश्यं भेदेन भाव्यमित्याह वाक्ये समासोपपन्नं योजितम् । एतत्परिज्ञानस्य फलमाह एवं संस्कृतमपि योगमिति । भाषाश्लेषे पताकास्थानकादौ चास्य पयोग उक्तः । अपि शब्देनेदमाह प्राकृतप्रयोगे समासेऽपि न संस्कृतसमतेति कमल अमल इन्दु इत्यादौ ।

1 भ - तत 2 भ - नाट्ययोगं 3 च - शब्दैर्विनष्टं 4 द - वा 5 इदं श्लोकार्धं भमयोरेव वर्तते 6 भ - तथा 7 भ - कमलदलरेणुकेसरतरङ्गसलिलादि 8 द - जालादि . न - सलीलादि ट - झडित्फसंपदम् (?) 9 भ - एतत् 10 ज - संयुक्तं द - संस्कृतमिव 11 च - संयुक्ता 12 च - वापि ।

[1]यान्त्यपदादौ प्रायो [2]विभ्रष्टांस्तान् विदुर्विप्राः ।
[3]ये वर्णा वर्णगता व्यञ्जनयुक्ताश्च ये स्वरा नियताः॥६
तानपरस्परवृत्ते प्राकृतयुक्त्या प्रवक्ष्यामि ।

[4]यथा—

[5]एओआरपराणिअ [6]अं आरपरं अ[7] [8]पाअए णात्थि।
वसआरमज्झिमाइ[9] अ[10] [11]कचवग्गतवग्गणिहणाइं॥[12]

विभ्रष्टमाह ये वर्णा इत्यादि । एतदेव प्रपञ्चयते 'एओआरपराणि अ' इत्यादिना । एकारात्परः ऐ, ओकारात्पराः औ, ऐकारैकारौ च, येभ्यस्तानि (च)। कियन्ति आह पाअए पादसंख्यया चत्वारीत्यर्थः ऋ ॠ ऌ ॡ । अंकारपरो विसर्जनीयः । वसकारयोर्मध्ये शषौ । (कचवग्गोति) कचतवर्गाणां

1 च - गच्छन्ति पदन्यस्तास्ते विभ्रष्टा इति ज्ञेयाः 2 ढ - प्रभ्रष्टा 3 म - मातृकायामेव विद्यतेऽयं श्लोकः 4 दडयोर्नास्ति 5 "ए ओ आर" इत्यादिलक्षणश्लोकानां स्थाने भ संज्ञकादर्शे गद्यरूपः पाठभेदो यथा--क ख घ त थ ध भ सा हत्वं यान्ति, यथा—फळिह, मुहं, मेह, वसहि, रहं, दहि, सोहा, दिअहेसु । शषौ सकारौ भवतः; यथा ससंक विसमेसु । टतदा डत्वं यान्ति, यथा—विड, पडि, अदण्डासु । ट ठ ड द य रा लत्वं यान्ति, यथा—विअ लालिअ तुल पवितुला विहलयदीसु । थकारो ढत्वं प्राप्नोति वुड्ढो । नकारो भवति णकारः, यथा--णयणं । पकारो फत्वं याति बत्वं च । यथा फरुसं कवहं च । धकारः ढत्वं याति, यथा वढि । लकारो रत्वं याति यथा किर । ट ठौ डत्वं प्राप्नुतः । यथा सढः फढमं, पलिअं । तजौ यत्वं प्राप्नुतः कयं, धयं । श च ज त द प य वाः स्वरशेषा भवन्ति, यथा—पिउण, पउप, राइ, वई, णई, कइ, दइआ, जयेसु ।

योगं याति, यथा—अच्छरिअं उच्छाहो, अच्छरसा, (पथ्यं) पच्छं । तुभ्यं तुज्झं, सह्यं - सज्झं, विन्ध्यो विज्झो ।

श्लक्ष्णं—सण्हं ।

ग्रीष्मो—गिह्मो । दृष्टो—दिट्ठो । हस्तो—हत्थो । यक्षो—जक्खो । ब्रह्मा-बह्मा । बृहस्पतिः—बुहप्पइ । यज्ञो—जन्नोत्तिं ।

एवमेतन्मया प्रोक्तं किञ्चित्प्राकृतलक्षणम् ।
शेषं देशीप्रसिद्धं च ज्ञेयं विप्राः प्रयोगतः ॥

6 ड - अकार, न - अंकार 7 ड - च 8 र - पाइए 9 द - गज्झिआइ ड - मंसिमाइ प - मंरि सआइ ज - संखुआइ 10 र - व 11 ड - तवर्ग तवर्ग ढ - कच्च-वग्ग 12 ड - गणाइ ।

[1]वच्चंति कगतदयवा[2] [3]लोपं [4]अत्थं च से वहंति [5]सरा।
[6]खघथधभा उण [7]हुत्तं उवेंति अत्थं अ मुंचंता[8] ॥ ८
[9]उप्परहुत्तरआरो हेटाहुत्तो अ पाअए णात्थि।
[10]मोत्तूण भद्दवोद्दह पद्दहदचन्द्रजाईस ॥ ९

---

अन्त्यवर्णाः ङ ञ न इति द्वादशवर्णा न सन्ति। (कगेति) कगादयो लुप्यन्ते तदीयश्चार्धः, स्वराणामेव। (खघेति) खादीनां हत्वं, खेट, परिघ, अथ, धान्य (भाण्यादीनां) व्यञ्जनस्य न भवति।

---

"ए ओ आर" इत्यादिगाथानां छाया—

एओकारपराणि च अंकारपरं च पादसंख्यया (प्राकृते ?) नास्ति।
वसकारमध्ये च, कचवर्गं तवर्गं निधनानि ॥
प्राप्नुवन्ति कगतदयवा लोपं, अर्धं च तेषां वहन्ति स्वराः।
खघथधभाः पुनः हत्वमुपेयान्ति अर्धं च मुञ्चमानाः ॥

---

1 प - वंचति खगतजगदात्र. ज - वच्चातिकगतजगदावा ड - वच्छाति कटत-दवयवाः ढ - वच्छातिकगतदवयवाः द - वक्कन्ति कगतदयवा 2 न - पा. 3 न - लोपः प - लोम ढ - लोप द - लौवं 4 ड - अथच 5 ड - वहति ग - वहत्ति 6 प ज - खघधभउण ड - खघघुधः उणइ 7 प - भधंत अंगअवं चंता। र - हत्तं उवंति अत्थ अ मुंचंता द - हत्तं च अत्थं समुंचंता। ढ - हत्त उषति अ अमुच्चत्ता ढ - हत्तं वेंति अत्थं अमुंचंता ज - उहेति अगग अम-च्चत्ता 8 क - मुंघना 9 प - इंपर अत्तरआरोहं रे भत्ततो अ वा अएणंधि। न - उप्पा हतरयारो हेटाहुत्तो अपाअएणात्थि। द - उप्परहुत्तर आरो हेट्ठाहुत्तो अपाणत्थि। ढ - उरउरआरो हेठाहुंतो अपाअएणंथि। ड - उच्चर उरआरो हेणण हत्तो अवाअएण-त्थि। च - उघरहुत्तरसासौहेहाफुत्तप्लययायएणात्थि। ग - उच्चरहुतरसासोहेहा हुत्त प्लपयापणाच्छि। र - डप्परहुतुर अरोहद्धा हुस्त आपइएणात्थि। ज - इंपरउंतर आरोहें रे भुंक्तो अवाअएणंधि। 10 द - मोत्तूण भद्रवो द्रहगद्रद्रह...द्रजा...सु। ण - मोन्ताण भाद्दवोद्रव भद्रांचिद जाईसु। र - मो . णभद्रवोडहमडडह इन्द्र जई सु। न - मोचूणभुदावो दहददहचंद्रजाईसु य - मोत्तूणभद्रवोद्रहपद्रद्रहचंन्द्रजाईसु। ढ - मोहूणभ्रभ्रवे भ्रवरुभ्रुद्रगचन्द्रराईसु ढ - मांभूषणभूभूऔभूवरुभूद्रहुचन्द्रराईसु। ज - मौतूण भाद्रवोद्रवभद्रचन्द्रजाईसुं। च - मोत्तूणवंइदोद्रहपउजइसु।

खघथधभाण हआरो मुहमेहकहावहूपहूएसु[1] ।
[2]कगतदयवाण णिच्चं वीयम्मि ठिओ सरो होइ ॥ १०
[3]छ इति षकारो नित्यं बोद्धव्यः षटपदादियोगेषु ।
[4]किलशब्दान्त्यो रेफो भवति तथा खुत्ति खलुशब्दः[5] ॥
[6]ड इति च भवति टकारो भट्टकटककुटीतटाद्येषु ।
सत्वं च भवति शषयोः सर्वत्र यथा विसं संका[7] ॥ १२

उपरिस्थोऽधःस्थो वा रकारः प्राकृते नास्ति (?) ।
मुक्त्वा भद्र चोद्रह ह्रद द्रह चन्द्र धात्री शब्देषु ।
खघथधभानां हकारो (यथा) मुख, मेघ, कथा वधू प्रभृतेषु ।
कगतदयवानां नित्यं द्वितीये स्थितः स्वरो भवति ॥

1 प - सुहिक्खेसु न - सरिसेसु खघथषधभाण हयानेमुह (मेहं) कहापडुमुरिच्छेसु । ग - सुरिच्छेसु ज - मुहुरादौ 2 र - कगतदयवाण णिच्च वि इअम्मि ठिओ सरो होइ । ड - कगतिदवाण अणिच्चलोपजमपिओसरो होइ । य - कगतदयपाण द - कगतदपवाण णिच्चं विइअमिठिअ सरो हाई । ज - कगनदजवाण णिच्चलोपम्मि ठं ओसरोहोइ । च - कगतदजवारमणिच्चं वीयन्ति डिउ सरो होइ । 3 च - छे इति षकारो नित्यं बोद्धव्यः षट्पदादियोगेतु ज - च इतिचकारो नित्यं बोद्धव्यः षट्पादेतु । द - इत्तिथआरो नित्यं बोद्धव्यः षट्पदादियोगेतु र - छ इतिषआरो नित्यं बोद्धव्यः अपदादियोगेतु । ड - छषिउषिति षकारो नित्यं बुधजनैस्तु बोद्धव्यं षट्पदानि योग्येतु । 4 द - किलशब्दान्तो रेफो भवति तथा खुत्ति खलुशब्दः ड - कृतिशब्दोरेफान्तेन भवन्ति तथा पुत्रिखलुशब्दः र - किलं शब्दो कोरे भवति तदा खुत्ति खलुशब्दः । न - खिलशब्दाद्योरेफो 5 ग - खुत्तिखिल शब्दः ढ- भवति तथात्ति खलुशब्दः । च - भवन्ति तथा खु निखलशब्दः 6 द - डं- इति भवति टकारो भटकटककुटी कुटावटाद्येषु र - त इति च भवति टकाते भटकटकुटीकुटावडाद्येषु । न - ड इति च टकारो भटकटककुटीतटाद्येषु ड - ड इति भवति टकारो भटकुटकुटितटाद्येषु य - ड इति भवति टकारो कटकटक..... । च - ड इति च भवति टकासे नडकटुकुटीतडाद्येषु ग - ड इति च भवति टकारो नटकटुटीतटाद्येषु 7 र - विससंका द - विसं संकं य - यथाहि विस संका च यथा हि विससंका ड - तथापि ससकादेशः ढ - तथापि ससकादेः साः ।

अस्पष्टश्च दकारो भवत्यनादौ तकार इतराद्यः[1] ।
[2]बडबातडागतुल्यो भवति डकारोऽपि च ककारः[3]॥ १३
[4]वर्धनगते च भावे धकारवर्णोऽपि ढत्वमुपयाति ।
सर्वत्र च प्रयोगे भवति [5]नकारोऽपि च णकारः ॥१४
आपानं आवाणं भवति पकारेण वत्वयुक्तेन[6] ।
[7]अयथातथादिकेषु तु भकारवर्णो व्रजति धत्वम् ॥१५
[8]परुषं फरुसं विद्यात्पकारवर्णोऽपि फत्वमुपयाति ।
[9]यस्तु मृतः सोऽपि मओ [10]यश्च मृगः सोऽपि हि तथैव
[11]ओकारत्वं गच्छेदौकारश्चौषधादिषु नियुक्तः ।
[1]प्रचलाचिराचलादिषु भवति चकारोऽपि [2]तु यकारः॥

---

भद्रादिषु न भवति । अपिच चोद्रहहदद्दुःखादीनामिति । अत्रोदाहरणानि मुखं मुहं इत्यादिकानि । अनादौ स्थाने टकारो डकारश्च अस्पष्टो लघुप्रयत्न उच्चार्यः येन क्रमाड्ढकारश्च लकाराच्छायौ भवतः। यथा उदरं उदलं तथैवेति ।

---

1 ड - इतराद्ये नय - इतराद्याः ,2 द - वडवा र - वडवाडडाग ड - बड बडवा......अपि लकारः 3 च - वनवतोनागतुल्ये भवन्ति डकारोऽपि च लकारम् । 4 र - वर्धनगते च भावे वकारवर्णोऽपि टत्वमुपयाति ड-वधमधुशब्दे च तथा धकारवर्णो हकारतां याति । च-शटपाटपीठिआदिषु(ट)कारवर्णोऽपि ठत्वमुपयाति ग-शठपाठपीठिकादिषु ठकारवर्णोऽपि 5 च-मेकारोऽपि च णकारः 6 दर-नत्वयुक्तेन ढ - आवाणं आधाणं भवति वकारेण च धयुक्तेन । 7 र - अयथादिकेषु तु धकार वर्णो व्रजति पत्वम् । ड - अयथातथादिषु केषु थकारवर्णो हत्वम् । र - अयथा तथादिकेषु च 8 र - परुषं हरुसं विद्यात्पकारवर्णोऽपि हत्वमुपयाति ड - परुषं हरुसं च - परुषाणा 9 र - यस्तु मृतःसोऽपि मटो द - यस्तु मृतःसोऽपि न ड च - यस्तु मृतः सोऽपि मओडियस्तु शृतः सोऽपि मऔ यस्तुमृगः सोऽपि तथैव । 10 ड - यस्तु 11 र - औकारत्वमु (त्वंग ?) च्छन्ता कारश्चौषधादिषु 12 ड - प्रचयाचिर न - प्रचलायिताचल द - प्रचलाषिताचलादिषु 13 द - च

अपरस्परनिष्पन्ना ह्येवं प्राकृतसमाश्रया वर्णाः।
संयुक्तानां तु पुनर्वक्ष्ये परिवृत्तिसंयोगम्॥ १८

[1]श्चप्सत्सथ्याः छ इति तथा भ्यह्यध्या भवन्ति तु झकाराः[2]।
[3]ष्टः ठ्ठः, स्तः त्थः, ष्मो म्ह, क्ष्णो ह्णः, ष्णो ण्हः, क्षः खका-
रूपोऽपि॥ १९

[4]आश्चर्यं अच्छरियं[5] निश्चयमिच्छन्ति णिच्छयं च यथा[6]
[7]वत्सं वच्छं च यथा[8] अप्सरसं तद्वदच्छरअं। २०
उत्साहो उच्छाहो पथ्यं पच्छं च विज्ञेयम्।
तुभ्यं तुज्झं मह्यं मज्झं विन्ध्यश्च भवति विंज्झोत्ति[9]॥ २१
दष्टो दट्ठोत्ति तहा हस्तोऽपि च भवति हत्थोत्ति।
ग्रीष्मो गिम्होत्ति [10]तथा श्लक्ष्णं सह्णं[11] सदा तु विज्ञेयम्॥

---

अपरस्परनिष्पन्ना इत्यन्योन्यमाश्लिष्टा असंयोगरूपा इत्यर्थः। यत्र-संयुक्तास्तेषामिति षष्ठीबहुवचनम्। क्रमेण स्वयमुदाहरति वच्छो इत्यादि। (विपरीत इति) ब्रह्मा बम्हावत् ह्रत्वमिति, उपरिगतोऽधस्तादिति शक्रं अर्कः (इति) द्वितीयं संयुज्यमानमपास्य स उपरिगत एव चादेशः क्रियते सक्को अक्को। मुनिना च दिग्दर्शिता, विस्तारविजिज्ञासुः प्राकृतदीपिकादिकमव-

---

1 श्लोकार्धं द - संज्ञके नास्ति। च - झप्सश्चः छ इति तथा राज्ञै तु त्तकार-योग उपयातः (?) तच्छो अच्छरपच्छस्येचसंसंज्ञाह्यसचसज्ञौ (?) 2 न - व्रजति वै झत्वम्। 3 च - ष्टो ट्टो स्तोबः शेषो लक्ष्मक्ष्मो ह्ण क्ष्णः खकाररूपोऽपि। प - ष्टः ष्ठः स्थः त्थः ष्म ह्म क्ष्णोह्णः खकाररूपो हि। न - स्तत्थ, ष्टोट्ठः ष्मो म्ह क्ष्णोह्ण क्षो क्ख इति चैव स्यात्। द - ष्टः ष्ठ स्तः त्थः ष्मो ह्मः क्ष्णो ह्णः क्षणः ख इति चैव स्यात्। र - श्च त्सथ्याः छ इत्यह्णध्याम्वा ? भवन्ति तु झकाराः। यूष्टस्तः त्थः भ्याह्यः ह्मा। ष्णः ह्लक्षः ख इति चैव स्यात् (?) 4 ड - आश्चर्यामात्सर्यतं 5 न - अच्छय्यं 6 च - णिच्छयंत्ति तथा 7 इदं श्लोकार्धं—डचदरमातृकासु न विद्यते 8 य - तथा 9 र - विंज्झन्ति ड - विंझोन्ति द - विन्ध्यस्याविज्झत्ति 10 इ - गिम्ह इति द - गिम्हत्ति 11 र - सण्हं तु सदा।

[1]उण्णं उह्नं यक्षो जक्खो पल्लंकु भवति पर्यङ्को ।
विपरीतं ह्मयोगे ब्रह्मादौ स्याद् बृहस्पतौ फत्वम्[2] ॥
यज्ञो भवति च जन्नो[3] भीष्मो [4]भिम्होत्ति विज्ञेयः ।
उपरिगतोऽधस्ताद्वा भवेत्ककारादिकस्तु यो वर्णः ॥ २४
[5]स हि संयोगविहीनः शुद्धः कार्यः प्रयोगेऽस्मिन् ।
[6]एममेतत्तु विज्ञेयं प्राकृतं संस्कृतं तथा ॥ २५
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम्[7] ।
भाषाचतुर्विधा ज्ञेया दशरूपे प्रयोगतः[8] ॥ २६
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते ।
[9]अतिभाषार्यभाषा च जातिभाषा तथैव च ॥ २७
तथा योन्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता[10] ।

---

लोकयेत् । उत्पलविरचितायां च सूत्रवृत्तौ पद्धतौ च स्फुटं पूर्णं च सर्वमस्तीति तत्रादरः कार्यः ॥

संस्कृतप्राकृतरूपैव भाषा वक्तृभेदाच्चतुर्धा संपन्नेति दर्शयति संस्कृतं प्राकृतं च पाठ्यमिति । संस्कृतैव भाषा स्वरभेदादिपूर्णसंस्कारोपेता संस्कृतभाषा भाषाभेदानामुक्ता वैदिकशब्दबाहुल्यादार्यभाषातो विलक्षणत्वमस्या इत्यन्ये ।

---

1 ड - कृष्णं कह्नं च भवेद्यक्षो जक्खो पल्लंकपर्यङ्के । द - उण्णं च भवेदुह्नं यक्षो जक्खोति योह्नश्च भवति पल्लङ्क... । य उण्णं च भवेदुह्नं यक्षो जक्खो त्ति पर्यन्तम् । ब्रह्मा च भवति ब्रम्हो बृहस्पतिर्वै बुहप्फई भवति 2 र - ह्त्वम् । 3 ड - यज्ञश्च भवति जन्नो र - जण्हो द - यण्णो 4 प - भिह्मत्ति र - भीह्म इति 5 य - स तु ।

6 भ - एवमेतन्मया प्रोक्तं किंचित्प्राकृतलक्षणम् ।
शेषं देशीप्रसिद्धं च ज्ञेयं विप्राः प्रयोगतः ॥
पाठ्यमेतत्तु विज्ञेयं संस्कृतं प्राकृतं तथा ।

ड - एवमेव तु 7 द - समाश्रयम् 8 भ - रूपेषु योक्तृभिः द - रूपप्रयोगतः 9 ग - अभिभाषा 10 भ - भाषा वे नाटकाश्रयाः । ड - नाट्यप्रकीर्तिता ।

[1]अतिभाषा तु देवानामार्यभाषा तु भूभुजाम् ॥[2] २८
[3]संस्कारपाठ्यसंयुक्ता सम्यङ्न्याय्यप्रतिष्ठिता[4] ।
[5]द्विविधा जातिभाषा च प्रयोगे समुदाहृता ॥ २९
[6]म्लेच्छशब्दोपचारा च[7] भारतं वर्षमाश्रिता[8] ।
अथ योन्यन्तरीभाषा [9]ग्राम्यारण्यपशूद्भवा ॥ ३०
नानाविहङ्गजा चैव नाट्यधर्मीप्रतिष्ठिता[10] ।
जातिभाषाश्रयं[11] पाठ्यं द्विविधं समुदाहृतम् ॥ ३१
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम्[12] ।
धीरोद्धते सललिते[13] धीरोदात्ते तथैव च ॥ ३२
धीरप्रशान्ते च तथा[14] पाठ्यं योज्यं तु[15] संस्कृतम् ।
[16]एतेषामपि सर्वेषां [17]नायकाना प्रयोगजम्[18] ॥ ३३
कारणव्यपदेशेन प्राकृतं संप्रयोजयेत् ।

---

पशुपक्षिप्रभृतीनां यदुक्तं तत् नाट्यप्रयोगे कुत्राप्यवसरे संभाव्यमित्याह नाट्यधर्मीति । उपचारो व्यवहारः । कारणव्यपदेशेनेति अवस्थादिवशात् यथा—अर्जुनस्य बृहन्नलारूपेण प्रच्छन्नस्य कारणान्याहरते ।

---

1 द - सत्यादिभाषा देवानामार्यभाषा तु भूभुजाम् । च - अभिभाषा 2 म - भाषेति कीर्तिता भ - भाषैव सा स्मृता 3 भ - संस्कारगुणसंपन्ना 4 ड - न्याय-प्रतिष्ठिता द - राज्ये प्रतिष्ठिता च - नाट्यप्रतिष्ठिता नय - संयुक्ताः...प्रतिष्ठिताः । भ - सप्तद्वीपप्रतिष्ठिता 5 चद - विविधा 6 भ - म्लेच्छदेशप्रयुक्ता च 7 यन - चाराश्च 8 भद - तथा भारतसंश्रया ड - आश्रिताः 9 - च - ग्रामारण्य 10 दय - नाट्यधर्मप्रयोगतः ड - नाट्यधर्मीप्रयोगतः भ - धर्मे प्रतिष्ठिता च - प्रयोगजाः 11 भ - आश्रितं 12 द - चातुर्वर्ण्यादिसंश्रयम् 13 चभ - धीरललिते 14 भ - शान्तके चैव 15 ग - च 16 चढ - एषामेव नगड - एषामेव च 17 भ - गायकानां 18 ड - प्रयोगतः न - प्रयोगजा ।

[1]दारिद्र्याध्ययनाभावयदृच्छादिभिरेव च ॥ ३४

ऐश्वर्येण प्रमत्तानां[2] दारिद्र्येण प्लुतात्मनाम्[3] ।
[4]अनधीतोत्तमानां च संस्कृतं न प्रयोजयेत् ॥ ३५

[5]व्याजलिङ्गप्रविष्टानां[6] श्रमणानां[7] तपस्विनाम् ।
भिक्षुचक्रचराणां[8] च प्राकृतं संप्रयोजयेत् ॥ ३६

[9]भागवततापसोन्मत्तबालनीचग्रहोपसृष्टेषु ।
स्त्रीनीचजातिषु तथा नपुंसके प्राकृतं योज्यम् ॥ ३७

परिव्राण्मुनिशाक्येषु चोक्षेषु श्रोत्रियेषु च[10] ।
[11]शिष्टा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ॥ ३८

[12]राज्ञ्याश्च गणिकायाश्च शिल्पकार्यास्तथैव च ।
[13]कलावस्थान्तरकृतं योज्यं पाठ्यं तु संस्कृतम् ॥ ३९

---

ऐश्वर्येणेति श्रुताध्ययनशून्यत्वमनेन लक्ष्यते । क्रीडापीत्यन्ये । व्याजलिङ्गे ये प्रविष्टा जीविकाद्यर्थम् । चक्रचरा ये चक्रेण जीवन्ति । भागवता इह देवलकाः । उत्तमग्रहैः देवगन्धर्वादिभिराक्रान्तानां संस्कृतभाषेत्याभिप्रायेणाह नीचग्रहेति । नीचग्रहैः पिशाचादिभिरुपसृष्टेषु स्वीकृतेष्विति । नीचजातयश्चण्डालाद्याः । चोक्षा भागवतविशेषा, ये एकायना इति प्रसिद्धाः । लिङ्गस्था यतिप्रभृतयः । शिल्पकारिकाः कलासु विदग्धाः । राज्ञः स्त्री महादेवीरूपा उपचाराद्राजशब्दवाच्येति "अन उपधा लोपिन" इति ङीपि राज्ञी

---

1 द - सार्धः श्लोको नास्ति । म - मातृकायामेवेदं श्लोकार्धम् । 2 च - प्रमत्तस्य 3 च - प्लुतस्य च ढ - दारिद्र्येणाप्लुतस्य च. 4 नय - उत्तमस्यापि पठतः (च - ब्रुवतः) प्राकृतं संप्रयोजयेत् ढ - उन्मत्तस्यापि पठतः प्राकृतं संप्रयोजयेत् 5 द - ऋतुलिङ्ग 6 ड - प्रतिष्ठानां 7 चड - श्रवणानां 8 दन - चक्रधराणां ग - चक्रचरणानां 9 अस्य श्लोकस्थाने भम - योर्विना सर्वेषु पाठो यथा—बाले ग्रहोपसृष्टे च स्त्रीणां स्त्रीप्रकृतौ तथा । नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते । (ग - बालग्रह) 10 भ - मुख्येषु ब्राह्मणश्रोत्रियादिषु । म चौक्ष्येषु...॥ 11 न - द्विजा 12 भ - देव्याश्च य - राज्ञश्च 13 न - कार्यावस्थां ।

सन्धिविग्रहसंबन्धं [1]तथा च [2]प्राप्तवाग्गतिम् ।
ग्रहनक्षत्रचरितं खगानां रुतमेव च ॥ ४०
सर्वमेतत्तु[3] विज्ञेयं [4]काव्यबन्धे शुभाशुभम् ।
नृपपत्न्या[5] स्मृतं तस्मात्काले पाठ्यं तु संस्कृतम् ॥ ४१
क्रीडार्थं सर्वलोकस्य [6]प्रयोगे च सुखाश्रयम् ।
[7]कलाभ्यासाश्रयं चैव पाठ्यं वेश्यासु संस्कृतम् ॥ ४२
[8]कलोपचारज्ञानार्थं क्रीडार्थं पार्थिवस्य च[9] ।
निर्दिष्टं शिल्पकार्यास्तु[10] नाटके संस्कृतं वचः ॥ ४३
आम्नायसिद्धं सर्वासां शुभमप्सरसां वचः[11] ।
संसर्गाद्देवतानां च[12] तद्धि लोकोऽनुवर्तते ॥ ४४
[13]छन्दतः प्राकृतं पाठ्यं[14] स्मृतमप्सरसां भुवि[15] ।
[16]मानुषाणां च कर्तव्यं कारणार्थव्यपेक्षया ॥ ४५

---

यदि पुंयोगादित्यत्र अत इति वर्तते । राज्ञ्याः संस्कृते निमित्तं दर्शयति सन्धिविग्रहेति यस्माद्राज्ञः सन्धिविग्रहसंबन्धं षाड्गुण्यादि तथाग्रहनक्षत्रचेष्टितं, शुभाशुभरूपं पक्षिरुतं च शुभाशुभमितीयत्सर्वं नृपपत्न्या ज्ञेयं, तस्माद्राज्ञः सा प्रतिशरीरकल्पा कदाचित्संस्कृतयोग्यापि भवति ।

सुखाश्रयमिति । अनेन विशेषलक्षणप्रयोगादि निरस्यति । आम्नायः पुराणादिः लोकोऽनुवर्तते अनुमन्यत इति यावत् । भुवीति अवतीर्णानामिति

---

1 ड - संपन्नं 2 यन - चापि शुभाशुभम् ड - अशुभं शुभम् 3 ड - एतद्धि 4 ड - कार्यबन्धे च - यस्माद्राजा 5 य - भवेत्पाठ्यं संस्कृतं द्विजसत्तमाः 6 प - प्रयोगस्य 7 ड - क्रीडालीलार्थकं चैव 8 ड - लोकोपचार 9 य - तु 10 ग - शिल्पिकार्ये तु ड - शिल्पकार्येषु 11 य - सर्वेषां दिव्यानां वचनं शुभम् । ड - शुभं त्वाप्सरसां वचः । 12 च - वै य - हि 13 भ - छन्दसां 14 ड - वाक्यं 15 भ - अपि 16 च - मानुषीणां ।

न बर्बरकिरातान्ध्र [1]द्रमिलाद्यासु जातिषु ।
[2]नाट्यप्रयोगे कर्तव्यं [3]पाठ्यं भाषासमाश्रमम् ॥ ४६
[4]सर्वास्वेव हि शुद्धासु जातिषु द्विजसत्तमाः ।
[5]शौरसेनीं समाश्रित्य भाषां काव्येषु योजयेत् ।[6] ४७
अथवा छन्दतः कार्या [7]देशभाषा प्रयोक्तृभिः ।
नानादेशसमुत्थं हि काव्यं[8] भवति नाटके ॥ ४८
मागध्यवन्तिजा प्राच्या [9]शौरसेन्यर्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः॥ ४९
[10]शकाराभीरचण्डाल[11]शबरद्रमिलान्ध्रजाः[12] ।
हीना [13]वनेचराणां च विभाषा नाटके स्मृता ॥ ५०
मागधी तु नरेन्द्राणामन्तःपुरसमाश्रया[14] ।
चेटानां राजपुत्राणां श्रेष्ठिनां[15] चार्धमागधी ॥ ५१
प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिजा[16] ।
नायिकानां सखीनां च [17]शूरसेन्यविरोधिनी ॥ ५२

---

शेषः । शुद्धास्विति अनुलोमवशेन संस्कारवत्सु जातिष्वपीति पाठः ।

देशभाषां संक्षिप्याह मागधीत्यादि । भाषा संस्कृतापभ्रंशः, भाषापभ्रंशस्तु विभाषा सा तत्तद्देश एव गह्वरवासिनां प्राकृतवासिनां च, एता

---

1 य - द्रविड 2 न - नाट्ययोगे तु च - नाट्ययोगेषु 3 न - काव्यं 4 न - जातिष्वेतासु सर्वासु शुभासु च - जातिरथासु सर्वासु शुद्धाशुद्धि द्विजसत्तमाः (?) 5 च - शौरसेनं समाश्रित्य भाषाः कार्यास्तु नाटके 6 न - भाषा कार्या तु नाटके 7 ढ - दैवी भाषा 8 ढभ-कार्यं 9 न- शूरसेना ढ- शूरसेनी 10 च- शबर 11 न - चण्डालाः 12 च - सचरद्रामिडोद्भजाः (ग - शबर) 13 ढ - वनचराणां 14 ढ - नराणां चेवान्तःपुरनिवासिनाम् न - निवासिनाम् 15 ढन : श्रेष्ठीनां 16 ढ - योःसाभाषा अवन्तिजा (?) 17 न - शूरसेना भ - शौरसेनी ।

[1]यौधनागरकादीनां दाक्षिणात्याथ दीव्यताम्[2] ।
बाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा[3] ॥ ५३

[4]शकारघोषकादीनां तत्स्वभावश्च यो गणः ।
[5]शकारभाषा योक्तव्या [6]चाण्डाली पुल्कसादिषु[7] ॥५४

अङ्गारकारकव्याध[8]काष्ठ[9]यन्त्रोपजीविनाम् ।
[10]योज्या [11]शकारभाषा तु किंचिद्वानौकसी तथा ॥ ५५

[12]गजाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ।
आभीरोक्तिः शाबरी वा[13] द्राविडी वनचारिषु[14] ॥ ५६

[15]सुरङ्गाखनकादीनां [16]सन्धिकाराश्वरक्षताम् ।
व्यसने नायकानां[17] चाप्यात्मरक्षासु मागधी[18] ॥ ५७

---

एव नाट्ये तु । अन्ये तु निदर्शनार्थत्वादस्य पैशाच्यादयोऽपि प्रयोज्या इत्याहुः । नरेन्द्राणां यदन्तःपुरं तन्निवासिनामिति संबन्धः । दीव्यतामिति कितवानाम् । शकारा नीचाभिजनाः आर्थीभूतत्वेन सदर्पाः । शकाराबहुला भाषा शकारभाषा । पुल्कसो डोम्बः मृतप इत्यन्ये । वनौकसामियं वनेचरीत्यर्थः । सुरङ्गाखनकाः सन्धिच्छेदकृतः । कारा बन्धनगृहम् । व्यसनं कस्यांचिदापदि जातायां मा मां लोको ज्ञास्यतीतित्यभिप्रायेणात्मनो रक्षार्थं नायकोऽपि मागध्या व्यवहरेत् । द्रमिडकादि पूर्वविधानादिनिषेधो विशिष्टेष्विति पर्यन्तवा-

---

1 च - योध ड - यौधनागरिक य - यौधानां गरकादीनां 2 ड - च दीव्यतम् भ - दीयताम् 3 ड - खस्थानां च स्वदेशजा न - खषाणां च स्वदेशजा खसानां चैवभूमिषु । 4 च - शबराणां शकादीनां ड - शकाराणां शकादीनां 5 च - सकार 6 ड - पाञ्चाली य - चण्डाली 7 न - पुल्कसादिषु 8 च - कारव्याधानां 9 ड - पत्र 10 भ - ज्ञेया 11 ड - शबर 12 च - गवाश्व ड - गजाश्वश्वाविक 13 भ - च ड - स्यात् 14 च - द्रमिलादिषु 15 ड - सुरङ्गवनकादीनां । 16 च - सोण्डीकायाश्च रक्षिणाम् ड - औष्ट्रिकाणां च रक्षतां न - औष्ट्रीकाराश्वरक्षताम् ढ - औढ्रिकारसरक्षसाम् । 17 च - स्यात् ड नायिकादीनां 18 भ - योजयेत् ।

न बर्बरकिरातान्ध्र[1] द्रमिलाद्यासु जातिषु ।
नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रितम्[2] ॥ ५८
गङ्गासागरमध्ये तु ये देशाः संप्रकीर्तिताः[3] ।
[4]एकारबहुलां भाषां तेषु तज्ज्ञः प्रयोजयेत् । ५९
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
[5]नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ६०
सुराष्ट्रावन्तिदेशेषु[6] वेत्रवत्युत्तरेषु च[7] ।
ये देशास्तेषु कुर्वीत चकारप्रायसंश्रयाम्[8] ॥ ६१
हिमवत्सिन्धुसौवीरान्ये जनाः समुपाश्रिताः[9] ।
[10]उकारबहुलां [11]तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ६२
[12]चर्मण्वतीनदीतीरे[13] ये चार्बुदसमाश्रयाः[14] ।
[15]ओकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६३
एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
[16]अत्र नोक्तं मया यत्तु[17] लोकाद् ग्राह्यं बुधैस्तु तत्[18] ॥ ६४

सिषु द्रमिडेषु द्रष्टव्यो, बर्बरान्ध्रादिसाहचर्याद् भाङ्गलदेशादिगतेषु । गङ्गासागरमध्य इति पूर्वदेश उपलक्षितः ।

विन्ध्यसागरमध्य इति दक्षिणसौराष्ट्रः । सुराष्ट्रावन्तिदेशेष्विवति पश्चिमः वेत्रवत्यादिनोत्तरः । वाक्यविधानमित्येकेनापि पदेन सकलो वाक्यार्थः स्फुटी-

1 भ - किरातोढ्र 2 भ - समन्वितम् च - समाश्रयम् 3 न - संप्रवर्तिताः 4 भ - षकार 5 भ - तकार ढ - शाकारबहुलां तेषां 6 ढ - तु 7 ड - अन्तरेषु च 8 न - चकारबहुलामिव च - चकारबहुलामिह 9 न - ये च देशान् समाश्रिताः ड - ये च देशाः समाश्रिताः 10 ड - ओंकार भ - ढकार म - थकार न - ओकार 11 ड - तज्ज्ञैः 12 ड - सरस्वतीनदीतीरे पारियात्रार्बुदाश्रिताः 13 च - पारे 14 च - समाश्रिताः 15 च - तकार य - औकर ड - ओंकार 16 ड - अथ 17 च - यच्च 18 भ - तथा न - यत् ।

एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः[1] ।
पुनर्वाक्यविधानं[2] तु लौकिकं संनिबोधत ॥ ६५
उत्तमैर्मध्यमैर्नीचैर्यैः संभाष्या यथा नराः ।
[3]समानोत्कृष्टहीनाश्च नाटके तान्निबोधत ॥ ६६
देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां[4] योषितस्तथा ॥ ६७
देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये[5] ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ६८
आर्येति ब्राह्मणं ब्रूयान्महाराजेति पार्थिवम्[6] ।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥ ६९
[7]नाम्ना राजेति वा वाच्या ब्राह्मणैस्तु नराधिपाः ।
[8]तत्क्षाम्यं हि महीपालैर्यस्मात्पूज्या द्विजाः स्मृताः[9] ॥
ब्राह्मणैः सचिवो वाच्यो[10] ह्यमात्य सचिवेति वा[11] ।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ७१

---

क्रियते, अन्योन्यरूपता नीयत इत्यभिप्रायेण वाक्यग्रहणं पदविधानं हि भविष्यति । देवानां देवाः स्तुत्याः । तथेति स्त्रीत्वेन भगवतीति । नानाश्रुतधराः बहुश्रुताः । क्षाम्यमित्यङ्गीकर्तव्यम् । सचिव इति राज्ञो मन्त्री ।

---

1 म - तथैव च । अत्र दसंज्ञकमातृकायांविना जादिबान्तासु यमातृकायां च अष्टादशोऽध्यायः, यथा "इति भारतीये नाट्यशास्त्रे भाषाविधानं नामाष्टदशोऽध्यायः" इति । भ - यथावद् द्विजसत्तमाः 2 न - वाक्यप्रचारं च - वाक्यविचारं म - वाक्योपचारं 3 म - समानो वाल्पहीनो वा 4 भ - चैषां ड - यास्तासां 5 न - स्मश्रुधराश्च ड - श्रुतिधराश्च भ - व्रतधराश्च 6 न . पार्थिवः 7 च - छन्दतो नामभिर्वाच्या 8 म , तत्क्षाम्यं तु ढ - तत्क्षन्तव्यं 9 य - द्विजोत्तमाः 10 ढ - सचिवैर्वाच्यं न - भाष्यो 11 भ - वै.

समैः संभाषणं कार्यं येन नाम्ना स संज्ञितः।
हीनैः [1]सपरिवारं तु नाम्ना संभाष्य उत्तमः॥ ७२
नियोगाधिकृताश्चैव[2] पुरुषा [3]योषितस्तथा।
कारुकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि[4]॥ ७३
[5]मार्षो भावेति वक्तव्यः किंचिदूनस्तु मार्षकः[6]।
समानोऽथ[7] वयस्येति [8]हं हो हण्डेति वाधमः[9]॥ ७४
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा[10]।
[11]तपस्वीति प्रशान्तस्तु साधो इति च शब्द्यते[12] ॥७५
स्वामीति युवराजस्तु कुमारो भर्तृदारकः।
सोम्य भद्रमुखेत्येवं हे पूर्वं चाधमं वदेत्॥ ७६

---

सपरिवारं नाम्नेति उत्तमो राजा हीनैः स्वनाम परिगृह्य, यद्यन्नाम वत्सराज सोमवंशमौक्तिकमणे इत्यादि तेन, भाष्यः। सपरिहासमिति वा पाठः परिहासः परितोषोपलक्षणं तेन चाटुकारादि परितोषावसरे हीनैरपि राजा नाम्ना संभाष्यः। "उदयने महीं शासति को विपदामवकाशः" इत्यादौ। कारुकाः स्तूपकारादयः शिल्पिनश्चित्रकारादयः। भावेत्यामन्त्रणं विवक्षितमित्यन्यविभक्त्यन्तो न प्रयोज्य इत्येतत्त्वयुक्तम्। वयस्येत्येवमादावपि प्रसङ्गात्संभाषणापक्रमकृताद्यामन्त्रणविभक्तिः सर्वत्र विवक्षितैव। अधमैर्जनैः समानोऽधम एव, हंहो हण्डे इति वा संभाष्यः। चकाराद् विनापि

---

1 च - शपरिहारं तु ढ - सपरिहासं भ - सपरिचारं तु वाच्यं नामोत्तमस्य तु 2 च - ये तु 3 भ - याः स्त्रियः 4 ढ - च 5 च - मर्षो म - मान्यो 6 च - मर्षकः ग - मारिषः 7 ड - हि 8 च - हंहोहन्तेति ढ - होहंवा इति 9 न - चाधमैः ढ - हंहोतिवाधम 10 ड - सूते तु सर्वथा 11 न - तपस्वी च प्रशान्तः सं साधो इति हि ड - तपस्वी च प्रसन्नश्च 12 भ - शब्दितः 13 भ - वाच्यं पूर्वेण चापरम् च - वाधमं वदेत्।

यद्यस्य कर्म शिल्पं वा विद्या वा जातिरेववा।
स तेन नाम्ना [1]भाष्यो हि नाटकादौ प्रयोक्तृभिः[2]॥७७
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः।
वाच्यः शिष्यः सुतो वापि पित्रा वा गुरुणापि वा [3]॥७८
संभाष्या शाक्यनिर्ग्रन्था [4]भदन्तेति प्रयोक्तृभिः।
आमन्त्रणैस्तु पाषण्डाः [5]शेषाः स्वसमयाश्रितैः॥ ७९
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृभिस्तथा[6]।
भट्टेति सार्वभौमस्तु नित्यं परिजनेन तु[7]॥ ८०
राजन्नित्यृषिभिर्वाच्यो ह्यपत्यप्रत्ययेन वा[8]।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः॥ ८१
विदूषकेण राज्ञी च चेटी च भवतीत्यपि।
नाम्ना वयस्येत्यपि वा राज्ञा[9] वाच्यो विदूषकः॥ ८२
सर्वस्त्रीभिः [10]पतिर्वाच्य आर्यपुत्रेति यौवने।
अन्यदा पुनरार्येति [11]महाराजेति भूपतिः॥ ८३

---

हेशब्देन। कर्म पाकादि, विद्या त्रय्यादि। जातिर्गोत्रं देशो वा। शाक्याः सौगताः, निर्ग्रन्थाः क्षपणकाः। शेषाः पाषण्डा इति पाशुपतादयः। स्वसमयो यथा पाशुपतानां भापूषन्, भासर्वज्ञ, इत्यादि संभाषणम् तथा कचिद्वाक्यादिशब्देन। अपत्यप्रत्ययेनेति कौरवेत्यादिना महाराजेति। यौवनादन्यत्रार्यपुत्रेति श्वशुरेण व्यपदेशः, तस्य यौवनं शृङ्गारोचितमुक्तं भवति।

---

1 द - संभाष्यो 2 भ - नाटकादिषु योक्तृभिः 3 भ - नाटके नाट्यकोविदैः
4 ड - भद्रं ते 5 ड - शेषास्तु द - भूराययाश्रितैः (?) च - स्वय उपश्रितैः (?)
6 द - परिजनेन वा 7 द - ह 8 न - तु 9 द - अथवा राज्ञा न - राज्ञो
10 म - पतिर्वाच्यो ह्यार्य 11 ड - वाच्यो।

आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः।
[1][योषिद्भिरथ काम्येति राजपुत्रेति योधनैः॥] ८४
पुरुषाभाषणं ह्येवं कार्यं नाट्ये प्रयोक्तृभिः।
पुनः स्त्रीणां प्रवक्ष्यामि यथाभाष्यास्तु नाटके[2] ॥८५
तपस्विन्यो देवताश्च वाच्या भगवतीति च[3]।
[4]गुरुभार्या तु वक्तव्या स्थानीया भवतीति च। ८६
[5]गम्या भद्रेति वाच्या वै वृद्धाम्बेति च[6] नाटके।
[7]राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन वै[8]। ८७
भट्टिनी स्वामिनी देवी त्येवं वै[9] नाटके बुधैः।
देवीति महिषी वाच्या राज्ञा परिजनेन वा[10]॥ ८८
[11]भोगिन्यः परिशिष्टास्तु स्वामिन्य इति वा पुनः।
कुमार्यश्चैव वक्तव्याः प्रेष्याभिर्भर्तृदारिकाः॥ ८९
स्वसेति भगिनी वाच्या वत्सेति च यवीयसी[12]।
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था व्रतिनी च या॥ ९०

---

अनुजो ज्येष्ठेन पुत्रवत् वत्स तात पुत्रकेति संभाष्यः। पुरुषाभाषणमिति भूयस्त्वाक्षेप उपसंहारः। स्त्रीसंभाषणं त्वपि मध्ये निरूपितं तपस्विन्य इति पूर्वं तेषां योषित इति, अत्र स्वयमतपस्विन्योऽपीत्युक्तमिति न पुनरुक्तम्। गुरुभार्या मान्या अन्या वा स्त्री, स्थानीया पूज्या ईषद्वृद्धा। पत्नीति सहधर्म-

---

1 भ - मातृकायामेव 2 द - च वक्ष्यामि संभाषं नाटकाश्रयम् (भाषां नाटकाश्रयाम्) 3 ढ - ह 4 भ - गुरुरार्येति ङ - गुरुभार्या च 5 द - ग्राम्या भद्रेति वक्तव्या 6 ङ - वृद्धा वाच्येति 7 भ - राजपुत्र्यस्तु ङ राजपत्न्यश्च 8 च - तु 9 द - स्वामिनीत्येवं सर्वदा 10 द - च च - तु 11 य - भोगिन्य इति शेषास्तु द - भट्टिन्य इति शेषास्तु ङ - भोगिन्य इति शेषा हि प - भोगिन्य इति शेषाभिः 12 ङ - ज्येष्ठा वत्सेति सानुजा (ढ - चारजा) न वत्सा चेतीह सर्वदा द - वत्सा चेतीह सर्वथा।

पत्नी चार्येति संभाष्या पितृनाम्ना सुतस्य वा[1] ।
समानाभिस्तथा सख्यः हलेति स्यात्परस्परम्[2] ॥ ९१
प्रेष्या हञ्जेति वक्तव्या स्त्रियां यत्तूत्तमा भवेत् ।
अज्जुकेति [3]च वक्तव्या वेश्या परिजनेन च[4] ॥ ९२
[5]अत्तेति गणिकामाता वाच्या परिजनेन हि ।
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ॥ ९३
पुरोधःसार्थवाहानां भार्यास्त्वार्येति सर्वदा[6] ।
[7]तल्लिङ्गार्थानि नामानि कार्याणि कविभिः सदा[8] ॥ ९४
औत्पत्तिकानि यानि स्युरप्रख्यातानि[9] नाटके ।
ब्रह्मक्षत्रस्थनामानि गोत्र[10]कर्मानुरूपतः ॥ ९५
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि हि[11] ।
दत्तप्रायाणि नामानि [12]वणिजां संप्रयोजयेत् ॥ ९६
[[13]कापालिकास्तु घण्टान्तनामानः समुदाहृताः] ।

चारिणी, अत एव नटी नाट्यवेदमहासत्रदीक्षितेन सूत्रधारेणार्येणार्ये इत्यामन्त्यते । पितृनाम्नेति माठरपुत्री । सुतस्येति सोमशर्मजननी । वेश्या स्वेन परिजनेन अज्जुके इति संभाष्या ।

सर्वदेति यौवनेऽपि पुरोहितादिभिरार्येति भार्या वाच्या । औत्पत्तिकानीति स्वयं वा येन कल्प्यन्ते, अत एवाख्यातानि तल्लिङ्गार्थानि प्रकृतार्थसूचकाभिधेययुक्तानि कार्याणि । एतदेव निदर्शनेन स्फुटयति ब्रह्मक्षत्रस्येत्यादिना ।

1 द - सा 2 च - सख्यां हला भाष्याः परस्परम् 3 भवेद्वाच्या 4 द - तु 5 ग - या त्वत्र वृद्धा सात्वत्ताभाष्या परिजनेन तु 6 भ - नित्यशः न - भार्या त्वार्येति सर्वदा ड - नार्यस्त्वार्येति सर्वदा द - अर्यातु सर्वदा 7 भ - तल्लिप्सार्थानि ढ - तल्लिङ्गस्थानि 8 द - द्विजाः 9 द - न प्रख्यातानि ड - न प्रत्याख्याति 10 प - धर्म 11 भ - शर्मवर्मेति तानिहि द - तु ड - च 12 च - वणिजां तु न - वणिजानां 13 द - मातृकायामेव ।

[1]शौर्योदात्तानि नामानि तथा शूरेषु योजयेत्[2] ॥ ९७
विजयार्थानि नामानि राजस्त्रीणां तु नित्यशः[3] ।
दत्ता मित्रा च सेना च[4] वेश्यानामानि योजयेत्[5] ॥९८
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि योजयेत्[6] ॥ ९९
गम्भीरार्थानि नामानि ह्युत्तमानां प्रयोजयेत्[7] ।
[8]यस्मान्नामानुसदृशं कर्म तेषां भविष्यति ॥ १००
जातिचेष्टानुरूपाणि शेषाणामपि योजयेत्[9] ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः॥१०१
एवं [10]नामविधानं तु कर्तव्यं कविभिः सदा[11] ।

---

शौर्योदात्तानीति भीमपराक्रम इति यथा । विजयार्थानीति शुभलक्षणविजयवतीत्यादीनि । देवदत्तावसन्तसेनाविदग्धमित्रेत्यादि वेश्यानाम् । नानाकुसुमनामानीति मालतीमल्लिकेत्यादि कुसुमग्रहणं तन्मञ्जर्याद्युपलक्षणं चूतलतिकेत्याद्यपि हि दृश्यते नाम । मङ्गलार्थानीति सिद्धार्थका इत्यादीनि । गम्भीरार्थानि अक्षोभ्य इत्यादीनि । नास्ति संकेतको भार इत्याशयेन पृच्छति अत्रोत्तरं नामानुरूपमिति । नाम किलेश्वरेच्छावशात्स्वरूपक्रोडीकारेणैव जायते । तथा हि नामाक्षरे ग्रहाभिचारयन्त्रकर्मादिपीडिते शान्तिकपौष्टिकाद्युपचारभाजि वा तथैव पुरुषस्य फलोदय इत्यभिप्रायः । कवित्वयुक्तो नट

---

1 द मातृकायां न वर्तते । 2 भ - शूरे प्रयोजयेत् 3 य - राज्ञां स्त्रीणां च कारयेत् द - तु कारयेत् च - च कारयेत् 4 ड - सेनेति भ - दत्तां मित्रां च सेनां च 5 द - कारयेत् ग - मित्राणि कारयेत् 6 न - कारयेत् 7 न - योजयेदुत्तमेषु च (ड-तु) 8 द - कस्मान्नाम्ना तु न - कस्मात् 9 न - कारयेत् 10 द - नामाभिधानं 11 न - विधानस्यकविभिस्तथा ड - अथ ।

[1]एवं भाषाविधानं तु ज्ञात्वा कर्माण्यशेषतः[2] ॥
ततः पाठ्यं प्रयुञ्जीत षडलङ्कारसंयुतम्[3] ।

पाठ्यगुणानिदानीं वक्ष्यामः। [4]तद्यथा सप्तस्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलङ्काराः, षडङ्गानीति। एषामिदानीं [5]लक्षणमभिव्याख्यास्यामः तत्र

---

इत्यभिप्रायेणाह भाषाविधानं ज्ञात्वा, तत इति तत्परिज्ञातपूर्वकं काव्यं कृत्वा प्रयोगे पाठ्यं प्रयुञ्जीतेत्यर्थः । यदि त्वन्यः कविस्तदा पाठ्यस्य संज्ञा च मूलभूतत्वात् प्रयोक्तृत्वेनोक्तो द्रष्टव्यः । षडलङ्कारसंयुतमिति स्वरस्थानवर्णकाकलङ्काराङ्गानि षट् अत्रालङ्कारशब्देन विवक्षितानि, एतैर्हि भूषितं काव्यं पाठ्यमुच्यते ।

एवं हि वक्तव्यत्वमुपादानस्य यदि सकलस्वविवक्षाविशिष्टार्थप्रतिपादकत्वं पठनार्हं च पाठ्यं तत्स्वराद्यायत्तं सर्वमिति। अत एवाह पाठ्यगुणानिति गुणाः उपकारकाः, यदुपकृतं काव्यं पाठ्यं भवतीत्यर्थः ।

उद्देशक्रमेण व्याचष्टे तत्रेत्यादि ।| स्वरगतं वितत्य गेयाधिकारे प्रकटयिष्यामः। इह काकुषु स्वरा एव वस्तुत उपकारिणः । तत्परिकरभूतं तु स्थानादि स्वरेषु प्रकृतिभूतेषु काकुरूपता जन्यते । तत्र स्थानशब्देनैषां स्वरूपनिष्पत्तेराश्रयो दर्शितः। उदात्तानुदात्तस्वरितकम्पितरूपतया स्वराणां यद्रक्तिप्रधानत्वमनुरणनमयं तच्च्यागेनोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगीति दर्शितम् । यदि हि स्वरगता रक्तिः पाठ्ये प्राधान्येनावलम्ब्येत तदा गानक्रियासौ स्यात्, न पाठः। पूर्णस्वरत्वाभावादङ्गानां भेद इति चेत्,

---

1 द - एवं भाषाविधानानि च - एवं भाषाविधानादि ।
भ - भाषाविधानं विज्ञेयं ततः प्रकृतिसम्भवम् ।
ततः पाठ्यस्य वक्ष्यामि गुणांश्च द्विजसत्तमाः ।
स्वरैः षड्जादिभिर्युक्तं नानारससमन्वितम् ।
तद्यथा—
य - एवं भाषाविभावादि 2 च - सर्वमशेषतः प - सर्वविशेषतः 3 न - संश्रयम् 4 न - तथा 5 भ - लक्षणानीति म - लक्षणान्यभिव्याख्यास्यामः न - लक्षणान्यभिधास्यामः ।

सप्तस्वरा नाम—षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः। त एते रसेषूपपाद्याः। [1]यथा—

न, अपूर्णस्वरत्वेऽपि गानत्वप्रतिज्ञानात्, षाडवौडुवितयोः त्रिचतुरस्वरत्वेऽपि गानप्रतीतिर्भवत्येव, यथा कृत्रिमवंशिकायां त्रैस्वर्ये, भिन्नषड्जभाषायां च कालिन्द्यां चातुस्स्वर्ये। तस्माद्गानवैलक्षण्याय रक्तिलक्षणं धर्ममनादृत्योच्चादिस्थानस्पर्श एवात्र प्रधानमिति वक्तुं वर्णोपादानम्। अन्यथा स्वरसप्तकातिरिक्तस्योदात्तादेर्भावादनर्थकं तदुपादानम्।

यत्तु किंचिदुदात्तादिधर्माणां गात्रस्य निग्रहः कण्ठविवरस्य संवृततेत्यादिशिक्षापठितोदात्तादिधर्मप्राप्तिरुच्चाद्यलङ्कारेषु यथा स्यादिति प्रयोजनमुक्तं, तत्राप्यसदुक्तं चेन्न प्रयोजनं किं तद्धर्मप्राप्त्या कृत्यमिति न विद्मः॥

नन्वेवं स्वराभिधाने किं प्रयोजनं, उच्यते—प्राणभूतं तावद्ध्रुवागानं प्रयोगस्य, तत्र जात्यंशकाविनियोगो भविष्यति तदिदानीं पाठावसरे किं सर्वथैव त्यक्तव्यमित्याशङ्काशमनाय तत्स्थायिस्वराश्रयणं प्रमुखीकृत्य पाठः कर्तव्य इत्येतत्स्वराभिधानस्येह प्रयोजनम्।

एवमुपगानवैलक्षण्ये संपन्ने बाह्यार्थसमर्पणेन चित्तवृत्तिसमर्पणया वाभिनयानुभावरूपतालाभाय काकुरर्थरसभेदेनाभिधीयते। तत एव काकुरूपत्वमेव सर्वत्रानुयायि अतिशायित्वे मुख्योपयोगात्। तथा चोच्चदीप्ताद्यलङ्कारेष्वप्युत्तरत्र काकुशब्देनैव मुनिर्व्यवहरिष्यति। काकोरेवोपकारसंपादकाः परिपूर्णतायायिनोऽलङ्काराः, अलमिति पर्याप्त्यर्थः, इह न भूषणार्थः। अङ्गानि तु विच्छेदादीनि रसमर्थं शोभादि कर्म च पोषयितुं काकोरेवोपकारीणीति, एवं परमार्थतः काकुरेवायं पञ्चभी रूपान्तरैः पूर्णीक्रियते। काका च पठ्यमानस्य स्वोचितचिज्जडस्वरूपार्थाभिमुख्येन नयनेनाभिनयता नीयत इति काकुरेवात्र प्रधानम्। तथा चैतदध्यायान्ते चोपसंहरिष्यति "उक्तं काकुविधान"मिति। अन्यथाङ्गषट्कमध्यपतितस्योपसंहारोऽन्याङ्गनिरूपणं चाभिधानमिति सर्वमसमञ्जसं स्यात्। तस्मात्काकुरेवात्र प्रधानमिति उपाध्याया हि वचनस्य सङ्केतितमर्थमन्यथाकारं समर्थयन्ति।

ननु श्रुतमर्थमनादृत्य कथं काकुरेवं कुर्यात्। तत्रोक्तमन्यैः वस्तुस्वभावोऽत्र द्रष्टव्यो न हि दृष्टेऽनुपपन्नं नामेति। वयं तु ब्रूमः—इह येयं प्रथमेन

1 भ - तद्यथा।

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ[1] । १०३
षड्जर्षभौ [2]तथा चैव वीररौद्राद्भुतेष्वथ[3] ।
[4]गान्धारश्च निषादश्च कर्तव्यौ[5] करुणे रसे ॥ १०४
धैवतश्चैव कर्तव्यो बीभत्से[6] सभयानके ।

[7]त्रीणि स्थानानि—उरः कण्ठः शिर इति । [8]भवत्यपि च—

---

संवित्स्पन्देन प्राणोल्लासनया वर्णादिरूपविशेषहीना वाग् जन्यते सा नादरूपा सती हर्षशोकादिचित्तवृत्तिं विधिनिषेधाद्यभिप्रायं वा तत्कार्यलिङ्गतया वा तादात्म्येन वा श्रुत्यन्तादि गमयतीति तावत्स्थितम् । तथा च प्राण्यन्तरस्य मृगसारमेयादेरपि नादमाकर्ण्य भयरोषशोकादि प्रतिपद्यते, तदयं नादाच्चित्तवृत्त्याद्यवगमोऽनुमानं तावत् । ये त्वेते वर्णविशेषास्ते तन्नादरूपसामान्यात्मकपदतन्तुग्रन्थिमया इव प्राच्यप्रयात्नातिरिक्तनिमित्तान्तरापेक्षाः, तत एवान्यत्रानभिमतेऽन्यथापि प्रयोक्तुं शक्याः, अत एव दृष्टव्यभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव वा । यथोक्तं "भीरु न मे भयं" इति ब्रुवन्नाशयते भयमित्यन्यप्रकारतां वा वाक्यार्थस्य विशेषार्पणेन विधत्ते । एतच्च वक्ष्यामोऽग्र इत्यास्तां तावत् । सर्वथा पाठ्ये काकुः प्रधानमिति स्थितम् । अत्र हास्यशृङ्गारयोरित्यादिना जात्यंशकविनियोगं भविष्यन्तमनुवदंस्तद् द्रुतस्थायिस्वरानुसारेण काकोः प्रयोग इति दर्शयति ।

अथैषां स्वराणामाश्रयान् दर्शयति त्रीणि स्थानानीति । ननु पाठावसरे वर्णा यत्र मूर्धन्यास्तत्र कथमुरःस्थानस्वरनिष्पत्तिः, एवमन्यत्र वाच्यम् । उक्तं मन्द्रनादात्मिकाया वाचः स्वरसप्तकं रूपं, सा चोरःस्थाननिष्पन्ना सती मूर्धानमभिघ्नन्ती मूर्धन्यं वर्णं तद्रूपं मन्द्रस्वरानुविद्धं दर्शयति । न च मूर्धस्थानत्वेऽपि तस्योच्चताकृतं तारत्वमापद्यते । अन्यदेव हि वर्णनिष्पत्तिस्थानं, मूर्धान्तर्वर्त्यनुविवरमात्रं स्थानान्तरम् । स्वरनिष्पत्तिस्तु विततवितते मूर्ध-

---

1 भ - पञ्चममध्यमौ 2 भ - च कर्तव्ये 3 द - तु 4 भ - निषादश्चैव गान्धारः करुणेसंविधीयते 5 प - कर्तव्यः 6 प - बीभत्सेकर्तव्यः 7 द - त्रीणि स्थानान्युरः कण्ठशिरांसीति भवन्त्यपि 8 भ - भवति चात्र श्लोकः ।

शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु[1] ।
[2]उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥ १०६

काये निष्पद्यमाना तारत्वं संपादयन्ती एवं तारमन्द्रमध्यता सवर्णानां सर्व (स्वर?) स्थानभेदसंपाद्यमानवपुषामप्युपपद्यते। तत्र स्वरग्रहणादेवाक्षिप्ते स्थान-भेदे पुनः स्थानोपादानं षट्षष्टिस्थानभेदनिवृत्त्यर्थम् । तथा ह्युरःस्थाने द्वाविंशति स्थानानि यत्र श्रुतयः स्वराश्च । एवं कण्ठे मूर्ध्नि च । तावतां च स्पर्शे स्फुटं गानमेव स्यात्, न पाठ्यमित्यवोचाम । अत एव गुणशब्दो न धर्मवचनः पाठ्यगुणानिति, किं तु, उपकरणवचनस्थानं च यदेवोपकरणं भवति। अपि च शारीर्यामथ वीणायामित्यादि केचिद् व्याचक्षते—इहार्थ-काकुस्तावद्विधिनिषेधाद्यर्थावगमिका, स्वरकाकुस्तु चित्तवृत्तिसूचिका । एतद्-व्यापारद्वयशून्यान्नेपथ्यपाठवैतालीयपाठादिविषया दूरस्थाभाषणादिविषया च शोभासंपादनदूरश्रवणादिप्रयोजना स्वरकाकुः सा तेन वक्ष्यत इति । एवं प्रष्टव्यास्तावत्—योऽयं स्वरकाकोर्विषय उक्तस्तत्र यद्यर्थरूपं किंचिदभिधेयं तत्रावश्यमर्थकाकोर्वा पृथक्स्वरकाकुः। तथा हि नेपथ्यपाठेऽपि कञ्चुकी पठति 'वीरोऽयमङ्गदः पठति,' 'यौगन्धरायणः पठति'इति, एवंभूतवृत्तिचित्तवृत्त्यादि-विशेषप्रतिपादकेनैव पाठेन भवितव्यम् । वैतालीयपाठेऽपि समुचितावसरावेद नप्रधानेऽवश्यमर्थ आदातव्य एव । उक्तं चैतत्—अर्थानपेक्षया किमभि-नयनमन्यचिन्तया, पुस्तकवाचकपाठो ह्यनुक्रियमाणोऽभिनयतामवलम्बते । अन्यथाभिनयरूपत्वाभावेतदुपकरणधर्म्यादितत्फलरसादिव्यातिरिक्तत्वे स्वरा-तोद्यगानादिवैलक्षण्ये च चिन्तयैव किं प्रयोजनमिति । न स्यात्काकुसामान्य-लक्षणमेतेन किं घटत इत्यन्ये । एवमपि भवतीत्यसमर्थितं स्यात् तद्धि पूर्व-प्रक्रान्तवस्तुसमर्थनेन प्रयुज्यत इति मुनेः शैली । तस्मात्पूर्वोक्तस्थानत्रयसमर्थ-नार्थोऽयं श्लोकः । तदयमर्थः—शारीर्यां वीणायां केवलमुरःशिरःकण्ठलक्ष-णेभ्यः त्रिभ्य एव स्थानेभ्यो, न तु षट्षष्टिस्वरपरिव्यक्तरञ्जनात्मकगानोप-योगिव्यापारः काकुभूतः सूचकरूपः संप्रवर्तते ।

अथशब्दोऽवधारणे । बाह्यायां हि प्रतिबिम्बितायां वीणायां रञ्जना-त्मकस्वरस्वरूपव्यतिरेकेण न काकुसंपत्तिः । वीणाग्रहणं शरीरगतविवृतमध्या-

1 ड - च 2 ड - उरसा शिरसा ।

[1]अभाषणं च दूरस्थे शिरसा संप्रयोजयेत् ।
नातिदूरे च कण्ठेन ह्युरसा चैव पार्श्वतः[2] ॥ १०७
[3]उरसोदाहृतं वाक्यं शिरसा दीपयेद्बुधः[4] ।
[5]कण्ठेन शमनं कुर्यात्पाठ्ययोगेषु[6] सर्वदा[7] ॥ १०८

काशदेशपरिग्रहार्थं, न शरीरमात्रे स्वरनिष्पत्तिः, अपि तु तत्रैव । येयं बाह्यवीणादण्डस्थानीया उत्तरोत्तरस्थानपरम्पराविशिष्टा, सा स्थानसोपानपङ्क्तिः स्वरनिष्पत्तिस्थानम्, अत एव काकुस्वरमपि लक्षितम्—कक लौल्ये, लौल्यं च साकांक्षते यथा स्वरवैचित्र्यं लक्ष्यते ईषद्यतो वाच्यभूमिः संपद्यते सा काकुः, ईषदर्थे कुशब्दस्य कादेशः । काकुर्वा जिह्वा तद्व्यापारसंपाद्यत्वात् काकुः ।

एवं स्थानस्वरूपं विभज्य तस्य विषयभेदमादर्शयितुमाह आभाषणं च दूरस्थ इत्यादि । शिरसेति शिरोनिष्पन्नेन तारेण नादेनेत्यर्थः । नातिदूरे कण्ठेनेति मध्येन, उरसा समीपे मन्द्रेणेति यावत् ।

एवं स्थानत्रयस्य पृथगुपयोगमभिधाय युगपद्दर्शयति उरसोदाहृतं वाक्यमित्यादिना । मन्द्रस्वरेण वा पाठमारभ्य क्रमेण तारं गत्वा मध्येन परिसमाप्नुयादिति श्लोकार्थः । यदा हि न दीप्तेन क्रोधादिना नापि मन्द्ररूपेण शोकादिनाविष्टहृदयो भवति तदा क्रमेण वक्तव्यवस्तुविषयोत्साहविस्फारणात् तारान्तं गच्छन्नुपसंहारे मध्य एव विश्राम्यतीत्यनवशिष्टस्यायं सामान्येन पाठधर्मः । अत एव शान्ते व्याभिचारिबलावेशशून्यतायामयमेव पाठधर्मः । वैतालीयपाठे चायमपि सामान्यधर्मोऽस्तु । न तद्विषये स्वरकाकुः । कस्तर्हि तस्या विषयः, उच्यते—कदाचिदर्थस्य धर्मपुञ्जवाच्यस्य धर्मान्तराधानं काकुरुच्यते, कदाचित्स्वरजनकचित्तवृत्त्यर्पणं करोति । यत्र रसस्वर-

1 द - आभाषणं तु दूरस्थे भ - आभाषणं तु दूरस्थं शिरःस्थेन स्वरेण हि । कण्ठेन नातिदूरे स्यादुरसा चैव पार्श्वतः । 2 द - समीपस्थे तथोरसा । ड - दूरेऽपि कण्ठेनाप्युरसा चापि पार्श्वतः च - ह्युरसा च समीपतः । 3 द - उरसोदाहरेत् 4 च - शिरसोद्दीपयेद्बुधः भ - पुनः 4 द कण्ठेन शमयेच्चैव 6 ड - पाठयोगे तु 7 भ - नित्यशः ।

उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः॥ १०९

तत्र हास्यशृङ्गारयोः [1]स्वरितोदत्तैर्वर्णैः पाठ्यमुपपाद्यं, वीररौद्राद्भुतेषूदात्तकम्पितैः[2] करुणबीभत्स भयानकेष्व-

काकुव्यवहारः कदाचिद्वा नादात्मनि स्वात्ममूले सुगुम्भितस्य स्वग्रन्थ्यात्मनो वर्णराशेर्दूरश्रवणं किंचिच्छ्रवणमश्रवणं वेत्यस्मिन्नर्थे व्याभ्रियते । तत्रापि स्वरकाकुरुच्यते । यत्रोक्तमाभाषणं दूरस्थमित्यादि तदेवं व्यतिरिक्ते स्वसेवाङ्ग व्यापाराद् व्यतिरिक्तजडचिद्भेदेन भेदात् तदर्थरसस्वरभेदात् त्रिधैव काकुः।

एवं स्थानभेदमुक्त्वा क्रमप्राप्तं वर्णस्वरूपमाह उदात्तश्चेति । उच्चता नीचता मध्यमता उच्चनीचोभयडोलावलम्बनमिति चत्वारः स्वरधर्माः । वर्णा गुणा यदि वा पाठक्रियाविस्तारका वितृण्वते प्रकटयन्ति स्वार्थविशेषमिति वा। पाठ्ययोगे काव्ये स्वरस्य रक्तिभागमपहाय वर्णा एव वक्तव्याः। रक्तिभागाभिनिवेशे तु गानयोगो न पाठ्ययोगः स्यादित्यवादिषुः । तत्रान्वयव्यतिरेकाभ्यां रक्तिभागेऽनुदात्तादिवर्णभागः कादिवर्णभागः। तस्य स्फुटतास्फुटत्वमित्याह यो धर्मस्तन्त्र्यामनुरणनप्रधानायामरक्तकण्ठे गातरि यथाकथंचिद्वक्तुं प्रवृत्ते हुडुक्कामुरजादौ च पृथग्लक्ष्यत एव । एवं प्रधानतया धर्मान्तराणि मग्नत्वेन तत्रापि सन्त्येव । अत एवाह तपोधनाः सूक्ष्मवेदिनो यूयमत्राधिकृता विचार इत्याशयः। एषां वर्णानां विषयमाह—हास्यशृङ्गारयोरित्यादि। मध्यमपञ्चमावित्यादौ प्रकरणे यथासंख्यं न विवक्षितमित्येवं हास्ये मध्यमायाः पञ्चम्या वा जातेः स्थायिस्वरत्वं गृहीत्वा तत्रैवोच्चमध्यमस्थानस्पर्शेन पठेत् । एवं शृङ्गारवीरादिषु त्रिषु षाड्ज्या आर्षभ्या वा स्वांशं गृहीत्वा तत्रैवोदात्तकम्पितैः पाठः, करुणे निषादवत्या गान्धार्या वा स्थायिनमालम्ब्यानुदात्तेन पाठः, बीभत्से धैवत्यंशस्वराश्रयेण स्वरितकृतः (पाठः)। भयानके तत्स्वरावलम्बनेनैव (धैवतांश) कम्पितप्रधानः (पाठः)—इत्येवं भविष्यत् (अ-२९) जातिविनियोगानुसारिस्वरानुवादेन वर्णेषूदात्ता-

1 य - स्वरितोदात्तं वीरं न - स्वरितोदात्तौ वीर ढ - स्वरितोदात्तैर्वीर...
2 य - उदात्तं कम्पितं ठ - उदात्तकम्पितैः ढ - उदात्तस्वरितकम्पितैः।

नुदात्तस्वरितकम्पितैरिति[1] । द्विविधा काकुः साकांक्षा निराकांक्षा चेति[2] वाक्यस्य साकांक्षनिराकांक्षत्वात् ।

[3]अनियुक्तार्थकं वाक्यं साकांक्षमिति संज्ञितम् ।
नियुक्तार्थं तु यद्वाक्यं निराकांक्षं तदुच्यते ॥ १११

[4]तत्र साकांक्षं नाम तारादिमन्द्रान्त[5]मनियुक्तार्थमनिर्यातितवर्णालङ्कारं कण्ठोरःस्थानगतम् । [6]निराकांक्षं

---

दिषु तात्पर्यं, न तु स्वरेषु । तेषां तु पृथगुद्देशप्रयोजनं षष्ठे दर्शितमन्तरालापपरिग्रहमिति ।

एवं काकोः स्वरूपोत्पत्ति प्रतिपाद्य तस्या अर्थविषये व्यापारं दर्शयन्नुद्देशक्रममप्यनुसर्तुमाह—द्विविधा काकुरिति । वाक्यस्येति साकांक्षं यत्र वाक्यं तत्र काकुः, तथा वक्तृगता वाकांक्षा वाक्य उपचर्यते । सा च प्रकरणादिबलान्निश्चीयते । विशिष्टविषयत्वं चाकांक्षायास्तत एवावगम्यते । तदाह—अनियुक्तार्थकं वाक्यमिति । यादृशो वाक्यात्सङ्केतबलेनार्थः प्रतीयते तादृश एव यत्र न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद्वाक्यं निराकांक्षं, तद्विपरीतं साकाङ्क्षम् ।

एवं वाक्यस्य स्वरूपं प्रतिपाद्य तन्निष्ठां काकुमभिधातुमाह तत्र साकाङ्क्षमित्यादि । अनियुक्तार्थं यत्साकांक्षमुक्तं तन्मन्द्रोपक्रमं तारसमाप्तिकं पठनीयमिति । सर्वाणि क्रियाविशेषणानि कियन्ति तत्र तारतेत्याह कण्ठोरःस्थान(गत) मिति । तथा वर्णा उदात्तादयोऽलङ्काराश्चोच्चनीचदीप्तादयोऽपरिसमाप्ता अर्धस्पृष्टतयैव त्यक्ता यत्रेति क्रियाविशेषणम् । एवंभूतो यः क्रियाविशेषणत्वेन वाक्ये पठ्यमाने ध्वनिधर्मविशेषः सा काकुः । यदि वा सामानाधिकरण्येनैव व्याख्येयम् । धर्मो हि न स्वतन्त्रो भात्यपि तु धर्मिनिष्ठ एवेति । तत्राकांक्षार्थान्त एवातदर्थगत एव वा विशेषे तदर्थाभावे वा । तथा च—

---

1 य - कम्पितैर्वर्णैः पाठ्यमुपपादयेत् इति । 2 भ - निराकांक्षा च 3 ड - अनियुक्तमेकं 4 च - अत्र भ - तत्र साकांक्षा नाम य - तत्र साकांक्षा नाम वाक्यं ड - अनियुक्तं नाम निर्यातितवर्णालङ्कारं कण्ठोरःस्थानगतम् । न - अनिर्युक्तं) प - तस्य साकांक्ष नाम वाक्यं द - ''तत्र...मन्द्रान्तं'' इति न विद्यते । 5 भ - अनिर्युक्तार्थं 6 निराकांक्षा नाम निर्युक्तार्थं ।-

नाम नियुक्तार्थं निर्यातितवर्णालङ्कारं शिरःस्थानगतं मन्द्रादितारान्तमिति[1]।

[2]अथ षडलङ्कारा नाम —

उच्चो दीप्तश्च[3] मन्द्रश्च नीचो द्रुतविलम्बितौ[4]।
[5]पाठ्यस्यैते ह्यलङ्कारा लक्षणं च निबोधत[6] ॥ ११३

उच्चो नाम शिरःस्थानगतस्तारस्वरः, स च दूरस्थाभाषण[7]विस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनाबाधाद्येषु[8]। दीप्तो नाम शिरःस्थानगतस्तारतरः[9], स चाक्षेप-

यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः † । इति।

अत्र काकुः कृत इत्युदात्तकम्पितवर्णस्योच्चदीप्तालङ्कारस्य चासमाप्त्या, अतोऽप्यधिकं कुरुत इति काकुप्रभावादर्थान्तरे गतिः। 'स एष दशकन्धर' मिति * श्लोके 'तदात्मज इहाङ्गद' इत्यत्र साकांक्षा काकुः स्वगतान् वालिपुत्रोचितान्विशेषानर्पयति। 'स्वस्था भवन्ति मयि जीवति' † इत्यत्र साकांक्षा काकुर्भावनाभावमाह, वचनोच्चारणं त्वर्थे संभावनां विदधतावश्यनिषेधात्मनो विषयमर्पयति। तदियमर्थाभिप्रायसमर्पकाभिनयरूपार्थकाकुः साकांक्षा। एतद्विपरीता निराकांक्षा, तस्याः शिरःस्थान एव मन्द्रः तारताप्रतिस्थानं, उत्तरोत्तरतारत्वमधराधरमन्द्रत्वं च वक्ष्यामः। अलं पर्याप्तं काकोः स्वरूपं येन संपाद्यते सोऽलङ्कारः। तत्स्वरूपं च स्थानत्रयस्य प्रत्येकमूर्ध्वाधोमध्य-

1 भ - तारान्तं पाठ्यमिति ड - तारान्तगतामिति 2 द - अथालङ्काराः ड - अथ षडलङ्कारा 3 द - दीप्तोऽथ 4 प - नीचद्रुतविलम्बिताः 5 द - पाठस्य 6 प . विनिबोधत 7 न - विस्मयोत्तरसंजल्पनदूराह्वानबाधाद्येषु 8 ढ - त्रासनवाक्येषु भ - बाधाक्रुष्टकलहाभिधानेषु भावेषु। 9 य - शिरःस्थानतिरस्कारः स च।

† वेणीसंहारे।
* स एष दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क स क स दशाननो ननु निवेद्यतां राक्षसाः ॥

[1]कलहविवादामर्ष[2]क्रुष्टाधर्षणक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दितादिषु[3] । मन्द्रो नाम [4]उरःस्थानगतो निर्वेदग्लानि[5] चिन्तौत्सुक्यदैन्यव्याधि [6]क्रीडागाढशस्त्रक्षतमूर्छामदगुह्यार्थवचनादिषु[7] । नीचो नाम [8]उरःस्थानस्थो मन्द्रतरः स च स्वभावाभाषण [9]व्याधिशमश्रमार्तत्रस्तपतितमूर्छितादिषु । द्रुतो नाम [10]कण्ठगतः स च त्वरितः, [11]लल्लनमन्मनभयशीतज्वर[12]त्रासायस्तात्ययिककार्यावेदनादिषु । विलम्बितो नाम [13]कण्ठस्थानगत-

---

कल्पनया उदात्तानुदात्तस्वरितकम्पितनिर्वाहात् । तत्र मध्यो भागस्तावदनावेशे सर्वत्र स्थित एव । इत्यावेशेनोर्ध्वमधरं वा स्थानत्रयस्य प्रत्येकमवलम्ब्यत इति षडलङ्कारा भवन्ति । तत्र शिरस्यधोभागे तार उच्यते दूरस्थाभाषणादौ, स विषयोऽत्र स्वरकाकोरित्युक्तम् । विस्मयावगतौ तु सैव रसकाकुः, परस्य त्रासनाभिप्रायेण तु सैव विभावककाकुः । स्वरकाकोरेव श्रुतिकाकुश्चेति भेदेन शिरस्येव ऊर्ध्वस्तारतम आक्षेपादौ, तारशब्दः प्रकर्षोपलक्षणम् । अत्र ह्याक्षेपादौ यथावस्थं श्रुतिविभावरसकाकुभेदत्रयं विभजनीयम् । उरस्यूर्ध्वभागे स मन्द्रः, उरस्येव नीचभागे मन्द्रतमो नीचः । दैन्ये काकुर्द्विरूपतामेति—स्वचित्तवृत्त्यर्पणाद्रसकाकुः परस्य रूपोत्पादनाद्विभावककाकुः । उभय-

---

1 न - वाद  2 ड - अमर्षोत्क्रुष्ट  द - आक्रोश  प - आमर्षणक्रोध भ - रुष्टाधर्षण  3 प - आक्रन्दनादिषु  4 द - उरसि मन्द्रस्वरः  5 ड - ग्लानिशङ्का  6 क्रीडाशब्दो भमयोरेव  7 गुह्यार्थवचनं चदडपादिषु नास्ति, भवनमयरादिषु विद्यते  8 द - तत्रैव मन्द्रतरः  ढ - उरःस्थानो  ड - उरःस्थानगतः  प - उरःस्थाने  9 द - भयशान्तत्रस्तपतित मूर्छितादिषु  ड - स्वभाषा भाषणव्याधित पथिश्रान्त त्रस्तपतित मूर्छितादिषु  न - व्याधितपःश्रान्तत्रासपतित मूर्छादिषु  फ - व्याधितपःश्रान्त त्रासपादपातमूर्छनादिषु  10 द - कण्ठगतः स्वरितः  प - कण्ठगतस्वरितोऽत्रगत स्वरक्लान्तिः स च स्खलितवल्गनमदनशीतज्वरार्तत्रस्तायस्तान्यैककार्यावेदनादिषु  11 ढ - स्खलित लज्जितोत्खातमन्मन . ...  ड - स्खलितवेल्लनमदनभय  12 ड - त्रस्तायस्तागूढकार्य...  भ - त्रासायास  13 द - तत्रैव स्थितलयः  च - कण्ठस्थानस्थो  ढ - कण्ठस्थानो मन्द्रः  ड - कण्ठस्थानगतो मन्द्रः ।

स्तनुमन्द्रः, स च शृङ्गार[1]करुण[2]वितर्कितविचारामर्षा-[3]सूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जन[4]विस्मयदोषानु-कीर्तनदीर्घरोग[5] निपीडनादिषु । [6]अत्रानुवंश्या श्लोका भवन्ति— ११४

उत्तरोत्तरसंजल्प[7]परुषाक्षेपणेषु च[8] ।
तीक्ष्णरूक्षाभिनयने [9]आवेगे क्रन्दिते तथा ॥ ११५

[10]परोक्षस्य समाह्वाने तर्जने त्रासने तथा ।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च ॥ ११६

[11]भावेष्वेतेषु नित्यं हि नानारससमाश्रया ।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः ॥

व्याधिते च ज्वरार्ते च भयार्ते शीतविप्लुते[12] ।
नियमस्थे वितर्के च गाढशस्त्रक्षतेषु च[13] ॥ ११८

---

स्यापि तत्र प्राधान्येनादरणात्, अन्यत्र तूभयस्यानादरणात्प्रधानांशेनैव व्यपदेशः । स्वभावाभाषणं यत्र कश्चिदावृत्तकण्ठस्वर एव वक्ता भवति, त्रासने पतितः त्रस्तपतितः, त्रासावसरे तु दीप्तैव काकुर्भवति। कण्ठगत इति कण्ठस्थाने ऊर्ध्वभागे निष्पन्नः, तेन स्थानभेद एवालङ्कारत्वे प्रयोजकः। अत एव त्वरित इत्यनेन पुनर्लयविधानम् । ललं सविलासं, लडं विलासं लातीति क्विबन्ते कर्मण्युपपदे लडयोरैक्यमिति । मन्मनमव्यक्तं अहमेव मनो मन्ता यत्रेति, अनेना-

---

1 करुणशब्दो चडढपद - आदिषु न विद्यते । 2 न - वितर्के 3 य - आश्वासित 4 द - विस्मित 5 ड - रोष 6 भ - अत्र श्लोकाः 7 ड - संजल्पे 8 ड - आक्षेपणे तथा 9 भ - तथाक्रन्दे च नित्यशः न . शीते चाक्रन्दिते द - आक्रन्दे क्रन्दिते फ - आवेशे 10 भ - परोक्षह्वयने चैव तर्जनत्रासनेषु च । 11 भ- एषु नानारसोपेता नित्यमर्थप्रदर्शिता(का ?) च-सर्वेषु 12 ग - शोके च क्षुत्पिपासिते । विषमस्थे वितर्के फ - क्षोभे च क्षुत्पिपासिते । विषमस्थे..... 13 भ - क्षते तथा ।

[1]गुह्यार्थवचने चैव चिन्तायां तपसि स्थिते ।
मन्द्रा [2]नीचा च कर्तव्या [3]काकुर्नाट्यप्रयोक्तृभिः ॥
[4]लल्ले च मन्मने चैव भयार्ते शीतविप्लुते ।
मन्द्रा द्रुताच कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥ १२०
दृष्टनष्टानुसरणे[5] [6]इष्टानिष्टश्रुते [7]तथा ।
[8]इष्टार्थख्यापने चैव [9]चिन्ताध्याने तथैव च ॥ १२१
उन्मादेऽसूयिते चैव[10] उपालम्भे तथैव हि ।
[11]अव्यक्तार्थप्रवादे च कथायोगे तथैव च ॥ १२२
उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते ।
[12]विकृते व्याधिते क्रोधे दुःखे शोके तथैव च ॥ १२३
[13]विस्मयामर्षयोश्चैव [14]प्रहर्षे परिदेविते ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा[15] च वै भवेत् ॥

---

श्रूयमाणमनुनासिकोपलक्षितमित्यपरे। "लल्लमन्मनौ नायिकागतौ बालविनोदनसान्त्वनादौ, मुञ्चेत्येवं प्रायपराभियोगानङ्गीकरणादौ च" इत्युपाध्यायाः। मन्द्रापि काकुश्चात्र भवतीति संग्रहश्लोके वक्ष्यते । आत्ययिकं शीघ्रसंपाद्यं यत्कार्यम् । आयस्तमात्रेगः । कण्ठस्थाने तु नीचभागे निष्पन्नो विलम्बितः । लल्लत्वमविवक्षितमेव । अव्यक्तार्थः प्रवादः—अन्तरङ्गत इति लोके प्रसिद्धो यत्र । परे बुध्यतां च न बुध्यतां चेति वक्तुरभिप्रायो भवति यत्र स्वगतं न परगतमत्रेति । अलङ्कारेषूच्चा दीप्ता द्रुता चेति यथायोगं स्थानत्रयमत्र स्वीकृतमित्यर्थः।

---

1 ढ - गूढार्थे 2 न - स्थिता च - विलम्बिता चैव 3 च - काकुः कार्या 4 ड - मल्ले च मन्मने 5 ड - स्मरेण 6 भ - इष्टारिष्ट 7 च - श्रुतौ 8 च - दृष्टार्थ 9 य - चिन्तायाने च - चिन्ताग्रस्ते 10 भ - च विषादे च 11 द - अव्यक्तार्थे प्रदाने च तथा लोके 12 य - पीडिते ड - विक्षते व्याधिते त्वङ्गे द - विकृतव्याकृते भ - क्रोधे चैव हि दुःखे च शोके नित्यं तथैव च 13 भ - अमर्षे विस्मये 14 न - हर्षेऽथ ड - हर्षे च 15 द - मन्दा।

यत्रार्थस्य समाप्तिर्न [1]भवत्यङ्के प्रयोगबाहुल्यात्।
[2]वृत्तान्तस्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः[3] ॥ ३७
युद्धं राज्यभ्रंशो मरणं [4]नगरोपरोधनं चैव।
[5]प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ॥ ३८

---

इति यदुक्तं तत्रानुपपत्तिर्बहुप्रकारा भवतीति दर्शयितुमाह यत्रार्थस्य समाप्तिरिति। यत्प्रत्यक्षप्रयोज्यमपि प्रयोगवशादङ्केऽसमाप्तं भवति तत्प्रवेशकेन कर्तव्यम्, बहुतरत्वं प्रयोगस्य बहुमानास्पदत्वम्।

तदयमत्रार्थः—यत्र दिवसकार्याण्यनेकानि तत्र तन्मध्ये[1] यत्सुन्दर-प्रयोगमुपदेशोपयोगि च तत्प्रत्यक्षेण दर्शनीयम्। अन्यत्सर्वं प्रवेशकेन वृत्तान्तार्था तदवशिष्टेनेतिवृत्तनिर्वाहफला अल्पा संक्षिप्ता कथा यस्य प्रवेशकस्य। एवं प्रत्यक्षप्रयोज्यप्रवेशकोपयोगो दर्शितः, अन्यत्रापि तं दर्शयति युद्धं राज्यभ्रंश इत्यादि। युद्धे शस्त्रसंपातस्य बाहुल्यं राज्यभ्रंशेऽपि पतनमरणादेः नगरोपरोधे बलस्य यन्त्रसुरुङ्गादिदानस्य। इह केचिदाहुः मरणं द्विविधम्, किञ्चिदन्यसंबन्धिन्या क्रियया संपाद्यं यथा चक्रेण दैत्यस्य शिरश्छेदं, किञ्चिदन्यसंबन्धिक्रियानैरपेक्ष्येणैव व्याध्यभिघातादिप्रभवम्, तत्राद्यस्यैव निषेधः क्रियते। एतदर्थमेव कृतग्रहणं, तद्ध्यन्यक्रियावाचकं न च तद्युद्धेन संगृहीतम्, अयुद्धे पूर्वकस्याप्यशङ्कितशिरश्छेदस्य दर्शितत्वादिति। त एवं प्रष्टव्याः—इदं मरणं प्रयोज्यमिदमप्रयोज्यमिति न तावदत्र विषयविभागे निदानमुत्पश्यामः। मृतस्य कथं निष्क्रमणं कथं वावस्थानं, ततो नाट्योपयोगिसमस्तध्रुवागानादिप्रक्रियाविलोपः सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरणं समानं तस्मादङ्के मरणमप्रयोज्यमेव। ननु मरणानुभाववर्णनेनेदानीं किं कृत्यं, युद्धवीररौद्रादावप्येतदनुभाववर्णने किं प्रयोजनं तदनुभावापरिज्ञाने प्रवेशकैरपि कथं वर्णनं स्यादिति चेन्मरणेऽपि समः समाधिः।

---

1 न - भवेत् 2 न - वृत्तान्ताल्पकथार्थैः य - वृत्तान्तोऽल्पार्थकथैः ड - बहुवृत्तान्ताल्पकथैः ढ - वृत्तान्ताल्पार्थकथैः प - बहुवृत्तान्तोऽल्पकथैः फ - विष्कम्भः स्वल्पकथः भ - वृत्तान्तैः 3 भ - सापि निर्देश्या ढ - सा विधातव्या ड - संविधातव्यः 4 फ - समरस्य रोधनं 5 भ - अप्रत्यक्षकृतानि।

**अङ्के प्रवेशके [1]च प्रकरणमाश्रित्य नाटके[2] वापि।**
**[3]न वधः कर्तव्यः स्याद्योऽभ्युदयी नायकः ख्यातः[4] ॥**
**[5]अपसरणमेव कार्यं [6]ग्रहणं वा सन्धिरेव वा योज्यः ।**

किञ्च यत्र प्रत्यापत्तिशून्यं मरणं तत्प्रक्रियाविलोपकत्वान्न प्रयोज्यम् । यत्तु क्वचित्प्रत्यापत्तिः यथा जीमूतवाहनस्य तदेव क्षणमात्रानिश्चित-चेष्टात्मकं प्रयोज्यमेवेति सोऽपि मरणानुभावसाक्षात्करणस्य विषयः । यद्वाहिनीनामपि साटोपपरिक्रमणं शस्त्रवर्णनादिप्रारम्भरूपमदः प्रयोज्यमपि तु तन्निर्वाहो न प्रदर्शनीयः । एतदेव कारणे स्फुटीकृतं युद्धमेव यन्निर्वाहपर्यन्तं यावन्मरणमेव यदचिरप्रत्यापत्तिर्न भवति तन्न प्रत्यक्षेण प्रयोज्यं, प्रवेशकै-रिति उपक्षेपपञ्चकमध्यादन्यतमेनोपक्षेपेणेत्यर्थः । अन्ये त्वाहुः—व्याधिज-मभिघातजं च मरणं रङ्गे प्रयोज्यं, अपुनर्जनिनिष्क्रान्तिरहितप्रकृतिर्विधेयेति ।

अथ सर्वथा यद्विषयं मरणं नाख्येयं तद्दर्शयति अङ्के प्रपेशके चेति । प्रकरणे नाटके नायकस्य प्रत्यक्षेण वा वर्णनया वा न मरणं वर्णनीयम् । अङ्क इति प्रत्यक्षेण, प्रवेशक इति वर्णनया ।

ननु प्रत्यक्षेण ये न कस्यचिन्मरणं प्रयोज्यमिच्छन्ति तन्मते अङ्कग्रहणं किमर्थं, तत्राहुः वधशब्देन (न) मरणमुच्यते, अपि तु परकृतघातदानादि, तत्रा-न्यघातदानाद्यपि प्रत्यक्षेण रङ्गे प्रदर्श्यते । अचिरप्रत्यापत्तौ समाश्वासे यस्तु नायकस्तस्य ख्यातस्य न घातदानादि प्रदर्शनीयम् । अन्ये तु ख्यातं नायकं पताकानायकादिकमिच्छन्ति । अपसरणमिति पलायनम् । यथोक्तं—"अशक्ये सर्वमुत्सृज्यापगच्छेत्, अदृष्टा हि जीवतः पुनरावृत्तिः" इति । ग्रहणं वा कार्यं सनिबन्धनबन्धनमिति । यथा वासवदत्तानृत्तधारे(पारे ?) वत्सराजस्य । सन्धिरिति सन्धानं, यदुक्तम्—

1 भ - वा 2 न - नाटकं 3 ग - न च बन्धः 4 भ - तत्रापि हि नायक-स्यैव फ - यस्तत्र स नायकः ख्यातः ड - यस्तत्र तु नायकः ख्यातः 5 च - अव-तरणं फ - अवसरणं 6 ड - सन्धिर्वा ग्रहणमेव वा नित्यम् (सिद्धिर्वा—ढ) भ - ग्रहणं वा सन्धिमेवा कुर्यात् ।

[1]काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः ॥ ४०
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा।
ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥ ४१
[2]काव्यं गोपुच्छाग्रं[3] कर्तव्यं कार्यबन्धमासाद्य।[4]

---

प्रवृत्तचक्रेणाक्रान्तो राज्ञा बलवताबलः ।
सन्धिनोपनमेत् ...............॥ इति (अर्थशास्त्रे ७-३ अध्या)

अपसरणबन्धनसन्धीनां विषयविभागसूचनायाह। प्रधानरसानुसारेण यत्काव्यं यत्काव्यार्थस्तस्य श्लेषा बन्धनाद्युपपत्तयः तैरुपलक्षितमपसरणादिकार्यमिति यावत्। कार्यविशेषैरिति केषांचित्पाठः।

अथ यद्यदप्रयोज्यं प्रत्यक्षेण तस्य सामान्यद्वारकं संग्रहं दर्शयितुमाह—न महाजनपरिवारमिति । महाजनः संख्यया तेन परिवारः परिवारणं यत्र यत्र वस्तुनि तन्नाटकमिति तद्युक्तं नाटकं प्रकरणम् । वाग्रहणादन्यदपि न कार्यम् । एतदुक्तं भवति—बहुतरपुरुषसाध्यं यत्किचित्तद्यथा समुद्रे सेतुबन्धनमित्यादि, तत्सर्वं प्रत्यक्षेण न प्रदर्शनीयम्। तथा महतो जनस्य पितापुत्रश्वश्रूस्नुषागुरुशिष्यादेः परितो वरणं व्रीडातङ्कादियोगेन यत्र जायते वैरस्यं वा महाजनस्य सभ्यस्य च यत्र परिवरणं चित्तसङ्कोचः तत्सर्वं परिचुम्बनाद्यपि न प्रत्यक्षप्रयोज्यम् । यदि च प्रत्यक्षप्रयोज्यं तत्र पञ्च कार्यपुरुषाः यदि वा चत्वारः प्रकरीपताकादिरूपाः तेषां च परिवारस्वभावास्तावन्त एवेति यदि प्रकर्षस्तदा दशाष्टौ वा रङ्गे प्रविष्टा भवन्ति । ततोऽधिकेषु त्वभिनयचतुष्टयं सम्यगविभावनीयं स्यात्, देवयात्रापरिदृश्यमानजनसमाजवत्। एवमङ्के प्रवेशकस्वरूपं वितत्याभिहितम्, अधुना तत्समुदायस्य नाटकस्य यादृग्रूपं तद्दर्शयति काव्यं गोपुच्छाग्रमिति । क्रमसूक्ष्माङ्गमिति केचित् । अन्ये तु यदा गोपुच्छे केचिद्वालाः ह्रस्वाः केचिद्दीर्घाः एवं कानिचित्कार्याणि

---

1 भन - बहुभिः काव्यविशेषैः प्रवेशकैः सूचयेद्वापि पच - मातृकापाठ एव मूले विनिवेशितः । भ - तैस्तैः काव्यश्लेषैः प्रवेशकैर्नाट्यतत्त्वज्ञैः । म - एभिः कार्यविशेषैः प्रवेशकैः सूचयेद्वापि (य - बहुभिः) ढ - तैस्तैः कार्यविशेषैः......सूचयेच्चैव ब - बहुभिः कार्यश्लिष्टैः 2 प - कार्यं फ - गोपुच्छाग्रे 3 भद - गोपुच्छार्धम्। 4 प - नाटकादिषु प्राज्ञैः फ - काव्यबन्धमुत्पाद्य ।

ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ४२

सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
[1]निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ४३

नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत्[2] ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ४४

यत्र कविरात्मशक्त्या[3] वस्तु शरीरं च [4]नायकं चैव ।

मुखसन्धौ परिसमाप्तानि कानिचित् प्रतिमुखपर्यन्तानि कानिचिदवमर्शावसानानि पराणि निर्वहणपर्यवसायीनि, तद्यथा रत्नावल्यां प्रमोदोत्सवो मुखसन्धावेव निष्ठित इत्यादि यावत् बाभ्रव्यवृत्तान्तो मुखोपक्षिप्तो निर्वहणनिष्ठां प्राप्तः । साररूपाश्च पदार्थाः पर्यन्ते कर्तव्याः ।

अत्र हेतुमाह सर्वेषां काव्यानामिति । नाटकादीनां निर्वहणोऽद्भुतरसः कर्तव्यः । एवं हि तानि काव्यानि रसभावानां युक्त्या परस्परसंबद्धानि युक्तानि भवन्ति, नान्यथा एकवाक्यतां च विना कः प्रबन्धार्थः । तथा च शृङ्गारवीररौद्रैः स्त्रीरत्नपृथिवीलाभशत्रुक्षयाः करुणादिभिस्तान्निवृत्तिरितीयता क्रमेण लोकोत्तरासंभाव्यमनोरथप्राप्तौ भवितव्यमद्भुतेन । असाधारणलाभो हि यदि फलत्वेन कल्प्यतेऽवश्यं क्रियायाः किञ्चिदस्त्येव फलमात्रमिति किं तत्रोपायव्युत्पादनायत्नेनेत्यद्भुतावसानत्वमकार्यम्, केन व्युत्पाद्यजनस्यैवं बुद्धिर्जायते—'अहो दुष्करमप्युपायक्रमेण सिध्यति' इति, "उपायेन वर्तितव्यं" इति । पूर्वोक्तमुपसंहरति वक्तव्यान्तरं चाक्षिपति नाटकलक्षणमेतदित्यादि । क्वचिल्लक्ष्यं प्रसिद्धम्, इह तु लक्षणबलेन तस्यैव यत्नप्रसाध्यत्वमिति दर्शयति । लक्षणयुक्त्या लक्षणद्वारेण युक्तिः हृदयानुप्रवेशनया हेतुभूतया संपाद्येयेत्यर्थः । तत्र प्रकरणस्य सभेदस्य सलक्षणं नामनिर्वचनं चाह यत्र कविरात्मशक्त्येति । वस्त्विवति साध्यं फलं, शरीरमिति तदुपायं वस्त्वादिकं काव्याभिधेयमात्मशक्त्या प्रकुरुते यत्काव्येन तत्प्रकरणमिति बुधैर्ज्ञेयमिति संबन्धः । यत्र

1 फ - निर्वहणं कर्तव्यं 2 फ - प्रकीर्तितं विविधम् भ - विप्राः 3 पभ - बुद्ध्या 4 द - नाटकम् ।

औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधै[1]र्ज्ञेयम् ॥ ४५

[2]यदनार्षमथाहार्यं काव्यं [3]प्रकरोत्यभूतगुणयुक्तम् ।
[4]उत्पन्नबीजवस्तु प्रकरणमिति[5] तदपि विज्ञेयम् ॥ ४६

यन्नाटके [6]मयोक्तं [7]वस्तु शरीरं [8]च वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि[9] योज्यं सलक्षणं सर्वसन्धिषु तु ॥ ४७

---

समुत्पाद्यं न भवति तत्र योऽनुत्पाद्योंऽशः न कुत्रस्थो ग्राह्य इति दर्शयितुमाह यदनार्षमित्यादि । अनार्षमिति पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलदेवचरितादि । आहार्यमिति पूर्वकविकाव्यादाहरणीयं समुद्रदत्तचेष्टितादि ।

ननु च तत्रांशे कविकृतत्वाभावात्कथं प्रकरणवाचोयुक्तिरित्याह उत्पन्ने पूर्वसिद्धे बीजं वस्तु च यत्र तादृशमपि तत्, यदिति वस्तुभूतैः बृहत्कथादौ काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं, प्रकरोति तदिति तस्माद्धेतोरेतदपि प्रकरणम् । तेन बृहत्कथादिसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम् । एवं पूर्वकविसमुत्प्रेक्षितसमुद्रदत्तचेष्टितादिवर्णनेऽपि अधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम् । नन्वस्येतिवृत्तस्य कथं योजनेत्याशंक्य पूर्वोक्तमेवातिदेशद्वारेण स्मारयितुमाह यन्नाटके मयोक्तमिति । 'नानाविभूतियुक्तमृद्धिविलासादिभि'रित्यादिनायकफलवत्त्वमुक्तं तत्, वस्तुशरीरमिति 'अङ्कप्रवेशकाढ्यं' वृत्तिभेदाश्चेति "नानारसभावचेष्टितैर्बहुधा । सुखदुःखोत्पत्तिकृत"मिति, सलक्षणमित्यङ्कप्रवेशकयोर्लक्षणयुक्तमिति ।

केचित्तु शरीरग्रहणेन गतार्थं तस्माल्लक्षणमित्यङ्कपरिमाणमङ्कान्तरसन्धानहेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तं 'दिवसावसानकार्यं यद्यङ्केनोपपद्यत' इत्यादि

---

1 भ - अपि तद्विधं ढ - एतद्बुधैः 2 च - यदनर्थमथाहार्यं (?) फ - यदनायकहार्यकार्यं (?) ड - यदनार्षमाहार्यं ढ - यदनार्षमहार्यं प - यदनार्षमप्रयुक्तं परेण यत्स्यादभूतगुणबन्धम् 4 ट - प्रकरोत्यद्भुत (?) 4 य - प्रकरणमिति तद्विद्यादुद्भिजबीजार्थसंयुक्तम् (--औद्भिज --प, बीजंबीजार्थ—फ - उद्गत—भ) 5 च - अपि 6 न - प्रयोक्तं 7 नढ - काव्य 8 नपभ - रसाश्रयोपेमत फ - समाश्रयोपेतम् 9 प - कार्यं केवलमुत्पाद्यवस्त्वपि हि तत् । ढन - कार्यं केवलमुत्पाद्यवस्तु स्यात् (योज्यं - ढ)

[1]विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं [2]यन्नैकाविधं [3]ज्ञेयं तत्प्रकरणं नाम[4] ॥ ४८

[5]नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् ।
बाह्यजनसंप्रयुक्तं [7]तज्ज्ञेयं प्रकरणं तज्ज्ञैः[8] ॥ ४९

[9]दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम्[10] ।
मन्दकुलस्त्रीचरितं [11]काव्यं कार्यं प्रकरणे तु[12] ॥ ५०

---

तत्सर्वं प्रकरणेऽपि योज्यम् (इति) । अतिदेशायातमतिप्रसङ्गं वारयत्यार्याद्वयेन विप्रवणिगित्यादिना । सचिवो मन्त्री, अमात्योऽधिकृतः सार्थवाहस्तावत्पण्यानामाहर्ता तद्देशक्रयविक्रयकृतो वणिजोऽन्य एव । नैकविधमित्यनेकरसयुक्तमित्यर्थः । 'नैकरसान्तरविहित' इति तदतिदेशमात्रमिति सूचितम् । प्रख्यातोदात्तेति प्रसक्तं निषेधति नोदात्तेति । तन्निषेधे चार्थान्नाटके वैपरीत्यमायातम् । नाटके च देवो नायकत्वेन निषिद्ध इति प्रकरणे कर्तव्यत्वेनापाद्यत इत्याह न दिव्यचरितमिति । तथा दिव्याश्रयमिति यदनादेशाद् देवानां प्रयोज्यत्वं प्रसक्तं तदप्यनेन निषिद्धम् । नाटके देवानामिवेहापि राज्ञः प्रवेशे शङ्कमाने निराकरोति न राजसंभोग इति, यदि वा औत्पत्तिकत्वेऽपि न राजोचितसंभोगोत्प्रेक्षा विप्रादिषु करणीयेत्यनेन शिक्षयति, अत एव राजनियमः । उचितोऽन्तःपुरजनः कञ्चुकिप्रभृतिः तद्व्यतिरिक्तो बाह्यजनोऽत्र चेटदासादिः प्रवेशकादौ कार्य इत्यर्थः ।

एतदेव दर्शयति दासविटश्रेष्ठियुतमिति कञ्चुकिस्थाने दासः, विदूषकस्थाने विटः अमात्यस्थाने श्रेष्ठीत्यर्थः । वेश्यावाटो वेशः तत्र या स्त्री तस्याः य उपचारो वैशिके (अ-२३) वक्ष्यते स कारणं यस्य शृङ्गारस्य तेनोपेतं, कुलस्त्रीविषयं चेष्टितं मन्दं यत्रेति । उपाध्यायास्तु मन्दकुलानां स्त्रीणां चरितं

---

1 भ - सचिवश्रेष्ठब्राह्मण 2 च - यत्रैक ङ - यदनेक 3 ङ - तज्ज्ञेयं प्रकरणं 4 प - कृतिभिः ट - कथिभिः 5 प - नोदात्तनृपोपेतं 6 ङ - संभोगः 7 ङ - विज्ञेयं 8 प - लोके भ - नाम 9 म - दाश 10 भ - कारणैर्युक्तम् 11 प - कार्यं 12 यन - प्रयोगे तु च - प्रकरणेऽपि ।

सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृह[1]वार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥ ५१
[2]यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमोऽपि स्यात्[3] ।
अथ [4]कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ ५२

---

यत्रेत्याहुः, तेन कुलाङ्गनापि तत्र मन्दकुलैवेति दर्शितं भवति । एतदेवाभिमन्यमानेन पुष्पदूषितकेऽशोकदत्तादिशब्दाकर्णनेन समुद्रदत्तस्य शङ्का योपनिबद्धा सा न दोषाय निर्वहणान्तोपयोगिनी हि नन्दयन्तीनिर्वासनं तस्याश्च गृहान्तरावस्था । इदमेव मुखसन्धौ मूलं परपुरुषसंभावनामूलत्वात् । एवमनभ्युपगमे तु श्वशुरेण वध्वा असन्निहिते पुत्रे निर्वासनं शबरसेनापतिगृहेऽवस्थानमित्युत्तमप्रकृतीनामनुपपन्नमेव । तस्मात् स्ववर्गापेक्षयेदमुत्तमत्वमद्यतने राजोचितानामुत्तमप्रकृतीनां वणिङ्मात्रे समारोप्य तद्दूषणं यत्कृतं न तेन ब्रह्मयशःस्वामियशः खण्डितं अपि तु स्वयश एव । ये हि मिथ्यायशो मिथ्या कलङ्कयितुमुद्यतास्तेषां स्वयश एवेति यशोमात्रावशेषता न हि नायकशब्दमात्रादेव दुर्योधनवदेव शङ्काद्यनुचितम् । प्रकरणे हि तादृश एव नायकः केवलमन्यवणिगपेक्षया स उत्तमोऽस्तु, व्युत्पाद्यश्च तत्रैवंविध एवेत्यलमवान्तरेण ।

अथास्य सप्तविधस्यापि प्रकरणस्य प्रत्येकं भेदत्रयं दर्शयितुमार्यात्रयं पठति सचिवेत्यादि । सचिवादीनां संबन्धिनी यत्र गार्हस्थ्योचिता वार्ता पुरुषार्थसाधकमितिवृत्तं न तत्र वेश्याङ्गना नायिकात्वेन निबन्धनीया, विटादीनां तु नायकत्वेन कृतानां गार्हस्थ्यचिन्तायां सापि निबन्धनीयेत्युक्तं भवति । यदि गृहस्थचिन्तावर्णनं न भवति श्रेष्ठिसार्थवाहादीनां च विप्रादिवदविरुद्धो वेश्यायोग इति सापि प्रदर्शनीयेति लब्धमर्थात् । तत्र न तु कुलस्त्रीसंगमः कर्तव्यः । तदाह यदि वेशयुवतीति । अथ कुलजनप्रयुक्तमिति । एवं श्रेष्ठिसचिवादिविषयं शुद्धं भेदद्वयमुक्तं, विटादिविषयस्तु सङ्कीर्ण एव वेश्याकुलजाभ्यां भवति ।

---

1 भ - वार्तायां तु 2 भ - यतिवेश्यायुवतियुतं म - यदि वेश्यायुवतियुतं 3 य - संगमो भवेत्तत्र द - संगमर्हति ततः प - संगमर्हति कदाचित् भ - संगमस्तत्र 4 प - कुलवधू ।

यदि वा कारणयुक्त्या वेशकुलस्त्रीकृतोपचारः स्यात्[1]।
[2]अविकृतभाषाचारं [3]तत्र तु [4]पाठ्यं प्रयोक्तव्यम्॥ ५३
मध्यम[5]पुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र[6] तत्त्वज्ञैः।
संस्कृतवचनानुगतः [7]संक्षेपार्थः प्रवेशकवत्॥ ५४
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि कर्तव्यः[8]।
मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः[9]॥ ५५

---

तदाह यदि वा कारणयुक्त्येति। विटे वेशस्त्री प्रधानत्वात् पूर्वमुक्ता कुलस्त्री तु तत्रापि पितृपितामहाद्यनुरोधादिति कारणशब्देनोक्तम्। अविकृता भाषा कुलस्त्रियाः शौरसेनी, वेश्यायाः संस्कृता, आचारः कुलस्त्रियां विनयप्रधानः, अन्यस्यां तद्विपरीतः। तथा च देवीचन्द्रगुप्ते वसन्तसेनामुद्दिश्य माधवस्योक्तिः (माधवसेनामुद्दिश्य चन्द्रगुप्तस्योक्तिः ?)—

आनन्दाश्रु सितेतरोत्पलरुचोराबध्नता नेत्रयोः
प्रत्यङ्गेषु वरानने पुलकिषु स्वेदं समातन्वता।
कुर्वाणेन नितम्बयोरुपचयं संपूर्णयोरप्यसौ
केनाप्यस्पृशताप्यधोनिवसनग्रन्थिस्तवोच्छ्वासितः॥ इति।

अत्र हि व्युत्पाद्यस्तथाविध एव तादृश्येव च वृत्ताङ्के एवमेतत्। एकविंशतिः प्रकरणे भेदाः। प्रकरणे नायकापेक्षया प्रायशः उपयोगिनोऽपि मध्यमा एव संभवन्तीति तत्र विष्कम्भकस्य बाहुल्येन संभावनमित्याशयेन प्रकरणे विष्कम्भकं लक्षयति मध्यमपुरुषैरिति। विष्कम्भयत्युपस्तम्भयतीति विष्कम्भकः। संस्कृतेन वचनेनानुगतं च सङ्कीर्णोऽप्यस्त्येवेति प्रवेशकेन वार्थक्रियाकर्तव्यतामेव कर्तव्यत्वेनाभिसन्धाय विष्कम्भकः कार्यः। तामेवार्थक्रियां स्पष्टयति

---

1 प - समागमोऽपि स्यात् ड - समागमो न स्यात् 2 भ - अधिकृत द - अधिगत 3 भ - विशेषभाषोपचारसंपन्नम् 4 च काव्यं 5 ड - पात्रैः कार्यो-नित्यं विष्कम्भकस्तु विज्ञेयः 6 ढ - अपि द - संक्षिप्तार्थः 7 ड - संक्षिप्ताक्षरपदः शुद्धः ढ - संक्षिप्तार्थातपदाच्छुद्धः 8 ड - खलु नाटके प्रयोगज्ञैः य - विज्ञेयः प - विष्कम्भकश्च विज्ञेयः 9 य - मध्यमकृतः।

[1]अङ्कान्तरालविहितः[2] [3]प्रवेशकोऽर्थक्रियां समभिवीक्ष्य[4]
[5]संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः ॥ ५६
अनयोश्च बन्धयोगा[6]दन्यो भेदः प्रयोक्तृभिः कार्यः ।[7]
[8]प्रख्यातस्त्वितरो वा [9]नाटकयोगे प्रकरणे वा ॥ ५७

संक्षेपात्सन्धीनामर्थानां चेति । सन्धीनां यः संक्षेपो युद्धराज्यभ्रंशादीनां चार्थानां यः संक्षेपस्तमभिसन्धाय अङ्कस्याङ्कयोर्वान्तराले मध्ये विष्कम्भको योज्यः ।

ननु कोहलेन मुखाङ्कस्य चायमन्तरान्तरे विहितः

"मध्यमपुरुषनियोज्यो नाटकमुखसन्धिमात्रसञ्चारः ।
विष्कंभको हि कार्यो नाटकयोगे प्रवेशकवत् ।" इति ।

तत्कथमुक्तमङ्कान्तरानुसारीति, उपलक्षणार्थमेतदित्यदोषः । तथाहि बीजं बिन्दुश्च प्रथममुपक्षिप्येते, तत्र च पृथग्जनस्यालब्धनिवेशत्वात् सचिवादिगोचरत्वाच्च तदुपक्षेपे विष्कम्भकस्यैवावसर इति यदुच्यते तदङ्कान्तरेष्वपि मन्त्रगुप्ततायां तुल्यमिति तत्राप्यनिवारितो विष्कम्भकप्रवेशः । पृथग्जनोऽपि वा यत्र मन्त्रचिन्तायामनुप्रवेश्यते तत्र प्रवेशकोऽपि प्रथमोपक्षेपे न योग्य इति युक्तम् । सामान्येनाङ्कान्तरानुसारीति अङ्कस्य मध्य इत्यनेन प्रस्तावनाङ्कमध्यवर्तिताप्युक्तैव । प्रवेशकविष्कम्भकविषये लिङ्गवचनयोरतन्त्रत्वात् स्त्रीणामप्यनुप्रवेशः संख्याधिक्यस्य च ।

एवं सकलपुरुषार्थविषया व्युत्पत्तिः नाटकेन प्रधानस्य राजप्रायस्य क्रियते, प्रकरणेन च मध्यमप्रायस्य, अपूर्वकुतूहलवतस्तत्रापि चैकविंशकस्याभिधानात् चित्रव्युत्पत्तिः । तत्र रूपकलक्षणस्य संकीर्णतया बहवो भेदाः सन्तीत्युक्तं सामान्यलक्षणे । तत्र प्रधानभूतयोः सर्वरूपकप्रसरणकारिणोः नाटकप्रकरणयोर्लक्षणसाङ्कर्ये दर्शिते सर्वरूपकाणां दर्शनं तद्भवतीत्यभिप्रायेण तदेव

1 ढ अनयोरन्तरविहितः 2 ड - सहितः 3 ड - प्रवेशकार्थं भ - प्रवेशकाङ्क 4 प - अभिसमीक्ष्य 5 भ - संक्षेपार्थं सन्धिष्वर्थानां संविधातव्यः च - संक्षेपेण तु 6 न - एको 7 न - ज्ञेयः 8 य - प्रख्याख्यातस्त्वितरो 9 च - नाटीसंज्ञाश्रिते काव्ये भ - नाटककाव्यबन्ध इह ।

प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम्[1] ।
अन्तःपुरसङ्गीतक[2]कन्यामधिकृत्य कर्तव्या ॥ ५८
स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी[3] ।
बहुनृत्तगीतपाठ्या [4]रतिसम्भोगात्मिका चैव ॥ ५९
[5]राजोपचारयुक्ता [6]प्रसादनक्रोधदम्भसंयुक्ता[7] ।
नायकदेवीदूती[8]सपरिजना नाटिका ज्ञेया ॥ ६०

दर्शनीयम् । उद्देशक्रमानुसारेण तु तल्लक्षणविस्तरणं पुनस्तल्लक्षणपरामर्शे च गौरवमित्यभिप्रायेणार्याद्वयं पठति प्रकरणनाटकभेदादित्यादि । प्रकरणनाटकाभ्यां भेदात् लक्षणान्यत्वान्नाटिका ज्ञेयेति दूरेण संबन्धः । उत्पाद्यं वस्तु चरितं च नायकं च नृपतिमन्तःपुरकन्यां सङ्गीतशालाकन्यां वाधिकृत्य प्राप्यत्वेन अभिसन्धाय कर्तव्या । स्त्रियः प्रायेण बाहुल्येन यत्र । चत्वारोऽङ्काः यस्याः कस्याश्चिदवस्थायाः सरसोऽवस्थासमावापः कार्य इति यावत् । ललिताभिनयात्मिकेति कैशिकीयं बद्धेत्यर्थः । सुष्टु पूर्णतया विहितानि चत्वार्यपि कैशिक्यङ्गानि यत्र । "अङ्गगात्रकण्ठेभ्य" इत्यत्र स्वाङ्गविशेषणाभावात् ङीष् प्रयोगः । एतदपि न मुनित्रयमतमित्यनादृत्यमिति त्वन्ये । रतिपुरस्सरः संभोगो राज्यप्राप्त्यादिलक्षण आत्मा प्रधानभूतं फलं यस्याम् । अत एवाह राजगतैरुपचारैः व्यवहारैर्युक्ता, अन्यां चेदुद्दिश्य तत्र व्यवहारः, तत्पूर्वनायिकागतैः क्रोधप्रसादवञ्चनैरवश्यं भाव्यमिति दर्शयति प्रसादनेति, आर्यानुरोधात्क्रोधस्य पश्चात्पाठः ।

ननु यस्याः क्रोधो भवति सा न काचिदुक्तेत्याशंक्याह नायकेति । नायकस्य येयं देव्याद्या नायिका तथाभिलषितनायिकान्तरविषये दूतीकृतं सपरिजनं परिजनसमृद्धिर्यस्यां । एतदुभयप्रधानं सर्वं तत्रेत्यर्थः । अन्यत्स-

1 ढ - नायको नृपतिः प - प्रकरणसमुद्भवा पुनरुत्पाद्यं वस्तु नायकं नृपतिम् । ड - प्रकरणनायकभेदादुत्पन्नं 2 ड - वार्ता ढ - कन्यामाश्रित्य 3 ड - सुविहितार्था 4 द - वाद्या 5 भ - कामोपचार 6 प ड न य - शृङ्गाराभिनयभावसंयुक्ता (भ - संपन्ना ब - संयोगा) 7 न - संयुता चापि 8 प - परिजनसमन्विता नाटकप्रकृतिः । य - परिजन संयुक्ता स - संबन्धा ।

[1] [अन्तर्भावगता ह्येषा भावयोरुभयोर्यतः।
अत एव दशैतानि रूपाणीत्युदितानि वै ॥ ] ६१
[2] प्रकरणनाटकलक्षणमुक्तं विप्रा मया समासेन।
वक्ष्याम्यतः परमहं लक्षणयुक्त्या समवकारम् ॥ ६२

न्ध्यङ्गादि सर्वं पूर्ववदेव। तत्रैका नायिका ताद्व्याख्याता भवति। पदपदेयं नाटिकेति संग्रहानुसारिणो भट्टलोल्लटाद्याः। श्रीशङ्कुकस्त्वयुक्तमेतदित्यभिधायाष्टधेति व्याचष्टे। तथा हि देवी कन्या च ख्याताख्याताभेदेन चतुर्धा, कन्या त्वन्तःपुरसङ्गीतकभेदेन द्विधेति। घण्टकादयस्त्वाहुः—नायको नृपतिरित्येतावन्मात्रं नाटकादावुपजीवितः न तु प्रख्यातत्वमपि तद्भेदद्वयादन्येऽष्टाविति षोडशभेदा इति। नायको नृपतिरिति ये प्रथमां पठन्ति तैर्यत्रेत्यध्याहृत्यैकवाक्यतायां तूभयस्य कार्यम्। अन्ये प्रथममार्यार्धं पृथगेव च वाक्यं योजयन्ति प्रकरणभेदात्प्रकरणलक्षणांशात् उत्पाद्यं वस्तु नाटकलक्षणांशाच्च नृपतिर्नायकः स्थिते यत्रेत्यभिप्राये नाटिकैवंभूतेति।

अन्ये तु प्रकरणनाटकभेदात् नाटिका भिद्यते नाटकशब्देनाभिनेयं रूपकमात्रं तस्यां सौकुमार्यप्रदर्शनाय स्त्रीत्वेन निर्देश इति प्रकरणिकापि सार्थवाहादिनायकयोगेन कैशिकीप्रधाना लभ्यत इत्याहुः। यद्यपि च नाटिकैवमुक्ता, तथापि प्रकरणनाटकलक्षणे एव तथा स्थिते तत्रेत्यभिप्रायेणोपसंहरति प्रकरणनाटकलक्षणमिति अन्यदासूत्रयति वक्ष्याम्यतः परमिति।

ननूद्देशक्रमत्यागे किंफलं उद्देशस्तावदत्र न परिगणनार्थ इत्युक्तं, तेनास्य प्राधान्यान्नाटिकया च विच्छिन्नोऽसावुद्देशक्रमः। यथा च नाटकप्रकरणयोर्व्युत्पाद्यभूयस्त्वं तथा समवकारेऽपि तत्र त्रिवर्गोपायप्रदर्शनात्। केवलं तत्तद्देवताभक्तानां तच्चरितपुरस्सरतया तस्य तस्योपायस्यादरणीयत्वं भवतीत्यनेनाभिप्रायेण दिव्योऽत्र नायकत्वेन निषिध्यते। तदीयं च भूयस्तरं न भूयस्तरं विततवृत्तमनुक्रियया प्रदर्श्यते, येन तन्मध्यपतितानां भवति निर्वेदादीनामभावे प्रयोगस्यारञ्जकत्वं नाटकगताङ्कैकदेशवत्, नाटकादौ तु भूयस्तरं

1 अयं श्लोको डढयोरेव वर्तते 2 भ - लक्षणमुक्तं प्रकरणनाटकयोरत्र नाटिकायाश्च न - प्रकरणनाटकनाठी 3 भ - समवकारे। ड - युक्तं समवकारम्।

देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव ।
[1]त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः ॥ ६३
द्वादशनायकबहुलो ह्यष्टादशनाडिका[2]प्रमाणश्च ।
[3]वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र ॥ ६४
[4]अङ्कस्तु सप्रहसनः सविद्रवः सकपटः सवीथिकः ।
द्वादशनाडीविहित[5]ः प्रथमः कार्यः क्रियोपेतः[6] ॥ ६५

चरितमनेकाङ्करञ्जकवर्गेण विना न रञ्जकमेवेति नाटकादौ दिव्यनायकनिषेध उक्तः । (नोक्त ?) तत्र हि राजप्रभृतयो बहुतरफलानुबन्धिनि महति फले संप्रयाससाध्ये व्युत्पाद्यन्ते, न तथेह किन्तु त्रिवर्गोपायमात्रे ।

अन्यरूपकाणां तु त्रिवर्गोपायत्वं नास्ति एकाङ्कत्वात्, डिमस्तु चतुरङ्कोऽपि पश्चान्निर्दिष्ट इत्यत्र तल्लक्षणे कारणं वक्ष्यामः । तस्मात् त्रिवर्गव्युत्पादकत्वा दनेकाङ्कत्वाच्च तादृशरूपकानन्तरमेवाभिधानं युक्तमित्यलं बहुना।

देवासुरस्य यद्बीजं फलसंपादनोपायस्तेन कृतो विरचितः । देवासुरा अपि चाप्रख्याता बृहत्कथादौ श्रूयन्ते स्वयं वा केनचिदूह्यन्त इति तन्निरासार्थं प्रख्यातपदम् । यद्यपि देवाः पुरुषापेक्षयोद्धतास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतयोदात्ता उच्यन्ते भगवत्त्रिपुररिपुप्रभृतयः। प्रशान्ताः ब्रह्मादयः,उद्धताः नृसिंहादयः । अत्र यत्र तावत्येव समापन्नं त्र्यङ्क इत्युक्तम् । अर्थत्रयं च कपटविद्रवशृङ्गाराः प्रत्येकं त्रिविधास्तत्र प्रत्यङ्कं विद्रवादयस्त्रयस्तथाहि कपट उपायांशे विद्रवो व्यापत्तिसंभावनांशे शृङ्गार फलांशे, एवं द्वितीयेऽङ्के तृतीये च । द्वादशनायकबहुल इति प्रत्यङ्कमिति केचित् । अन्ये तु प्रत्यङ्कं नायकप्रतिनायकौ तत्सहायौ चेति चतुराहुः, समुदायापेक्षया हि द्वादशेति । सप्रहसन इति वचनात् प्रथमेऽङ्के कामशृङ्गारः प्रयोज्य इत्याह तत्रैव हास्यस्यागमनात् । त्रि(क्रि?)योपेत इति कामशृङ्गारात्मकं द्वादशघटिकामध्यसंपाद्यैः कपटाविद्रवप्रह

1 प - अङ्कः 2 द - नायिका 3 ड - वक्ष्याम्यस्याङ्कविधिं यत्रान्या नाडिका कार्या द - या तत्र तु नायिका योज्या भ - यद्यत्र च नाडिका कार्या 4 ढ - अङ्केऽत्र सुप्रसन्नः 5 यनप - युक्तः 6 ढ - कार्यो यथार्थस्तु । ढ - यथोक्तस्तु

कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्त्रस्तु[1] ।
[2]वस्तुसमापनविहितो द्विनाडिकः स्यात्तृतीयस्तु ॥[3] ६६
[4]नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् ।
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ॥ ६७
[5]या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना ।
कार्या च सा प्रयत्नाद्यथाक्रमेणैव शास्त्रोक्ता ॥ ६८
[6]अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य[7] ।
अर्थं हि समवकारे ह्यप्रतिसंबन्ध[8]मिच्छन्ति ॥ ६९

सनलक्षणैरुपायैः प्राप्ते प्रथमाङ्के निबध्नीयादिति तात्पर्यम् । द्वितीये त्वङ्के घटिकाचतुष्टयगामिभिः कपटादिभिरुपायैः, तृतीये त्वङ्के सर्वं वस्तु समाप्यते । द्विघटिकान्तरसंपाद्यैरुपायैः यद्यपि प्रत्यङ्कं वस्तुपरिसमाप्तिरस्ति तथापि तृतीये वस्तुसमाप्तिग्रहणेनेदमाह—बीजे तावदङ्कत्रयार्थ उपक्षेप्तव्यः, तदनन्तरमङ्कद्वयेऽवान्तरवाक्यार्थसमाप्तिरन्योन्यविशिष्टैव विधेया। तृतीये त्वङ्केऽवान्तरवाक्यार्थः। तृतीयस्ताभ्यां प्रतिसंबद्धः। एवं महावाक्यार्थनिर्वाहहेतुसंबद्धतैव सर्वस्य जायते। एवं हि सानुसन्धाना विततदृशोऽपि त्रिवर्गसिद्ध्युपायव्युत्पत्त्यनुगृहीता भवति, निरनुसन्धानापि तावत्तावत् परिसमाप्त्या तावत्युपाये निजहृदयसंवादबलादिति। अत एव संबद्धोऽवकीर्णश्च यत्रार्थः समवकारस्तदाह अङ्कोऽङ्क इति । तुर्व्यतिरेके अङ्कत्रयसंबन्धो भवति, न त्वङ्कोऽङ्कः परस्परमित्यर्थः । काव्यबन्धमिति । सर्ववस्तु काव्यबन्धोपश्लिष्टमित्यर्थः अन्यथा हि समवकार एकं कार्यमिति केयं फणितिः।

एतदेव निर्वचनेनाह अर्थं हि समवकार इति । समवकार इत्यस्मिन् शब्देऽर्थं वाच्यमप्रतिसंबन्धमिति नातिसंबद्धं किञ्चित्संबद्धं वस्त्विच्छन्ति

1 प - च 2 ड - वस्तुप्रमाण 3 भ - अथ प - अस्मिन् 4 भ - ज्ञेयं तु नाडिकाख्यं मानं कालस्य यन्मुहूर्तमिति 5 अयं श्लोको डद - मातृकयोरेव वर्तते 6 नप - अङ्केऽङ्के संबन्धः द - अङ्केऽङ्केऽन्योऽन्योऽर्थः ड - अङ्काङ्के 7 भ - बन्धतत्त्वज्ञैः 8 ड - संधानं द - संबद्धं ।

युद्धजलसम्भवो वा वाय्वग्निगजेन्द्र[1]संभ्रमकृतो वा।
नगरोपरोधजो वा विज्ञेयो [2]विद्रवस्त्रिविधः॥ ७०
वस्तुगतक्रमविहितो दैववशाद्वा परप्रयुक्तो वा।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटोऽत्र विज्ञेयः[3]॥ ७१
[4]त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्कार्ययोग[5]विहितार्थः।
[6]शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च॥ ७२

संशब्दबलादवशब्दबलाच्च। प्रतिशब्देनातिशय उक्तः स निषिद्धः। त्रिविद्रव इत्युक्तं तत्त्रयं वक्तव्यमचेतनकृतमन्यकृतमुभयकृतं वा यदनर्थात्मकं वस्तु, यतो विद्रवन्ति जनाः स विद्रव इति त्रिविधः। तत्राचेतनकृतमुदाहर्तुं जलवाय्वादिग्रहणम्। चेतनकृते गजेन्द्र उदाहरणम्, द्वयकृते नगरोपरोधस्तस्य युद्धाग्निदानादिसंपाद्यत्वात्। कपटो वञ्चना तस्याश्रयणमङ्गीकरणम्। त्रिधा तत्र वञ्चना, बुध्यैव कदाचित्केवलया कपटो भवति स हि वस्तुगतक्रमविहितः वस्तु फलं तत्मासौ वस्तुगतः फलसाधकः कर्ता, तस्य यः क्रम उपायचिन्तनादिः तेन विहितः यत्रानपराद्ध एव वञ्चकेन वञ्च्यते स एवमुक्तः। यत्र तु वञ्चनीयोऽपि सापराधः स परप्रयुक्तः कपटः, तदपराधे तु वञ्चकस्य वञ्चनेच्छा नास्तीति नायं भेदः संभवति वञ्चनेच्छाभावे वञ्चनायाः संपत्त्ययोगात्। यत्र तु द्वयोरपि न कश्चिदभिसन्धिदोषः काकतालीयेन तुल्यफलाभिसन्धानवतोरप्येक उपचयेनापरस्त्वपचयेन युज्यते, तत्र वञ्चना सा दैवकृता वञ्चना, न च कस्यचित्सुखमन्यस्य दुःखमुत्पादयतीति।

धर्मेऽर्थे काम इति सप्तम्या कार्यत्वं कारणत्वं चोच्यते। तेन धर्मो यत्र हेतुर्वा साध्यो वा नायिकालाभे स धर्मशृङ्गारः। एवमर्थकामयोर्वाच्यम्। यत्र शृङ्गार इति तद्विषयः प्रमदा व्यपदिश्यते, व्रतादियुक्त्या प्राप्यो यत्र

1. भ - विद्रवकृतो वा ड - जलेन्द्रसंभवो वापि न - संभवो वापि 2 य - विज्ञेया विद्रवास्त्रिविधाः 3 नभ - कपटाश्रयो ज्ञेयः 4 भ - त्रिविधश्च विधिर्ज्ञेयः 5 भ - काव्यबन्ध न - काव्ययोग 6 भ - त्रिविधकृतः शृङ्गारो ज्ञेयो धर्मार्थकामेषु (—त्रिविधाकृति.. ...कामकृतः—ड न - त्रिविधविधः) द - कर्तव्यः शृङ्गारो.

[1]यस्मिन् [2]धर्मप्रापकमात्महितं भवति साधनं बहुधा।
[3]व्रतनियमतपोयुक्तो[4] ज्ञेयोऽसौ [5]धर्मशृङ्गारः॥ ७३
[6]अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः।
[7]स्त्रीसंप्रयोगविषयेष्वर्थार्था वा रतिर्यत्र[8]॥ ७४
[9]कन्याविलोभनकृतं [10]प्राप्तौ स्त्रीपुंसयोस्तु रम्यं वा[11]।
निभृतं सावेगं वा[12] [13]यस्य भवेत्कामशृङ्गारः॥ ७५

च प्राप्ते धर्मप्रार्थनारूपमात्महितं यज्ञादि पत्नीसंयोगकृतं सिध्यतीति संबन्धः अनेकधेति राज्यभूमिगोसुवर्णादिभेदेनेत्यर्थः। रतिबहुमानोऽर्थार्थमिति योषितां पुरुषाणां च।

ननु च देवेषु कथमर्थार्थित्वं, गन्धर्वयक्षादिषु संभवत्येवेति केचित्। यदर्थनीयं तदर्थो देवेष्वपि चैतत्संभवतीत्यन्ये। उपाध्यायास्त्वाहुः—तत्र नायकयोरनुप्राप्तिरप्यन्यगतैव। यथा भगवतो भवानीपतेः गिरिराजपुत्रीसङ्गमनमिन्द्रादीनां तारकाक्रान्तनिजराज्यसमुन्मोचनाय भवतीति। कन्यायां विलोभो नायकस्य तस्याश्च तस्मिन्निति परस्परानुरागकृत इत्यर्थः। स्त्रीपुंसयोरुद्यानस्थानादि प्राप्तौ निभृत इति प्रच्छादनपूर्वकं यदि चासावेवास्मीति प्रकटं कृत्वा यः शृङ्गारः सः कामप्रयुक्त एव। स्त्री पुनरत्र परस्त्री विवक्षिता, यथा शक्रस्याहल्या।

नन्वेवं शृङ्गारयोगे काव्ये कैशिकीहीनता। कैशिक्यां वृत्तौ हीनामिति तत्र समासः, तेन नर्माद्यङ्गचतुष्कतदुपरञ्जकगीतनृत्यवाद्याद्यभावात् कैशिक्या

1 ङ - यत्र तु धर्मं प्रार्थितमात्महितं भवति साधितं बहुधा ( धर्मप्रार्थे -स्वात्म—भ) द - यत्र तु धर्मव्यापकं 2 न - धर्मे प्रायिकं 3 ङ प्रातिनियम (?) 4 द - युक्त्या 5 भ - स ज्ञेयो 6 भ - अर्थस्येप्सा यत्र तु नैकविधो भवति सोऽर्थशृङ्गारः च - अर्थस्याप्तिर्यस्मिन्नैकधा भवति सोऽर्थशृङ्गारः प - अर्थस्याप्तिर्यस्मिन्भवति च बहुधा स चार्थशृङ्गारः 7 फ - सम्यक्प्रयोग 8 च - अर्थार्थमपीष्यते हि रतिः 9 य - कन्याविलोभनं वा द - कन्याविलोभनत्वात् फ - कन्याविलोभनं वै 10 य - प्राप्य 11 यन - रत्यर्थम् द रत्यै वा फ - च रहः 12 भ - प्रसारितं वा यत्रासै द - निभृतः सावेगो वा विज्ञेयः फ - रम्यं वा निभृतं वा विज्ञेयः 13 न - विज्ञेयः ढ - जानीयात्कामशृङ्गारः.

[1]उष्णिग्गायत्र्याद्यान्यन्यानि च यानि बन्धकुटिलानि
[2]वृत्तानि समवकारे कविभिस्तानि[3] प्रयोज्यानि ॥ ७६
एवं कार्यस्तज्ज्ञै[4]र्नानारससंश्रयः समवकारः ।
[5]वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ॥ ७७
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ।[6]
सुविहितवस्तुनिबद्धो[7] विप्रत्ययकारकश्चैव ॥ ७८
[8]उद्धतपुरुषप्रायः स्त्रीरोषग्रथित[9]काव्यबन्धश्च ।

---

हीनात्र भवति । उपाध्यायास्त्वाहुः—न कामसद्भावमात्रादेव कैशिकीसंभवः, रौद्रप्रकृतीनां तदभावात् । विलासप्रधानं यद्रूपं सा कैशिकी, न च चरितम् तद्रूपाद्दुप्रवेशेऽपि तद्व्यवहारः; प्राधान्यकृतो ह्यसावित्युक्तम् । तेन तत्र विषये भारत्यादिवृत्त्यन्तराभिधानमेव युक्तमिति । उष्णिक्सप्तभिः गायत्री षड्भिः बन्धकुटिलानि विषमार्धसमानि तान्यत्र समवकारे सम्यग्योज्यानीति । नैव प्रयोज्यानीत्युद्भटः पठति, स्रग्धरादीन्येव प्रयोज्यानि नाल्पाक्षराणीति स व्याचष्टे । एवं श्रद्धालवो देवताभक्ताः तद्देवयात्रादावनेन प्रयोगेणानुगृह्यन्ते, निरनुसन्धानहृदयाः स्त्रीबालमूर्खाश्च विद्रवादिनाहृतहृदयाः क्रियन्त इत्युक्तः समवकारः ।

अथेहामृगमाह दिव्येति दिव्यानां पुरुषाणां आश्रयणं नायकतया तेन कृतः, दिव्यस्त्रीनिमित्तमुपगतं युद्धं यत्र । दिव्यानुप्रवेशात्समवकारवत् असंबद्धार्थता मा प्रसांक्षीदित्याह सुविहितेन संश्लिष्टेन वस्तुना निबद्धः, विगतानि प्रत्ययकारणानि विश्वासहेतवो यत्र । मध्ये च तत्र दिव्यानामपि प्रवेशो भवतीति दर्शयति उद्धतपुरुषेति स्त्रीनिमित्तको रोषः, संक्षोभ आवेगः स्त्रीनिमित्तं

---

1 भ - उष्णिग्गायत्री वा यानि स्युश्चापि बन्ध च - उष्णिग्गायत्र्या वा वृत्तानि च फ - उष्णिग्वानुष्टुब्वा छन्दस्सु च द - उष्णि...अन्यान्यपि बन्ध ड - उष्णिग्गायत्री वा यानि तथान्यानि बन्ध (—बद्ध-ढ) 2 च - तान्यत्र समवकारे सम्यक् 3 ड - कविभिर्नैव 4 ड - सुखदुःखसमाश्रयः द - नानारससंज्ञकः भ - सर्वैरसोपेतसमवकारस्तु (प - तज्ज्ञैः = प्राज्ञैः) 5 न - अत ऊर्ध्वं व्याख्यास्ये 6 फ - युक्तः(?) 7 फ - प्रहितो ड - निबन्धो 8 द - तद्धत 9 ष - प्रथित ।

संक्षोभविद्रवकृतः [1]संफेटकृतस्तथा चैव ॥ ७९
स्त्रीभेदनापहरणावमर्दन[2]प्राप्तवस्तुशृङ्गारः ।
ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च[3] ॥ ८०
यद्व्यायोगे कार्या ये पुरुषा वृत्तयो रसाश्चैव[4] ।
ईहामृगेऽपि ते स्युः[5] केवलममरस्त्रिया योगः[6] ॥ ८१
यत्र तु वधेप्सितानां [7]वधो ह्युदग्रो [8]भवेद्धि पुरुषाणाम् ।
किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम्[9] ॥ ८२
ईहामृगस्य लक्षणमुक्तं विप्राः समासयोगेन[10] ।

---

यानि भेदनाप्र(प?)हरणावमर्दनानि यथायोगं स्त्रीविषयाणि अन्यविषयाणि तैः प्राप्तं वस्त्वधिष्ठानं प्रमदालक्षणं यस्य तादृशः शृङ्गारो यस्मिन् । अवमर्दनं दण्डः। सुसमाहितः काव्यबन्ध इत्यनेन वीथ्यङ्गान्यत्र योज्यानीति दर्शयति । अङ्कपरिमाणं नायकसंख्यां वृत्तिरसविभागं च व्यायोगातिदेशेनाह यद्व्यायोग इति। कार्यशब्देनाङ्क उच्यते। तेनैक एवाङ्कः नायकास्तु द्वादश समवकारातिदेशेन व्यायोगे तल्लाभात् । अत्र तु समवकारातिदेशेन सर्वसंपत्तेर्गौरवं स्यात् ।

ननु युद्धमवमर्दनं चेत्युक्तं तत्रास्य प्रत्यक्षप्रयोज्यता माभूदिति दर्शयति यत्र त्विति । वधेप्सितानां वध्यानां भवेदिति संभाव्यत इत्यर्थः । तत्रेति येषामिति चाधमाहार्यं । व्याजमिति पलायनादि । ईहा चेष्टा मृगस्येव स्त्रीमात्रार्था यत्र स ईहामृगः ।

---

1 प - संस्फोटकृतश्च स ज्ञेयः फ - संफेटककृतस्तथैव 2 प - उपमर्दन भ - प्रमर्दन उ - अवमर्दसंप्राप्त फ - हरणे प्रमदेन (?) 3 य - चतुरङ्कविभूषितश्चैव प - ईहामृगो विधेयश्चतुरङ्कविभूषितस्तज्ज्ञैः 4 ड - ये रसाश्च निर्दिष्टाः भ - ये रसाश्रयाश्चैव 5 च - तत्स्यात् 6 द - अत्र स्त्रियायोगः भ - न केवलं स्त्रीसमायोगः 7 ढ - वधोऽप्युदग्रो द - वधो ह्युपग्रो भ - कारणयोगाद्भवेद्वध उदग्राणाम् 8 ड - भवेत्तु 9 फ - समयितव्यम् 10 च - समासेन (?) भ - लक्षणमित्युक्तमिदं समासेन ड - इदमित्युक्तं मया समासेन ।

[1]डिमलक्षणं [2]तु भूयोलक्षणयुक्त्या प्रवक्ष्यामि ॥ ८३
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव[3] ।
[4]षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥ ८४
शृङ्गारहास्यवर्जः[5] शेषैः [6]सर्वै रसैः समायुक्तः[7] ।
दीप्तरसकाव्ययोनिर्नानाभावोपसम्पन्नः[8] ॥ ८५
[9]निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः[10] ।
युद्धनियुद्धाधर्षण[11]संफेट[12]कृतश्च कर्तव्यः[13] ॥ ८६
[14]मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च[15] ।
[16]देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च[17] ॥ ८७
[18]षोडशनायकबहुलः [19]सात्त्वत्यारभटिवृत्तिसम्पन्नः[20] ।

---

अथ डिममाह प्रख्यातवस्तुविषय इति । नाटकतुल्यं सर्वमन्यत्केवलं सन्धीनां रसानां चासमग्रता च शृङ्गारहास्यवर्जे षड्रसत्वे पर्यायेण शान्तस्य प्रयोगः स्यादित्याह दीप्तरसेति । काव्ययोनिः काव्यवस्तु । देवादयो बाहुल्येनात्र सात्त्वत्यारभटीति । 'जातिरप्राणिनाम्' इति केचित् । सात्त्वत्यारभटीवृत्तिसंपन्नं वृत्तिद्वयं यत्र वृत्तिसमूहे वा वृत्तिशब्दः सात्त्वत्यारभटीलक्षणव्यावृत्त्या संपन्नः । डिमो डिम्बो विद्रव इति पर्यायाः, तद्योगादयं डिमः । अन्ये तु डयन्त

---

1 च - अथ वै डिमस्य लक्षणमतःपरं संप्रवक्ष्यामि । 2 ड - च 3 ड - उपेतः 4 फ - षट्त्रिंशत् (?) प - श्लोकार्धं नास्ति 5 न - वर्जैः 6 द - अन्यैः 7 भ - रसैस्तु यः कार्यः म - संयुक्तः 8 प - चतुरङ्को वै डिमः कार्यः ड - भावान्विताश्चैव न - भावादिकाश्चैव द - चित्रो डिमः कार्यः भ - भावस्तथाचैव 9 यडन - निर्घातचन्द्रसूर्योपरागसोल्कावपातसंयुक्तः 10 भ - चैव 11 न - युद्धनिबद्धश्च तथा द - नियुद्धनिबद्धः ड - प्रहरण 12 प - संस्फोट 13 फ - तत्र कर्तव्यः 14 फ - माहेन्द्र 15 भ - भेदसंयुक्तः भ - बहुशश्चोत्थानभेदसंयुक्तः 16 भ - देवासुरराक्षसभूतनागपुरुषा भवेयुश्च (ड - भूतयक्षनागाश्च पुरुषाः स्युः) 17 न - अवतीर्णश्च 18 प - षोडशनायकबहुलस्तज्ज्ञैर्नानाश्रयविशेषः सात्त्वत्यारभटीभ्यां वृत्तिभ्यामन्वितो डिमः कार्यः । 19 भ - त्वारभटी सात्त्वतीसमायुक्तः 20 ड - संयुक्तः ।

कार्यो डिमः[1] प्रयत्नान्नानाश्रयभावसम्पन्नः ॥ ८८

[2][डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम्।
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि ॥] ८९

व्यायोगस्तु विधिज्ञैः[3] [4]कार्यः प्रख्यातनायकशरीरः।
[5]अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव[6] ॥ ९०

---

इति डियः उद्धतनायकास्तेषामात्मनां वृत्तिर्यत्रेति । "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः । नानाश्रयभावसंपन्न इत्यनेन सर्वभावयुक्तत्वादिति-वृत्तवैचित्र्यमाह ।

नाटकादनन्तरं डिमलक्षणं यद्यप्युचितं तथापि तद्गतप्रवेशकादिसंभव-निराकरणार्थं तत्प्रकरणादपकृष्यास्याभिधानं, तेन दिनचतुष्टयवृत्तमेवात्र प्रयो-ज्यम् । अङ्कावतार एव चात्र भवति । चूलिकाङ्कमुखयोस्त्वत्रापि युद्धादि-वर्णने समुपयोगोऽस्त्येव । ततश्च वस्तुतः प्रवेशकाद्यनिषिद्धमेव, प्रवेशकस्य ह्यसंभव एव । सरसेतिवृत्तवशाद्वा यथाङ्केष्वन्योन्यासंबन्धात् यथा समवकारे बह्वङ्केऽपि तस्मात्प्रकरणोत्कर्षोऽस्य तस्यावसरभावात् । तत्र हि नाटकान्तर-मस्याभिधाने प्रकरणस्य न तत्स्पर्धित्वमुक्तं भवेत् । तदनन्तराभिधाने नाटि-कादिभेदः कथं ख्याप्यः। नाटिकायां च स्त्रीप्रधानत्वात्, त्रिशृङ्गारसमवका-राभिधानमेव ततः परं न्याय्यम् । तत्प्रसङ्गेन च दिव्यपुरुषसंबन्धादीहामृग उक्तः, तदनन्तरं च दिव्यपुरुषाधिकारेण रूपकाणीति पूर्वमनेकरसयुक्तत्वेन वितततेतिवृत्तत्वादयमभिधातुं युक्तमित्यलं बहुना ।

व्यायोगस्तु डिमस्यैव शेषभूतो, दिव्यनायकाभावात् केवलमत्रोदात्तस्य राजादेः नायकता, अपि त्वमात्यसेनापतिप्रभृतेर्दीप्तरसस्य, अत एवाह प्रख्यातनायकेति उदात्तग्रहणमपाकर्तव्यमित्यर्थः । यथा समवकार इति द्वाद-शेत्यर्थः । तावदङ्कपरिमाणशङ्कामतिदेशात् प्रत्यासत्त्या प्रसक्तां वारयितुमाह एकाङ्क एवेति । एवकारेणैकाहचरितविषयत्वान्न्यायप्राप्तमेवात्रैकाङ्कत्वमित्याह ।

---

1 द - प्रयोगात्तज्ज्ञैर्नानाश्रयविशेषः (ड - विशेषेण ढ - विशेषैः । ) प्राज्ञै-र्नानाश्रयविशेषैः 2 - अयं श्लोको ङनयभ मातृकास्वेव वर्तते । 3 प - तत्र बुधैः फ - सुविधिज्ञैः 4 ड - कर्तव्यः स्यात् 5 फ - स्त्रीजनयुक्तस्तु डिमः 6 प - स्यादेकाहप्रयोज्यश्च ।

बहवश्च तत्र[1] पुरुषा [2]व्यायच्छन्ते यथा समवकारे[3] ।
न [4]च तत्प्रमाण[5]युक्तः कार्यस्त्वेकाङ्क एवायम् ॥ ९१
न च [6]दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः[7]
युद्धनियुद्धाधर्षण[8] [9]संघर्षकृतश्च [10]कर्तव्यः ॥ ९२
एवंविधस्तु कार्यो व्यायोगो दीप्त[11]काव्यरसयोनिः ।
वक्ष्याम्यतःपरमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ ९३
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात्[12] ।
दिव्यपुरुषैर्वियुक्तः शेषै[13]र्युक्तो भवेत्पुंभिः ॥ ९४
करुण[14]रसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च[15] ।

---

ननु प्रख्यातनायकशब्देन किमत्र गृहीतमित्यातिप्रसङ्गं शमयति न चेति । चो भिन्नक्रमः । दिव्यैर्देवैः नृपैः ऋषिभिश्च नायकैः न निबद्धोऽयं भवतीत्यर्थः ।

ननु कस्मादयं व्यायोग इत्याह युद्धनियुद्धेति व्यायामे युद्धप्राये नियुध्यन्ते पुरुषा यत्रेति व्यायोग इत्यर्थः । नियुद्धं बाहुयुद्धं संघर्षः शौर्यविद्याकुलरूपादिकृता स्पर्धा । दीप्तं काव्यमोजोगुणयुक्तं, दीप्तरसाद्या वीररौद्राद्याः, तदुभयं योनिः कारणमस्य ।

रौद्राद्यनन्तरं "रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणः (६-४५)" इत्युक्तत्वात्तत्प्रधानमुत्सृष्टिकाङ्कमेतदनन्तरमाह । प्रख्यातवस्तुविषय इति । प्रख्यातं भारतादियुद्धे विषये निमित्ते सति यत्तत्करुणबहुलं चेष्टितं वर्ण्यते तत्ख्यातं स्त्रीपर्ववृत्तान्तवत्, मा भूदित्यप्रख्यातग्रहणेनोक्तम् । तेनोभयोपादानस्य परस्परविरुद्धार्थत्वादकिञ्चित्करत्वं नाशङ्कनीयम् । निवृत्तयुद्धा उद्धतप्रहाराः

---

1 भ - तत्र तु ड - तत्र च 2 ड - कविभिः कार्यो भ - नित्यं कार्यं यथा 3 प - कथाशरीरवशात् 4 नभ - तु 5 ड - वस्तुस्त्वेकाङ्कः संविधातव्यः च - युक्ताः कार्याः भ - कालस्तत्राङ्कः संविधातव्यः प - नियमः किंचैकाङ्को विधातव्यः 6 प - स च दिव्यमानुष 7 प - निबन्धः 8 द - आकर्षण 9 भ संफेट 10 द - झडिति कर्तव्यः ड - चापि कर्तव्यः 11 प - कार्ये 12 प - तेष्वप्रख्यातवस्तुविषयो वा भ · अप्रख्यातोऽपि वा क्वचित्कार्यः 13 नड - अन्यैर्भवेत् प - च समन्वितः पुंभिः । 14 द - रसार्थप्रायो 15 भ - प्रभावश्च . फ - बद्धोद्धतप्रहारश्च ।

स्त्री[1]परिदेवितबहुलो निर्वेदितभाषितश्चैव[2] ॥ ९५
[3]नानाव्याकुलचेष्टः [4]सात्त्वत्यारभटिकैशिकीहीनः ।
[5]कार्यः काव्यविधिज्ञैः[6]सततं ह्युत्सृष्टिकाङ्कस्तु ॥ ९६
यद्दिव्यनायककृतं काव्यं संग्राम[7]बन्धवधयुक्तम्[8] ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥ ९७
[9]कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु[10] ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात्[11] ॥ ९८

पुरुषा यस्मिन्।परिदेवितं दैवोपालम्भात्मनिन्दारूपमनुशोचनं यत्र। निर्वेदितानि येषु श्रुतेषु निर्वेदो जायते तादृंशि भाषितानि यत्र । व्याकुला चेष्टा भूमिनिपातविवर्तिताद्याः । सात्त्वत्यारभटिकैशिकीहीन इति समाहारद्वन्द्वगर्भद्वन्द्वान्तरगर्भस्तृतीयासमासः।उत्क्रमणीया सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इति तथोक्तः । वृत्तिभिरुत्सृष्टत्वा(दित्य)न्ये तदा द्वित्वं च त्रित्वमुद्देशस्यैकदेशेन । अयमङ्क इति निर्दिष्टो वृत्तानुरोधात् । इह च करुणरसबाहुल्याद् देवदेवैर्वियोगः रौद्रबीभत्सभयानकसंबन्धो दिव्ययोगे भवत्यपि न तु करुणयोगः । नन्वेवं देवानां युद्धान्यप्यनुचितमित्याशंक्य प्रसङ्गात्समवकारादौ देशविशेषोपयोगं दर्शयति दिव्यनायककृतमिति । तेषां भारतवर्षावतीर्णानां युद्धादिकं प्रदर्शयेदित्यर्थः । अत्र राज्ञः पृच्छति कस्माद्भारत मिष्टमिति । अत्र प्रयोगे प्रतिवक्ति वर्षेष्वन्येष्विति देशत्वेन भोगभूमित्वेन विहितेष्वपीत्यर्थः । उपवनं गत्वा क्रीडा जलक्रीडादिकाः विहरणमुपवन एव सञ्चरणं नार्या सह रतिः संभोगः प्रमोदो दिव्यपानादिकृतम् । नन्वेवमिलावृतकुरुप्रभृतिषु वर्षेषु मा तेषां देवानां वृत्तं व्याख्यायि तथापि स्वनि-

1 न - परिदेवन 2 द - वाक्यभाषश्च 3 भ - नाति द - नातिव्यायत 4 भ - विवर्जितो वृत्तिभिर्विधातव्यः। सात्वत्यारभटीकैशिकीभिरुत्सृष्टिकाङ्कस्तु। 5 ड - कर्तव्योऽभ्युदयान्तस्तज्ज्ञैः 6 न - सर्वं च 7 ड फ - युद्ध (?) 8 द - तत्त्वम् 9 ड - तस्मात् 10 प - नित्यकालं हि (फ - काष्ठं हि) न - नित्यकालसुखम् 11 भ - तत्र प - हेमरत्नमयी ड - चैव ।

उपवनगमनक्रीडा[1] विहारनारीरतिप्रमोदाः स्युः।
[2]तेषु हि वर्षेषु सदा न [3]तत्र दुःखं न वा[4] शोकः॥ ९९
[5]ये तेषामधिवासाः[6] पुराणवादेषु[7] पर्वताः प्रोक्ताः[8]।
[9]सम्भोगस्तेषु भवेत्कर्मारम्भो भवेदस्मिन्[10]॥ १००
प्रहसनमपि[11] विज्ञेयं द्विविधं शुद्धं [12]तथा च सङ्कीर्णम्।
[13][अङ्कस्य लक्षणमिदं व्याख्यातमशेषयोगमात्रगतम्॥
प्रहसनमतःपरमहं सलक्षणं संप्रवक्ष्यामि।]
[14]वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम्[15]॥

वासेषु व्यावर्ण्यतामित्यत आह ये तेषामधिवासा इति वसन्ति तेष्विति वासाः। पर्वता इति कैलासादयः, संभोग इति सा हि तेषां भूमिः भोगस्थानं, तस्मिन्निति भारतवर्षे कर्मारम्भः आरम्भग्रहणेनेदमाह न तेषां दुःखं पूर्णं कदाचिद्भवति। दुःखपूर्णतायां देवत्वस्यैव विघातानवस्थानप्राप्त्या स्वरूपलोप इति युक्तमुक्तम्। करुणरसबाहुल्यादुत्सृष्टिकाङ्कैः दिव्यैर्वियोग एव तेषां सुखबाहुल्यात्तत्सन्निधाने अन्यस्यापि शोकावसरपराकृतेरिति गाढदुःखाभिभूता, एवंभूतप्रयोगदर्शने सति 'दुःखी दुःखाधिकान् पश्ये' दिति नीत्या प्रतनूभूतदुःखभाराः सुखेन विनेया भवन्ति, यथोक्तं प्राक् 'स्थैर्यं दुःखार्दितस्य च' (१-१११) इत्युत्सृष्टिकाङ्कप्रयोगः।

एवं रञ्जनप्रधानेन करुणेन युक्तं रूपकमभिधाय रञ्जनाप्रधानं हास्यप्रायं प्रहसनं लक्षयति विभागमुखेन प्रहसनमपि विज्ञेयमिति द्विविधमिति। विभागः शुद्धं सङ्कीर्णं चापीति। अपिशब्दोऽतिक्रमः, तथेति सामन्यलक्षणम्। तदयमर्थः द्विविधमपि तथा प्रहसनरूपं हास्यरसप्रधानमित्यर्थः। लक्षणविशेषं विशेषलक्षणम्। भगवत्तापसविप्राः यतिवानप्रस्थ-

1 नद - विहरण 2 भ - तस्मिन्नित्यं वर्षे 3 ड - भवति 4 ढ - न तत्र वा फ - नो दुःखं नापि वा 5 प - ये चैषां 6 च - अपि वासाः न - अविनाशात् 7 भ - वादे च 8 प - कथिताः ड - ह्युदिताः भ - विहिताः फ - सर्वतः कथिताः 9 च - संभोगात् 10 प - तथैतस्मिन् दफ - आरम्भास्तथा ह्यस्मिन् 11 य - इति प - इह 12 ढ - तथैव 13 डढ योरेव वर्तते 14 भ - व्याख्यामि तयोरपि ढ - ताभ्यां व्याख्यास्येऽहं न - तस्मै फ - तस्य व्याख्यास्याम्यहं 15 द - विशेषान्।

[1]भगवत्तापस[2]विप्रैरन्यैरपि हास्यवादसंबद्धम्[3] ।
[4]कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥ १०३
[5]अविकृतभाषाचारं विशेष[6]भावोपपन्नचरितपदम् ।
नियतगतिवस्तुविषयं [7]शुद्धं ज्ञेयं प्रहसनं तु[8] ॥ १०४
वेश्या[9]चेटनपुंसक[10]विटधूर्ता बन्धकी च यत्र स्युः ।
[11]अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु संकीर्णम् ॥

गृहस्थाः, अन्ये शाक्यादयस्तैरुपलक्षितम् । हास्यप्रधानवचनसंबन्धशीलनादिना कुत्सितैः पुरुषैरत एव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभिर्युक्तम् । तथापि च भाषाचारौ यत्र न विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैः व्यभिचारिभिरुपपन्नानि पदानि कथाखण्डानि यस्मिन् । नियतगतिः एकप्रचारं यद्वस्तु तद्विषयः प्रहसनीयलक्षणो यत्र, तच्छुद्धं प्रहसनम् । अत्र निर्विचनं यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति तेन यत्रैकस्यैव कस्यचित् चरितं दुष्टत्वात्प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं चाकल्पादि तदेकद्वारेणानेकवेश्यादिचरितेन हसनीयेन सङ्कीर्णत्वात् सङ्कीर्णम् । अन्ये त्वाहुः—येषां स्वभावत एव चरितं शिष्टमध्ये सभ्येतरतमत्वेन प्रहसनार्हं तदविशुद्धत्वात्सङ्कीर्णम्, तद्योगाच्च रूपकम् । ये तु स्वभावतो न गर्हिता भगवत्तापसादिचेष्टाविशेषास्तेषां प्राकृतपुरुषसंक्रान्तिदौरात्म्योदितामन्यसंबन्धदूष्यमाणतया प्रहसनीयतां यातास्ते स्वभावशुद्धाः

1 भ - भागवतविप्रतापससौगतनिर्ग्रन्थधूर्तविटपुरुषैः । नीचजन.... ......
2 न - विद्भैः ड - भिक्षुश्रोत्रियविप्रातिहाससंयुक्तम् 3 दप - हासवादसंपन्नम् । 4 पड - नीचजन 5 भ - अधिगत 6 प - भाषोपहास न - भावोपहास ड - हासोपहास द - भावोपरचित फ - भावोपपन्नरचितमिदं भ - विशुद्धभाषोपहास 7 प - शुद्धमिह प्रहसनं ज्ञेयम् । 8 द - प्रहसने तु 9 फ - नपुंसकविटैर्वानिकदासीजनेन वा कीर्णम् (—वातिक...जनेन संकीर्णम्—प) वाडिकनारीजनेन संकीर्णम्—न) 10 द - विटवार्तिकधूर्तबन्धकीयुक्तम् ड - धूर्तविटवर्धकी च भ - धूर्तविटबद्धनीचयतयः स्युः । 11 च - अनिसृत 12 प च संपन्नम् भ - चेष्टाभिश्चैव संकीर्णम् (संपन्नम् - म) ड - चेष्टाकरणात्तु (र्थे-द) संकीर्णम् ट- करणं च संकीर्णम् ।

लोकोपचारयुक्ता या वार्ता यश्च [1]दम्भसंयोगः ।
[2]स प्रहसने प्रयोज्यो धूर्तप्रविवादसम्पन्नः[3] ॥ १०६
[4]वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम् ।
[5]भाणस्यापि [6]तु लक्षणमतःपरं संप्रवक्ष्यामि[7] ॥ १०७
आत्मानुभूतशंसी पर[8]संश्रयवर्णनाविशेषस्तु[9] ।

तद्योगाद्रूपकं शुद्धमिति । उभयसाधारणीमपि कवेः शिक्षामाह लोकोपचारेति। वार्ता प्रसिद्धिर्यदि सा लोकव्यवहारसिद्धा भवति, यथा शाक्यानां स्त्रीसंपर्कः प्रहसनीयो भवति, न चौर्यम् । एवंभाविप्रसिद्ध एवोपहसनीयः । अत्राधिकरणं स्वयमेवाह धूर्तप्रविवादेति । धूर्ताः कुलिमतापसादयः विटादयश्च । तद्विषये यः प्रकृष्टो विवादः विरुद्धतयावभासस्तेन फलभूतेन संपाद्यतया यदुक्तं प्रहस्यमानं तथाभूतचरितावलोकनेन हि संस्कृतमिति व्युत्पाद्यो न भूयस्तान्वञ्चकानुपसर्पतीति । वीथ्यङ्गैरिति वक्ष्यमाणैः, यथायोगमिति तेषां संप्रयोगे संख्यायाः क्रमस्य तु न कश्चिन्नियम इति दर्शयति । प्रहसनस्याङ्गनियमानभिधानात् शुद्धमेकाङ्कं सङ्कीर्णं त्वनेकाङ्कं वेश्यादिचरितसंख्याबलादिति केचित् ।

अन्ये त्वेकाङ्कप्रकरणमध्यपातित्वादेकाङ्कमिति मन्यन्ते प्रथमसंख्ययातिक्रमे भेदाभावपरित्यागे च प्रमाणाभावात् ।

अथ हास्यरसोचितविटधूर्ताद्यनुप्रवेशेन समानयोगक्षेमं भाणं लक्षयितुमाह आत्मानुभूतशंसीति । एकेन पात्रेण हरणीयः समाजिकहृदयं प्रापयितव्योऽर्थो यत्र स भाणः । एकमुखेनैव भाण्यन्ते उक्तिमन्तःक्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति भाणः । तत्र स प्रविष्टः पात्रविशेषः

1 भ - लम्भ 2 भ - तत् प्रहसनेषु योज्यं च - तत्.. सुयोज्यं ढड - तत् नसंयोज्यं 3 ड - विटधूर्तविवादसंपन्नम् भ - संयुक्तम् च - धूर्तप्रविवादसंयुक्तम् 4 प - उद्घात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवेन्मिश्रम् (मिश्रयेद्यथायोगम् - द भ - अवलगितावस्कन्दितव्याहारगोपि (?) चालनाप्रपञ्चश्च । छलमृदवनालिकाःस्युर्गण्डं चासत्प्रलापश्च । एतै रङ्गैर्युक्तं प्रहसनमेषां तु लक्षणं वीथ्याम् । 5 द - भाणस्य विधानमतो लक्षणयुक्तया प्रवक्ष्यामि 6 भ च ड - हि 7 भ - संविधास्यामि 8 भ - संस्तुत य - संस्तव न - संश्रव 9 प विशेषयुतः ट - प्रयुक्तश्च द - च

[1]विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च[2] ॥ १०८

परवचनमात्मसंस्थं[3] [4]प्रतिवचनैरुत्तरोत्तरग्रथितैः[5] ।

[6]आकाशपुरुषकथितै[7]रङ्ग[8]विकारैरभिनयैश्चैव[9] ॥ १०९

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।

[10]एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ ११०

[भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।

वीथ्याः संप्रति निखिलं कथयामि यथाक्रमं विप्राः] ॥

---

आत्मानुभूतं वा शंसति परगतं वा वर्णयति । तत्र च प्रयोगप्रयुक्तिमाह परवचनमिति । परसन्धिवचनं स्वयमङ्गविकारैरभिनयेत् ।

ननु तत्परवचनमयुक्तं कथमभिनयेत् आह आकाशे शून्ये यानि पुरुषकथितानि दृष्टानि यत्र शून्ये तेन वर्ण्यन्ते वा कश्चित्पश्यत्याकर्णयति च तत्र च तद्वचनं स एवानुवदन् सामाजिकान् बोधयति । यथा "भो बाडव, अले किं ब्रवीषि" इत्यादौ न केवलं परवचनमभिनयेत्, किन्तु प्रतिवचनैः स्वोक्तैः सह, अतएवोत्तरोत्तरग्रथितैः योजनाभिरुपलक्षितैः। ननु योऽसावेकोऽत्र प्रविशति स क इत्याह धूर्तविटेति । नानाप्रकारावस्थाविशेषात् लोकोपयोगिव्यवहारात्मकात्मा वाच्यं यस्य, अत एव बहुचेष्टः सततं कार्य इति सकलसामान्यपृथग्गतोपयोग्यस्तु लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति बाहुल्येन पृथग्जनव्युत्पत्तियोनिरूपकमिदं राजपुत्रादीनामपि शंभलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति संप्रयोज्य इत्यर्थः ।

इदमिह मीमांस्यं—य एते उत्सृष्टिकादयो रूपकभेदाः ते तावदेकरसा एव, यद्यपि नाटकादयोऽप्येवमेव । तथाहि सर्वरसयोग्यतायामपि नाटके प्रक-

---

1 च द्विविध 2 भ - कार्यश्च म - पात्रश्च प - सैकहार्यश्च 3 ड - मात्र संस्थं ढ द - संस्थैः 4 ड - परवचनैः 5 भ - सोत्तमैर्ग्रथितवाक्यम् (म - सोत्तरैः) 6 ढ - आकार 7 भ - कथितैः 8 ड - विहारैः 9 ढ अभिनयेत्तत् प - इहाभिनयेत् भ - अभिनयेत्तम् द - अनियमोऽस्य । 10 न - वस्तुसमाङ्कः कार्यः सततं काव्ये भ - कार्योऽङ्कवस्तुतुल्यः सततं काव्येषु वै भाणः

रणे च धर्मार्थादिवीरे एव प्रधानं परमार्थतः सर्वेषु नायकभेदेषु वीरत्वानुगमदर्शनात् । समवकारे तु यद्यपि हि शृङ्गारादित्वमुक्तं तथापि वीर एव प्रधानं रौद्रो वा, डिमव्यायोगयोरप्येवम् । ईहामृगेऽपि रौद्रप्राधान्यमेव, नाटिकायां तु शृङ्गार एव प्रधानम् । एवं तावद् वीररौद्रशृङ्गारा यथास्वं [किं] पुमर्थत्रयप्राणभूतत्वेन वर्तमाना, एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्रवरप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम् । एवं तावत्पुमर्थविषयो रूपकरसविषय एव परमार्थतः, तथापि त्वितिवृत्तवैतत्याद्रसान्तरप्रयोगोऽपि तदङ्गतया तत्र भवति । एवं तत्प्रधानचेष्टायोगाद्वृत्तिवैचित्र्यमत्रोचितमेव । उत्सृष्टिकाङ्कप्रहसनभाणास्तु करुणहास्यविस्मयप्रधानत्वाद् रञ्जकरसप्रधानाः, तत एवात्र स्त्रीबालमूर्खादिरधिकारी । न च विततमत्रेतिवृत्तम्, इतिवृत्तवैचित्र्यमपि तत्र नास्ति । तथाहि—उत्सृष्टिकाङ्के तु वृत्तित्रयं तावद्वचसा निषिद्धं, भारती चात्र कथं वृत्तिः, चेष्टा हि करुणेऽप्रधानं, तदुपकरणं तु परिदेवितात्मिका भारती, तस्मात् फलसंवित्त्याख्या वृत्तिः, वाक्चेष्टयोः फलानुभव इति यस्या लक्षणं, साभ्युपगन्तव्या । अवश्यं चैतत्, अन्यथा मूर्छामरणादौ वाक्चेष्टयोरभावे निर्वृत्तिकतैव स्यात् । किञ्च यदि तावत्पुमर्थकामोद्देशेन कैशिक्यभिधीयते धर्ममर्थं चोद्दिश्य वृत्तिद्वयं वक्तव्यम् । तस्माच्चेष्टात्मिका न्यायवृत्तिरन्यायवृत्तिर्वाग्रूपा तत्फलभूता फलसंवित्तिरिति वृत्तित्रयमेव युक्तमिति भट्टोद्भटो मन्यते ।

यदाह—

आद्ये वाक्चेष्टाभ्यां पुरुषार्थचतुष्टयेन चाष्टविधे ।
षोडशधा फलवृत्तिस्तद्वयतोऽनेकधा तु रसभेदात् ॥ इति ।

तदत्र केचिदाहुः—सात्त्वत्यां यद्यपि कैशिकी शक्यान्तर्भावा तथापि रञ्जकत्वातिशयात् पृथगुपात्ता[त्], स्वरवन्मुखजाभिनयतश्च, न चान्यायवृत्तौ (वृत्तित्वं) पुमर्थचतुष्कयोगोपपत्तिविप्रतिषेधात्, फलवृत्तौ च वृत्तिसामान्यलक्षणं व्यापाररूपत्वं यदि नास्ति तत्कथं वृत्तित्वम् । अस्तिचेद्वाक्चेष्टातिरिक्तो मानसो व्यापारो न कश्चित् लोकसिद्ध इति सूक्ष्मो वाक्चेष्टागत एवोपेत्यः । ततश्च मरणमूर्छादावपि प्राणात्मकायीयव्यापारसंभव एव यदनुस्मरणे लयतालगानानि प्रवर्तन्ते, संवेदनमपि च मूर्छादौ नास्तीति शक्यं वक्तुमिति फलवृत्ति-

[1]सर्वरस[2]लक्षणाढ्या [3]युक्ता ह्यङ्गैस्त्रयोदशभिः[4] ।

रपि तत्र कथं। तस्माच्चत्र सात्त्वत्येव वृत्तिः । यदि बाहुल्यापेक्षया वृत्तिमयं काव्यमिति व्यवहारो रूपकसमुदायापेक्षया खण्डस्यावृत्तिकत्वेऽपि समुदितस्य रूपकस्य वृत्तिमयत्वात् । यच्छकलीगर्भमतानुसारिणो* मूर्छादावात्मसंवित्तिलक्षणां पञ्चमीं वृत्तिं सकलकार्यनिवृत्त्यनुमेयां मूर्छाकर्मानुभावेन च फलेनावच्छिन्नामात्मव्यापाररूपां मन्यन्ते, न च परिस्पन्द एवैको व्यापार इति मनसिकृत्य तन्मतं भावानां बाह्यग्रहणस्वभावत्वमुपपादयद्भिः भट्टलोल्लटप्रभृतिभिः पराकृतमिति न फलवृत्तिर्वा काचिदिति चतस्र एव वृत्तयः (इति) ।

वयन्तु ब्रूमः। कोऽयमस्थानसन्त्रासः। यत्किञ्चिदिह नाट्ये समस्ति तच्चेद्वृत्तिष्वन्तर्भाव्यं तदाभवेदेतत्—न चैवम् । रङ्गो हि नाम का वृत्तिः, मृदङ्गपणववंशाद्या का वृत्तिरपि हि भवेत्। तस्माद्व्यापारः पुमर्थसाधको वृत्तिः स च सर्वत्रैव वर्ण्यत इत्यतो वृत्तयः, काव्यस्य मातृका इति, न हि किञ्चिद्व्यापारशून्यं वर्णनीयमस्ति । मदमूर्छादिवर्णनायामपि मनोव्यापारस्य सात्त्वत्याख्यस्य संभवात्, करुणादावपि च मनोदेहव्यापारसंभवेऽपि बाहुल्येन वाग्व्यापारसंभवाद् भारतीवृत्तिरुच्यते। वृत्त्यन्तरनिषेधस्तु तदङ्गानामपरिपूर्णत्वात् । न च कायवाङ्मनसव्यापारं तद्वैचित्र्यं वान्तरेणान्यः कश्चिद्व्यापारः संभवतीत्यसकृदुक्तम्। तस्मात्करुणप्रधाने भारती वृत्तिः परिदेवितबाहुल्यात्।

यत्तु "शृङ्गारहास्यकरुणैरिह कैशिकी स्यात्" इति कोहलेनोक्तं तन्मुनिमतविरोधादुपेक्ष्यमेव, तस्य तु यत्र यत्रानुल्बणा चित्तवृत्तिः सा सा कैशिकीत्याशयः। एवं प्रहसनभाणयोरपि वाग्व्यापारप्राधान्यादेव भारतीवृत्तिः, मूर्छादौ तु व्यापाराभावे वृत्त्यभाव एव। न हि सर्वं नाट्यं वृत्तिब्रह्मतया समर्थनीयमित्यलमतिप्रसक्त्या।

अथ सर्वान्ते सर्वरसमयत्वादविततस्वभावत्वाच्च संक्षेपेण शक्यव्युत्पत्तिदायिनीत्वेन प्रधानभूतत्वात्तदङ्गानां न नाटिकादिभाणान्तस-

1 भ मातृकायां वीथीलक्षणं वृत्त्यध्याये (अ-२०) भारतीवृत्तेरङ्गलक्षणरूपेण पठितम् । भ - वीथ्येकपुरुषहार्या नानावस्थान्तरात्मिकाकार्या । अस्या लक्षणमुक्तं वृत्तिविकल्पान्तरेणैव 2 न - सर्वरसभावयुक्ता विज्ञेया वीथिका यथैतस्याः। अङ्गानां वक्ष्येऽहं लक्षणमधुना यथोद्देशम् (मखिलं - ङ) 3 प - समन्विताङ्गैरियं त्रयोदशभिः 4 ङ - तथा त्रयोदशभिः * शाकलेय उद्भटः ।

वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा[1] ॥ ११२
अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः ।
[2]उद्घात्यकावलगितावस्पन्दितनाल्यसत्प्रलापाश्च ॥
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम् ।
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः ॥
[3]अथ वीथी संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि ।
पदानि त्वगतार्थानि[4] [5]ये नराः पुनरादरात् ॥ ११५
[6]योजयन्ति पदैरन्यैस्तदुद्घात्यक[7]मुच्यते ।

---

मस्तरूपकोपजीव्यत्वाद् वीथीं लक्षयति । एकहार्यैरित्याकाशपुरुषभाषितैरित्यर्थः । द्विहार्येति उक्तिप्रत्युक्तिवैचित्र्येणेत्यर्थः । अङ्गान्युद्दिशति—

उद्घात्यकावलगितावस्पन्दितनाल्यसत्प्रलापाश्च ।
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम् ।
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतानीति ।

इत्युदाहरणमात्रमेतदिति यावत् । एतानि क्रमेण लक्षयति पदानि त्वगतार्थानीति ।

---

1 न - द्विपात्रहार्या तथैकहार्या वा भ - वीथ्यास्तु लक्षणमहं व्याख्यास्याम्यनुपूर्वशः उद्घात्यक ..गण्डमथापि च । एतान्यङ्गानि यस्याः स्युः स्पष्टार्थानि त्रयोदश । रसाश्चाष्टौ तथा शुद्धाः सर्वे भावास्तथैव च । उत्तमाधममध्याभिर्युक्ता प्रकृतिभिस्तथा । एकहार्या द्विहार्या वा सा वीथी त्वभिसंज्ञिता 2 ङ - उद्घात्यकावलगिते त्ववस्पन्दितमेव च । (द - लगितकावस्पन्दितकं तथा ढ - अवास्पन्दि

असत्प्रलापश्च तथा प्रपञ्चो नालिकापि च ॥ (न - असंप्रलाप...वा.
वाक्कोल्यधिबलं चैव छलं व्याहारमेव च । (द - व्याहार एव च)
मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि च ॥ (ङ - मृदवः फ - वा.)

3 न - एतान्यङ्गानि नाट्यज्ञैर्वीथ्यङ्गानि त्रयोदश । ङ - त्रयोदश सदाङ्गानि वीथ्यामेतानि योजयेत् । लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः । 4 च - तुगतार्थानि भ - हि गतार्थानि 5 न - ये नराः स्वल्पबुद्धयः ङ - ये नराः दप - तदर्थगतये नराः भ - बुद्ध्वानाल्पबुद्धयः 6 न - पर्यायैरेव बोध्यन्ते भ - पश्चात्पदैः प्रपद्यन्ते भवेत्तु यथैव च 7 द - उद्घातकं ।

